THE

# KASHI SANSKRIT SERIES

*( HARIDAS SANSKRIT GRANTHAMALA )*

## NO. 96.

( Karmakanda Section No 9. )



# वर्षकृत्यदीप[redacted]:

कालनिर्णयव्रतोद्यापनस[redacted]ः ।



JAI KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

*Benares City.*

1932.

KASHI-SANSKRIT-SERIES

NO. 96

( Karmakāṇda Section, No. 9 )

THE

# VARSHAKRĪTYADĪPAKA

With

## KĀLANIRṆAYA AND VRATODYĀPAN

*By*

MAHAMAHOPADHYAYA

*Pandit Nityananda Panta Parvatiya*

and his pupil

*Pandit Gopal S'astri Nene*

Professor Govt. Sanskrit College, Benares.

*Edited by*

PANDIT VINAYAKA S'ASTRI TILLU

Vyākaraṇācharya & Dharmas'astri.



JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

1932

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालाया

९६



कर्मकाण्डविभागे (९) नवमं पुष्पम् ।

# वर्षकृत्यदीपकः

कालनिर्णयव्रतोद्यापनसहितः ।

महामहोपाध्याय पं० नित्यानन्दपन्त-पर्वतीय तदन्तेवासि-

नेने गोपालशास्त्रिविरचितः ।

व्याकरणाचार्य धर्मशास्त्रि पं० टिल्लूपाभिधविनायकशास्त्रिणा संशोधितः

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा. संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९८९

॥ श्रीगुरुः शरणम् ॥

# प्रास्ताविकम्—

धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु धर्म एव प्रथमः पुरुषार्थ इति स एव सर्वेषामापामरविद्वज्जनानां निःश्रेयससाधनमिति न तिरोहितं धर्मैकप्रवणानामिदानीन्तनसनातनधर्मानुसारिणां वर्णाश्रमधर्माभिमानिनाम् । तत्र

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

इति मन्वाद्युक्त्या धर्मे वेदस्य स्मृतेश्च प्रामाण्येन धर्मस्य वैदिकत्वं स्मार्तत्वमिति द्वैविध्यं सिध्यति । वैदिको धर्मश्च "चोदनालक्षणोऽर्थो धर्मः" इति जैमिन्युक्तलक्षण आधानादिकर्मकलापः । स्मार्तो धर्मस्तु मन्वादिस्मृतिप्रोक्तः संस्कारश्राद्धादिरूपः । तत्र कष्टप्रायेषु वैदिकधर्मेषु अस्मिन् घोरतरे अधर्मप्रचुरे कलिकाले अशक्यानुष्ठानतया साधारणजनानामप्रवृत्तेः स्मार्तधर्मानुष्ठानस्यैव प्राचुर्येण लोके व्यवहारो दृश्यते । स्मार्तेष्वपि धर्मेषु सर्वेषामास्तिकगृहस्थानां संस्कारकर्मसु अवश्यानुष्ठेयतया प्रवृत्तेः सर्वप्रथमतया साङ्गसंस्कारान् निरूपयितुमस्मद्गुरुवरैः सुगृहीतनामधेयैर्महामहोपाध्यायविरुदावलीविराजितैः श्री १०८ नित्यानन्दपन्त–पर्वतीयमहोदयैः प्रथमतः संस्कारदीपको भागद्वयेन निरमीयत । ततः "तदेतत्त्रयं शिक्षेत दमं दानं दयाम्" इति शतपथश्रुत्या,

तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।<br>द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥

इति बृहस्पतिना च कलौ दानधर्मस्य प्राशस्त्यबोधनाद् दानधर्मनिरूपणाय तुलादानादि–मूलशान्त्यादिनिरूपणात्मकः परिशिष्टदीपकाख्यो द्वितीयो भागः । मध्ये चान्तिमसंस्कारस्य साङ्गस्य निरूपणाय प्रसङ्गतश्चाशौचकालयतिकर्मणोश्च निरूपणाय अन्त्यकर्मदीपको, दर्शपूर्णमासाधाननिरूपणाय च कातीयेष्टिदीपको निरमायि ।

ततः नित्यनैमित्तिककर्मणामपि स्मार्तधर्मष्वेव अन्तर्भावात् चैत्रादिफाल्गुनान्तैकवर्षमध्ये अनुष्ठेयानां रामनवम्यादिव्रततत्पूजाकर्मणां निरूपणाय प्रसङ्गतश्च तत्कालनिरूपणाय प्रवृत्तो वर्षकृत्यदीपकाख्योऽयं पञ्चमो भागः । अस्मिंश्च पूर्वार्धमुत्तरार्धं चेति भागद्वयं वर्तते । तत्र पूर्वार्धे प्रकरणद्वयम् । तत्रापि सामान्यकालनिर्णयात्मकं प्रथमं, चैत्रादिद्वादशमासगतराम-

नवम्यादिखण्डकालनिर्णयात्मकं द्वितीयम्। उत्तरार्धेऽपि च प्रकरणद्वयम्–रामनवम्यादिव्रतविधिपूजाविधिनिरूपणात्मकं प्रथमं, तदुद्यापनं द्वितीयमिति

तदिमं वर्षकृत्यदीपकं प्रथमत एवाऽस्मद्गुरुवरैस्त्रिकालदर्शिभिः स्वाभिप्रायकथनेन तत्रतत्रत्यविशेषनिर्णयप्रकथनेन च रचयितुं समादिष्टोऽहं गुरुचरणसरोरुहेऽहर्निशं संसेवमानो रचयितुं मुद्रापयितुं च प्रवृत्तः कथञ्चिन्नवरात्रपूजाप्रयोगान्तमेव विरच्य मध्ये एवाऽस्मद्दैवहतकदुर्विलासनिमित्तं गुरुवराणामचिरादेवातुरसन्न्यासदीक्षितानां महामहिमकरालकालकवलिततयकिंकर्तव्यतामूढः शोकसागरनिमग्नोऽभवम्। पुनरपि गुर्वादेशं पुरस्कृत्य स्वात्मानं तेषामेवोपदेशवचनस्मृतिभिः कथञ्चित्सान्त्वयित्वा महता प्रयासेन नानाविधसंकटान्यनुभूयापि तैरेव प्रदर्शितं मार्गमनुसृत्य तदीयावशिष्टभागं विरचितो मुद्रापितश्च। श्राद्धकृत्यदीपकनिर्माणायाऽऽज्ञप्तः कारितोपक्रमोऽस्म्यहमद्य यावदनेकसांसारिककार्यव्यग्रतया सफलतामप्राप्तोऽपि शीघ्रमेव श्राद्धकृत्यदीपकं श्रीमतां करकमलेषु समर्प्य समापितगुरुचरणादेशोऽचिरादेव भवेयमिति मदीया धारणा। श्रीमतां गुरुवराणां जीवनचरित्रमपि द्रुतमेव श्रीमतां दृष्टिपथं यास्यतीति मदीयोऽस्यर्थमिदानीमभिलाषो वर्तते।

तदयं वर्षकृत्यदीपको मदीयाज्ञानेन दृष्टिदोषेण सीसकाक्षरयोजकदोषैणैतादृशान्यकारणैश्च संभावितानेकदोषोऽपि हंसक्षीरन्यायेन तदीयगुणैकपक्षपातिभिस्तत्रभवद्भिः श्रीमद्भिः स्वीयव्रतोद्यापनाद्यनुष्ठानोपयोगितां नेष्यन्प्रोत्साहयिष्यते चैतत्प्रकाशकः श्रेष्ठिश्रीजयकृष्णदासमहोदय इति शम्।

गवर्नमेण्ट संस्कृत कालिज
बनारस,
आश्विनकृष्ण सप्तमी सं० १९८९.

विदुषामनुचरो—
**गोपाल शास्त्री नेने**

# वर्षकृत्यदीपकस्य विषयानुक्रमणिका ।


| विषयः | पृ० |
|---|---|
| ...ब्दनिरूपणम् | १ |
| ...यननिरूपणम् | ३ |
| ...तुनिरूपणम् | ४ |
| ...क्रान्तिनिरूपणम् | ६ |
| ...लमासनिरूपणम् | ९ |
| ...तिथिनिरूपणम् | १४ |
| ...कभक्ते तिथिनिरूपणम् | १९ |
| ...क्तनिरूपणम् | २० |
| ...तपरिभाषानिरूपणम् | २३ |
| ...शौचे व्रतनिरूपणम् | २९ |
| ...गपद्व्रतद्वये कर्तव्यतानिरूपणम् | ३१ |
| ...कादशीनिरूपणम् | ३२ |
| ...हणनिरूपणम् | ३४ |
| ...त्रशुक्लप्रतिपदि वत्सरारम्भनिरूपणम् | ४२ |
| ...त्रशुक्लाष्टमीनिरूपणम् | ४२ |
| ...त्रे रामनवमीनिरूपणम् | ४३ |
| ...षसंक्रान्तिनिरूपणम् | ४५ |
| ...शाखे अक्षय्यतृतीयानिरूपणम् | ४५ |
| ...शाखशुक्लसप्तमीनिरूपणम् | ४८ |
| ...शाखशुक्लचतुर्दश्यां नृसिंहजयन्तीनि-रूपणम् | ४८ |
| ...षसंक्रान्तिनिरूपणम् | ४९ |
| ...येष्ठे दशहरानिरूपणम् | ४९ |
| ...येष्ठे वटसावित्रीव्रतनिरूपणम् | ५० |
| ...आषाढशुक्लद्वितीयायां रथोत्सवनि-रूपणम् | ५२ |
| आषाढशुक्लैकादश्यां विष्णुशयनोत्स-वनिरूपणम् | ५२ |
| ...आषाढे चातुर्मास्यनिरूपणम् | ५२ |
| आषाढशुक्लपौर्णमास्यां व्यासपूजानि-रूपणम् | ५४ |
| कर्कसंक्रान्तिनिरूपणम् | ५४ |
| श्रावणशुक्लपञ्चम्यां नागपूजानिरूपणम् | ५५ |
| श्रावणे उपाकर्मनिरूपणम् | ५५ |
| श्रावणे रक्षाबन्धननिरूपणम् | ६६ |
| सिंहसंक्रान्तिनिरूपणम् | ६७ |
| भाद्रकृष्णचतुर्थीनिरूपणम् | ६७ |
| भाद्रे जन्माष्टमीनिरूपणम् | ६८ |
| भाद्रे जन्माष्टमीपारणनिरूपणम् | ७० |
| भाद्रामावास्यायां कुशग्रहणनिरूपणम् | ७३ |
| भाद्रशुक्लतृतीयायां हरतालिकाव्रत-निरूपणम् | ७४ |
| भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रत निरूपणम् | ७४ |
| भाद्रशुक्लपञ्चम्यां ऋषिपञ्चमीनिरूपणम् | ७५ |
| भाद्रे सूर्यषष्ठीनिरूपणम् | ७५ |
| भाद्रशुक्लसप्तम्यां मुक्ताभरणनिरूपणम् | ७५ |
| भाद्रशुक्लाष्टम्यां दूर्वाष्टमीव्रतनिरूपणम् | ७६ |
| भाद्रशुक्लद्वादश्यां पारणनिरूपणम् | ७६ |
| भाद्रे दुग्धव्रतनिरूपणम् | ७७ |
| भाद्रशुक्लचतुर्दश्याम् अनन्तव्रत-निरूपणम् | ७८ |
| भाद्रे नान्दीमुखश्राद्धनिरूपणम् | ७९ |
| कन्यासंक्रान्तिनिरूपणम् | ८० |
| आश्विने महालयनिरूपणम् | ८१ |
| आश्विने कपिलाषष्ठीनिरूपणम् | ८४ |
| आश्विनकृष्णे महालक्ष्म्यष्टमी निरूपणम् | ८५ |
| आश्विनकृष्णे मातृनवमीनिरूपणम् | ८५ |
| आश्विने गजच्छायानिरूपणम् | ८७ |
| आश्विनकृष्णचतुर्दश्यां शस्त्रादिहत-श्राद्धनिरूपणम् | ८८ |

| विषयः | पृ० |
|---|---|
| आश्विनशुक्लप्रतिपदि मातामहश्राद्ध-निरूपणम् | ८९ |
| आश्विनशुक्ले नवरात्रनिरूपणम् | ९० |
| आश्विनशुक्ले मूलनक्षत्रे पुस्तकेषु सरस्वतीस्थापननिरूपणम् | ९२ |
| आश्विनशुक्ले महाष्टमीनिरूपणम् | ९३ |
| नवरात्रपारणनिर्णयः | ९४ |
| आश्विने सूतकादौ नवरात्रपारणनिरूपणम् | ९५ |
| आश्विनशुक्लदशम्यां देवीविसर्जन-निरूपणम् | ९६ |
| विजयादशमीनिरूपणम् | ९६ |
| आश्विनशुक्लपूर्णिमायां कोजागरव्रत-निरूपणम् | ९९ |
| तुलासंक्रान्तिनिरूपणम् | ९९ |
| कार्तिके स्नाननिरूपणम् | ९९ |
| कार्तिककृष्णे करकचतुर्थीनिरूपणम् | १०० |
| कार्तिककृष्णे गोवत्सद्वादशीनिरूपणम् | १०० |
| कार्तिककृष्णत्रयोदश्यां यमदीपदान-निरूपणम् | १०० |
| कार्तिककृष्णे नरकचतुर्दशीनिरूपणम् | १०१ |
| कार्तिककृष्णामायां लक्ष्मीपूजन-निरूपणम् | १०१ |
| कार्तिकशुक्लप्रतिपदि गोक्रीडन-निरूपणम् | १०२ |
| कार्तिकशुक्ले भातृद्वितीयानिरूपणम् | १०३ |
| कार्तिशुक्लनवम्यां युगादिनिरूपणम् | १०४ |
| कार्तिशुक्लैकादश्यां भीष्मपञ्चकव्रत-निरूपणम् | १०५ |
| कार्तिकशुक्लद्वादश्यां पारणनिरूपणम् | १०५ |
| कार्तिकशुक्ले वैकुण्ठचतुर्दशी ,, | १०५ |
| कार्तिकपौर्णमासीनिरूपणम् | १०६ |
| वृश्चिकसंक्रान्ति ,, | १०६ |
| मार्गशीर्षकृष्णे कालाष्टमीनिरूपणम् | १०६ |
| मार्गशीर्षशुक्लचतुर्दश्यां पिशाचमोचने श्राद्धनिरूपणम् | १०७ |
| मार्गशीर्षपूर्णिमायां दत्तजयन्तीव्रत-निरूपणम् | १०७ |
| धनुः संक्रान्ति निरूपणम् | १०८ |
| मकरसंक्रान्ति ,, | १०८ |
| माघकृष्णामायामर्धोदय निरूपणम् | ११० |
| माघशुक्ले तिलचतुर्थीनिरूपणम् | ११० |
| माघशुक्ले श्रीपञ्चमीनिरूपणम् | १११ |
| माघशुक्ले रथसप्तमीनिरूपणम् | ११२ |
| माघशुक्ले भीष्माष्टमीनिरूपणम् | ११२ |
| माघशुक्ले भीष्मद्वादशी ,, | ११३ |
| फाल्गुनकृष्णे शिवरात्रिव्रतनिरूपणम् | ११३ |
| शिवरात्रिपारणनिरूपणम् | ११४ |
| फाल्गुनशुक्ले गोविन्दद्वादशीनिरूपणम् | ११५ |
| फाल्गुनशुक्लपूर्णिमायां होलिकानिरूपणम् | ११५ |
| मीनसंक्रान्तिनिरूपणम् | ११७ |
| चैत्रकृष्णप्रतिपदिवसन्तोत्सवनिरूपणम् | ११७ |
| चैत्रकृष्णत्रयोदश्यां वारुण्यादिनिरूपणम् | ११८ |
| चैत्रामावास्यानिरूपणम् | ११८ |
| एकादशीनिरूपणम् | ११८ |
| स्मार्तैकादशीनिरूपणम् | १२३ |
| अमावास्या निरूपणम् | १२५ |
| रामनवमीव्रतविधिः | १२९ |
| रामनवमीव्रतपूजाप्रयोगः | १३१ |
| मेषसंक्रमणशान्तिप्रयोगः | १४२ |
| नृसिंहजयन्तीव्रतविधिः | १४५ |
| ,, ,, पूजाप्रयोगः | १४६ |
| वटसावित्रीव्रतविधिः | १५२ |
| वटसावित्रीव्रतपूजाप्रयोगः | १५३ |
| दशहराव्रतविधिः | १६१ |
| ,, पूजाप्रयोगः | १६२ |

| विषयः | पृ० |
|---|---|
| निर्जलैकादशीव्रतविधिः | १६४ |
| ,, ,, पूजाप्रयोगः | १६४ |
| चातुर्मास्यव्रतग्रहणविधिः | १६५ |
| ,, ,, प्रयोगः | १६५ |
| हरकालीव्रतपूजाविधिः | १६६ |
| ,, पूजाप्रयोगः | १६७ |
| नागपञ्चमीव्रतपूजाविधिः | १६८ |
| ,, ,, पूजाप्रयोगः | १६९ |
| संकष्टचतुर्थीव्रतविधिः | १७० |
| ,, ,, पूजाप्रयोगः | १७१ |
| जन्माष्टमीव्रतविधिः | १७९ |
| ,, ,, पूजाप्रयोगः | १८१ |
| हरतालिकाव्रतविधिः | २०१ |
| ,, ,, पूजाप्रयोगः | २०२ |
| सिद्धिविनायकव्रतविधिः | २१० |
| ,, ,, चतुर्थीपूजाप्रयोगः | २११ |
| ऋषिपञ्चमीव्रतविधिः | २१८ |
| ,, , पूजाप्रयोगः | २२० |
| अमुक्ताभरणसप्तमीव्रतविधिः | २२७ |
| ,, ,, ,, पूजाप्रयोगः | २२८ |
| दूर्वाष्टमीव्रतविधिः | २३२ |
| ,, ,, पूजाप्रयोगः | २३३ |
| महालक्ष्मीव्रतविधिः | २३५ |
| ,, ,, पूजाप्रयोगः | २३६ |
| वामनद्वादशीव्रतपूजाप्रयोगः | २४७ |
| अनन्तव्रतविधिः | २४८ |
| अनन्तव्रतपूजाप्रयोगः | २४९ |
| नवरात्रव्रतविधिः | २५५ |
| ,, ,, पूजाप्रयोगः | २५७ |
| पुस्तकेषु सरस्वतीस्थापनम् | २६७ |
| सरस्वतीपूजाप्रयोगः | २६८ |
| महाष्टमीव्रतविधिः | २६९ |
| महाष्टमीपूजाप्रयोगः | २७० |
| दशम्यां देवीविसर्जनम् | २७१ |
| श्रवणे सरस्वतीविसर्जनम् | २७२ |
| विजयादशम्याम् अपराजितापूजाविधिः | २७२ |
| ,, ,, सीमोल्लङ्घनविधिः | ,, |
| ,, ,, शमीपूजनविधिः | २७३ |
| अपराजितापूजाप्रयोगः | ,, |
| कोजागरव्रतविधिः | २७४ |
| कोजागरव्रतपूजाप्रयोगः | २७५ |
| तुलासंक्रमणशान्तिप्रयोगः | २७६ |
| आकाशदीपदानविधिः | २७७ |
| कार्तिककृष्णद्वादश्यां गोवत्सपूजाविधिः | २७८ |
| ,, ,, त्रयोदश्यां यमदीपदानविधिः | २७९ |
| ,, चतुर्दश्यां अभ्यंगस्नानविधिः | २७९ |
| कार्तिककृष्णामायां महालक्ष्मीपूजाप्रयोगः | २८० |
| गोवर्धनपूजाविधिः | २८२ |
| ,, ,, प्रयोगः | २८२ |
| भ्रातृद्वितीयाविधिः | २८३ |
| कार्तिशुक्लनवम्यां कूष्माण्डदानविधिः | २८३ |
| कार्तिकशुक्लैकादश्यां प्रबोधोत्सवः | २८४ |
| कार्तिकशुक्लद्वादश्यां चातुर्मास्यव्रतसमाप्तिः | २८४ |
| कार्तिकशुक्ले वैकुण्ठचतुर्दशीविधिः | २८५ |
| कार्तिकपूर्णिमाविधिः | ,, |
| मार्गशीर्षे कालाष्टमीविधिः | ,, |
| माघकृष्णे संकष्टचतुर्थीव्रतविधिः | २८६ |
| माघकृष्णामायां अर्धोदययोगः | २८६ |
| माघशुक्ले ढुण्ढिराजचतुर्थीविधिः | २८७ |
| श्रीपञ्चमीव्रतपूजाप्रयोगः | २८७ |
| अचलासप्तमीव्रतविधिः | २९० |
| ,, ,, पूजाप्रयोगः | २९१ |
| भीष्माष्टमीव्रतविधिः | २९२ |
| फाल्गुनकृष्णाष्टम्यां सीताजन्म | २९२ |

| विषयः | पृ० |
|---|---|
| शिवरात्रिव्रतविधिः | २९३ |
| ,, ,, पूजाप्रयोगः | २९४ |
| होलिकापूजनविधिः | २९८ |
| ,, पूजाप्रयोगः | २९९ |
| चैत्रकृष्णप्रतिपदिधूलिवन्दनविधिः | ३०० |
| उद्यापनविधिः | ३०३ |
| सर्वतोभद्रमण्डलविधिः | ३०४ |
| लिङ्गतोभद्रमण्डलविधिः | ३०६ |
| एकादशीव्रतोद्यापनविधिः | ३०७ |
| ,, ,, प्रयोगः | ३०९ |
| रामनवमीव्रतोद्यापनविधिः | ३२० |
| ,, ,, प्रयोगः | ३२२ |
| वैशाखस्नानविधिः | ३२४ |
| ,, ,, प्रयोगः | ३२६ |
| ,, व्रतोद्यापनप्रयोगः | ३२८ |
| नृसिंहचतुर्दशीव्रतोद्यापनविधिः | ३३० |
| वटसावित्रीव्रतोद्यापनविधिः | ३३२ |
| वटसावित्रीव्रतोद्यापनप्रयोगः | ३३३ |
| संकष्टचतुर्थीव्रतोद्यापनविधिः | ३३६ |
| ,, ,, ,, प्रयोगः | ३३७ |
| जन्माष्टमीव्रतोद्यापनविधिः | ३४० |
| ,, ,, ,, प्रयोगः | ३४२ |
| हरितालिकाव्रतोद्यापनविधिः | ३४६ |
| ,, ,, ,, प्रयोगः | ३४७ |
| ऋषिपञ्चमीव्रतोद्यापनविधिः | ३४९ |
| ,, ,, ,, प्रयोगः | ३५१ |
| अनन्तचतुर्दशीव्रतोद्यापनविधिः | ३५३ |
| ,, ,, ,, प्रयोगः | ३५७ |
| महालक्ष्मीव्रतोद्यापनविधिः | ३५९ |
| ,, ,, ,, प्रयोगः | ३६१ |
| कार्तिकस्नानविधिः | ३६४ |
| कार्तिकस्नानव्रतोद्यापनविधिः | ३६६ |
| कार्तिकस्नानप्रयोगः | ३६७ |
| कार्तिकस्नानोद्यापनप्रयोगः | ३६९ |

| विषयः | पृ० |
|---|---|
| तुलसीविवाहविधिः | ३७१ |
| ,, प्रयोगः | ३७२ |
| भीष्मपञ्चकव्रतविधिः | ३७८ |
| ,, ,, प्रयोगः | ३८० |
| विष्णुलक्षवर्तिव्रतविधिः | ३८३ |
| विष्णुलक्षवर्तिव्रतोद्यापनविधिः | ३८४ |
| विष्णुलक्षवर्तिव्रतप्रयोगः | ३८८ |
| विष्णुलक्षवर्तिव्रतोद्यापनप्रयोगः | ३९३ |
| बिल्वलक्षवर्तिव्रतविधिः | ३९८ |
| बिल्वलक्षवर्तिव्रतोद्यापनविधिः | ३९९ |
| बिल्वलक्षवर्तिव्रतोद्यापनप्रयोगविधिः | ४०० |
| बिल्वलक्षवर्तिव्रतोद्यापनप्रयोगः | ४०१ |
| रुद्रलक्षवर्तिव्रतविधिः | ४०४ |
| तुलसीलक्षपूजाव्रतविधिः | ४०४ |
| तुलसीलक्षपूजाव्रतप्रयोगः | ४०५ |
| तुलसीलक्षपूजाव्रतोद्यापनप्रयोगः | ४०७ |
| माघस्नानविधिः | ४०८ |
| माघस्नानप्रयोगः | ४०९ |
| शिवरात्रिव्रतोद्यापनविधिः | ४१० |
| ,, ,, प्रयोगः | ४१२ |
| प्रदोषव्रतविधिः | ४१६ |
| ,, प्रयोगः | ४१६ |
| प्रदोषव्रतोद्यापनविधिः | ४२० |
| ,, ,, प्रयोगः | ४२१ |
| रविवारव्रतविधिः | ४२३ |
| ,, व्रतोद्यापनविधिः | ४२४ |
| रविवारव्रतपूजाप्रयोगः | ४२६ |
| रविवारव्रतोद्यापनप्रयोगः | ४३२ |
| सोमवारव्रतविधिः | ४३७ |
| सोमवारव्रतोद्यापनविधिः | ४३७ |
| सोमवारव्रतपूजाप्रयोगः | ४३९ |
| सोमवारव्रतोद्यापनप्रयोगः | ४४१ |
| भौमवारव्रतविधिः | ४४३ |
| भौमवारव्रतोद्यापनविधिः | ४४४ |
| भौमवारव्रतपूजाप्रयोगः | ४४६ |
| भौमवारव्रतोद्यापनप्रयोगः | ४५२ |

श्रीगणेशाय नमः । श्रीसद्गुरवे नमः ।

# वर्षकृत्यदीपकः ।

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥ १ ॥
पर्वतीयेन पन्तेन नित्यानन्देन धीमता ।
क्रियते बालबोधार्थं वर्षकृत्यप्रदीपकः ॥ २ ॥

तत्रादौ सङ्क्षेपतः खण्डकालो निरूप्यते। स च षोढा-- अब्दः, अयनम्, ऋतुः, मासः, पक्षः, दिवस इति ।

तत्राब्दस्त्रिविधः-चान्द्र-सौर-सावनभेदात् । यत्र तिथि-विशेषरूपं स्पष्टलिङ्गं, यथा—

वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः ।
शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः ॥

इत्यादौ शुक्लप्रतिपत्, तत्र—

ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् ।
ततः प्रभृत्यनुदिनं तिलकालंकृतं मुखम् ॥
धार्यं संवत्सरं यावच्छशिनेव नभस्तलम् ॥

इत्यादितिलकव्रतादौ चान्द्रः सँव्वत्सरः । एवं "शुक्लपक्षे चतुर्दश्याम्" इत्याद्युपक्रम्य "नववर्षाणि पञ्च च" इति सँव्वत्सरावृत्तिसाध्ये अनन्तादिव्रते च चान्द्र एव संवत्सरः, तिथि-विशेषरूपलिङ्गात् । यत्र च—

मेषसंक्रमणे भानोः सोपवासो नरोत्तमः ।

इत्यादौ सङ्क्रमरूपं लिङ्गं, तत्र—

कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु नचापि जन्म ।

इति संवत्सरसाध्ये सुजन्मावाप्तिव्रते—

अयने विषुवे चैव त्रिरात्रोपोषितो नरः ।

इत्याद्ययनादिरूपलिङ्गवति—

एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियाम् ।

इति धान्यदानादिव्रते च सौरः संवत्सरः ॥

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥

इति द्वादशाहोरात्रसाध्यानां प्राजापत्यानां षष्ट्युत्तरशतत्रयरूपं द्वादशाब्दं व्रतं यदुपदिष्टं, तस्य चान्द्रसौराभ्यामनुष्ठानासंभवात् तत्र सावन एव अब्दः । एवं द्वादशाब्दादिस्थाने नवाब्दादावपि । एवं—

सावनेनैव कर्तव्या शत्रूणां चाप्युपासना ।

इति समयपालनादौ विशेषवचनात् सावन एव अब्दः । यत्र लिङ्गं वचनं वा नोपलभ्यते "एताः संहिता नानन्तेवासिने प्रब्रूयात् नासंवत्सरवासिने" इति व्यतिरेकमुखेनाम्नानात् गुरुकुलवासादौ, तत्र विकल्प एव । चान्द्रैः सौरैः सावनैर्वा द्वादशमासैः चान्द्राद्यब्दम् । मलमासे तु सति षष्टिदिनात्मक एको मास इति द्वादशमासत्वमविरुद्धम् । उक्तं च व्यासेन—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः । इति ।

तत्र चान्द्रोऽब्दः षष्टिभेदः । तदाह गार्ग्यः—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
चित्रभानुः सुभानुश्च तारणः पार्थिवोऽव्ययः ॥
सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥

हेमलम्बो विलम्बोऽथ विकारी शार्वरी प्लवः ।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत् ।
परिधावी प्रमादी च आनन्दो राक्षसो नलः ॥
पिङ्गलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोधनः क्षयः ॥ इति ।

आर्ष्टिषेणः—

स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा ।
नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता ॥ इति ।

अयनं सौरर्तुत्रयात्मकम् । तच्च द्विविधम्—दक्षिणमुत्तरं च । कर्कसङ्क्रान्तिमारभ्य मकरसङ्क्रान्तिं यावत् दक्षिणायनम् । मकरसङ्क्रान्तिमारभ्य कर्कसंक्रान्तिं यावदुत्तरायणम् । उत्तरायणविनियोगमाह सत्यव्रतः—

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् ॥

दक्षिणायनविनियोगमाह वैखानसः—

मातृभैरववाराहनरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने ॥ इति ।

मातृभैरवेत्याद्युग्रकर्मोपलक्षणम् ।

उग्रे कर्मणि सौम्ये च स्तोऽयने दक्षिणोत्तरे ॥

इति माधवोक्तेः । उग्रकर्म दक्षिणायनेऽपि विधेयं न तु दक्षिणायन एवेति, वैशब्दस्याप्यर्थकत्वात् । दक्षिणायने निषिद्धाया देवप्रतिष्ठाया देवविशेषे प्रतिप्रसवमात्रे लाघवात् । अस्यापवादः काशीखण्डे पठ्यते—

सदा कृतयुगं चास्तु सदा चास्तूत्तरायणम् ।
सदा महोदयश्चास्तु काश्यां निवसतां सताम् ॥ इति ।

एतन्मूलकतयैव दक्षिणायनेऽपि देशान्तरादागतानां यात्रिकाणां व्रतोद्यापनाद्याचारो दृश्यते। कृष्णम्भट्टस्तु अस्त्विवत्याशीर्लोटः कृतयुगादिकार्याप्रापकत्वादपवादत्वाभ्युपगमवाद एवेत्याह।

ऋतुर्मासद्वयात्मकः। मलमासे तु मासद्वयात्मक एको मासः "षष्ट्या तु दिवसैर्मासः" इति पूर्वोक्तवचनात्। तेन मासद्वयात्मकत्वमविरुद्धम्। स द्वेधा चान्द्रः सौरश्च। चैत्रारम्भो वसन्तादिश्चान्द्रः, मीनारम्भो मेषारम्भो वा सौरः। "मीनमेषयोर्मेषवृषयोर्वा वसन्तः" इति बौधायनोक्तेः। अनयोर्विनियोगमाह त्रिकाण्डमण्डनः—

श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु।
तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम्॥

अत्र तदभावे त्विति कथनं सौरर्तुगौणत्वार्थम्। एवं कृष्णादिमासानां गौणत्वात्तद्घटितमासद्वयात्मकर्तूनामपि गौणत्वं द्रष्टव्यम्। एवं च "वसन्ते ब्राह्मणोऽग्निमादधीत" "वसन्ते ब्राह्मणमुपनयीत" इत्यादौ नानैव वाक्यार्थः। अन्यथा मुख्यत्वगौणत्वविवेचनवैयर्थ्यापत्तेः। तत्र मुख्यवाक्यार्थे शुक्लादिचान्द्रमासद्वयघटितो मुख्य एव वसन्तः। कृष्णादिचान्द्रमासद्वयघटितस्य वसन्तस्य गौणत्वात्सौरमासद्वयघटितस्य तस्य गौणतरत्वाच्च मुख्यासम्भव एव तावाश्रयणीयौ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्॥

इति मनुवचनात्। तथा च श्रौतक्रियाणां मुख्यत्वात्तत्र मुख्यस्य चान्द्रर्तोर्विनियोगः, स्मार्तक्रियाणामप्रधानत्वात्तत्र गौणस्य सौरर्तोर्विनियोग इत्येवं व्यवस्था नाश्रयणीया। श्रौतस्मार्तक्रिया इत्युक्तवचनेन स्वरसतः सर्वासामेव क्रियाणामुत्सर्गतो

मुख्यचान्द्रर्तुकर्तव्यत्वप्रतीतेः । चान्द्रमसर्तुषु इत्यत्रापि चान्द्रमुख्यगौणर्तुभ्यां गौणमुख्यभावोऽपि विवक्षितः । अन्यथा सौरर्तुना गौणभावप्रदर्शनासङ्गतेः । एवं "शरदि वैश्यम्" इत्यादावपि. बोध्यम् । एवं—

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति ।

इत्यादावृतुघटकत्वेन मुख्यचान्द्रमासग्रहणे मृताहे श्राद्धं न स्यादिति मृततिथेर्मृततिथिं यावच्चान्द्रो मासः तद्युग्मं चर्तुरिति, तत्र मासानां गौणत्वेन ऋतुपदं गौणमेवेति बोध्यम् ।

द्विविधोऽपि ऋतुः षोढा—वसन्तो, ग्रीष्मो, वर्षाः, शरद्, हेमन्तः, शिशिर इति । मासस्त्रेधा–सावनः सौरश्चान्द्रश्च । त्रिंशद्दिनः सावनः । अर्कसङ्क्रान्तेरपरार्कसङ्क्रान्त्यवधिः सौरः । यद्यपि हेमाद्रिमाधवाद्यालोचनेन मेषस्थसूर्यसमाप्तामावास्याकत्वं चैत्रत्वमिति लक्षणाच्च मेषसङ्क्रान्तेश्चैत्रत्वं प्रतीयते, तथापि मेषसङ्क्रमे दर्शद्वये सति वैशाखस्यैवाधिक्यात्तत्पूर्वभावित्वेन मीनस्यैव चैत्रत्वं युक्तम् । एवं च मेषादीनां वैशाखादित्वमेव युज्यते । अत एव वैशाखकार्तिकमाघस्नानसमकक्षतया मेषतुलामकरस्नानमेवाचरन्ति शिष्टाः । एवं च मीनस्थसूर्यारब्धशुक्लप्रतिपदादित्रिंशत्तिथिकत्वं चैत्रत्वमिति चैत्रलक्षणम् । अत एवाधिमासे पूर्वोक्तचैत्रलक्षणस्याभावस्येन सङ्क्रमनाच्चैत्रमासत्वं सुस्थितं भवति । अन्यथा मीनसङ्क्रान्तौ दर्शद्वयपाते द्वितीयामावास्याया मीनस्थसूर्ये पातान्मीनस्थसूर्यसमाप्तामावास्याकत्वमिति फाल्गुनलक्षणगमनात्फाल्गुनत्वं प्रसज्येत, मेषस्थसूर्यसमाप्तामावास्याकत्वरूपचैत्रलक्षणागमनाच्च चैत्रत्वं न स्यात् । अतस्तद्वारणार्थं

षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः ।

इत्युक्तदिशा मेषस्थसूर्यसमाप्तामावास्याकत्वरूपं चैत्रत्वं षष्टिदिनात्मकस्य मासस्य सिद्ध्यतीति तत्पूर्वभागत्वादधिकमासस्य

चैत्रत्वं समर्थितं स्यात् । यद्यपि मीनस्थसमाप्तामावास्याकत्वरूपं फाल्गुनत्वमपि फाल्गुनोत्तरभागत्वादधिमासे प्रसज्यते, तथापि—

पूर्वार्धं तु परित्यज्य उत्तरार्धं शुभं भवेत् ।

इत्युक्त्याऽधिमासस्योत्तरमासशेषत्वप्रतिपादनाच्चैत्रमासशेषत्वमेव न फाल्गुनशेषत्वम् इति क्लेशेन वारणं स्यात् । तस्मान्मीनस्थसूर्यारब्धशुक्लप्रतिपदादित्रिंशत्तिथिकत्वं चैत्रत्वमित्येव युक्तम् । एवं मेषादिस्थसूर्यारब्धशुक्लप्रतिपदादित्रिंशत्तिथिकत्वं वैशाखादीनां लक्षणमुन्नेयम् ।

सौरमासप्रसङ्गात्सङ्क्रान्तिनिर्णय उच्यते । तत्र—

पूर्वतोऽपि परतोऽपि सङ्क्रमात्पुण्यकालघटिकास्तु षोडश ।

इति सामान्यतः पुण्यकालः सर्वैरुक्तः । विशेषस्तूच्यते—

प्रागूर्ध्वं दश मेषे स्युर्वृषे पूर्वास्तु षोडश ।
मिथुने षोडश परास्त्रिंशत्पूर्वास्तु कर्कटे ॥
सिंहे षोडश पूर्वास्तु कन्यायां षोडशोत्तराः ।
पूर्वाः परा दश घटे पूर्वाः षोडश वृश्चिके ॥
पराः षोडश कोदण्डे मकरे विंशतिः पराः ।
पूर्वाः षोडश कुम्भे च मीने तद्वत्पराः स्मृताः ॥

घटे तुलायां, कोदण्डे धनुषि ।

याप्युत्तरा पुण्यतमा मयोक्ता सायं भवेत्सा यदि साऽपि पूर्वा ।
पूर्वा तु योक्ता यदि सा विभाते साप्युत्तरा रात्रिनिषेधतः स्यात् ॥

इदं 'कर्के झषे' इत्यादि वक्ष्यमाणं च वचनं कर्कमकरसंक्रान्तिनिरूपणप्रस्तावे व्याख्यास्यते ।

अर्वाङ्निशीथाद्यदि सङ्क्रमः स्यात्पूर्वेऽह्नि पुण्यं परतः परेऽह्नि ।
आसन्नयामद्वयमेव पुण्यं निशीथमध्ये तु दिनद्वयं स्यात् ॥

अस्यार्थो मेषसंक्रान्तिनिरूपणप्रस्तावे स्पष्टीकरिष्यते ।

कर्के झषेऽप्येवमिति ह्युवाच हेमाद्रिसूरिश्च तथाऽपरार्कः ॥

झषः प्रदोषे यदि वार्धरात्रे परेऽह्नि पुण्यं त्वथ कर्कटश्चेत् ।
प्रभातकाले यदि वा निशीथे पूर्वेऽह्नि पुण्यमिति माधवार्यः ॥
अत्रोपवासमाह वृद्धवशिष्ठः—

अयने सङ्क्रमे चैव ग्रहणे चन्द्रसूर्ययोः ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥

अत्रोपवासः सङ्क्रमदिने, दानादि तु पुण्यकालदिने इत्याचार्यचूडामणिः । विधिलाघवात्पुण्यकालदिन एवोभयमिति वृद्धाः । दानं तु "मेषसङ्क्रमणे भानोः"इत्यादिना प्रपञ्चितं निर्णयसिन्धौ ।

सङ्क्रान्त्यादावुपवासश्च पुत्रिगृहस्थातिरिक्तैः कार्यः ।
आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्तव्यः पुत्रिणा गृहिणा तथा ॥

इति जैमिनिवचनात् । अयनेऽपि पुण्यकालमाह जाबालिः—

सङ्क्रान्तिषु यथाकालस्तदीयेऽप्ययने तथा ।
अयने विंशतिः पूर्वा मकरे विंशतिः परा ॥ इति ।

मकरायने पूर्वा विंशतिर्घटिकाः पुण्याः । मकरसङ्क्रान्तौ तु पश्चाद्विंशतिः । अन्यत्रायने तत्सङ्क्रान्तिवदित्यर्थः । सङ्क्रान्तौ श्राद्धमुक्तं मात्स्ये—

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
सङ्क्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

मङ्गलकृत्येषु विशेषमाह नारदः—

त्याज्याः सूर्यस्य सङ्क्रान्तेः पूर्वतः परतस्तथा ।
विवाहादिषु कार्येषु नाड्यः षोडश षोडश ॥

षोडशेति पुण्यकालोपलक्षणम् ।

सङ्क्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
सायं सन्ध्यां न कुर्वीत कुर्वंश्च पितृहा भवेत् ॥

इति कर्मोपदेशिन्यां व्यासोक्तेः सायं पुण्यकाले सन्ध्यानिषेधं केचिदाहुः। तन्निर्मूलमिति कमलाकरभट्टः।

पक्षयुगात्मकश्चान्द्रो मासः। स द्वेधा-शुक्लादिरमान्तः, कृष्णादिः पूर्णिमान्तश्च। तथा च त्रिकाण्डमण्डनः—

चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा।

देशभेदेन तद्व्यवस्थां च स एवाह—

कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन।
येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे॥

कर्म-वर्ण-विशेषेषु "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" "सौरो मासो विवाहादौ"

तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत्॥

इत्यादीनां व्यवस्थापकवचनानां सद्भावादस्य वचनस्य सङ्कल्प एव विषयः, समाचारात्। एवं च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि सङ्कल्पे विन्ध्योत्तरवासिनां शुक्लादिमासाङ्गीकर्तॄणामपि शुक्लाद्युल्लेखाचाराभावात् कृष्णादेरेवोल्लेखः। विन्ध्यदक्षिणे तु शुक्लादिर्न तु गौणमासः।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः।
अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ॥

इति लघुहारीतेनादिमध्यसमाप्त्युपादानात्तदुपलक्षितकालविशेषस्वरूपमाससामान्यलक्षणस्य दर्शान्तचान्द्रे एव सत्त्वात्स एव मुख्यः। अनेकार्थत्वस्यान्याय्यत्वात्। मलमासेऽपि अस्य लक्षणस्य सम्भवाच्च।

यद्यपि—"तपश्च तपस्यश्च शैशिरावृतू, मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू, अथैतदुदगयनं देवानां दिनं; नभश्च नभस्यश्च वार्षिकावृतू, इषश्चोर्जश्च शारदावृतू, सहश्च

सहस्यश्च हैमन्तिकावृतू, अथैतद्दक्षिणायनं देवानां रात्रिः" इति श्रुतिवचनयोः सौरत्वात्तद्घटकर्तुप्रविष्टा मासास्तपआदयोऽपि सौरा एव वाच्याः । ततश्च तत्पर्यायतया माघादीनामपि सौरत्वमुपेयम् । पर्यायत्वं च "माघमासस्तपाः प्रोक्तः" इत्यादिस्मरणादवगम्यते । तथाच श्रुतेर्बलीयस्त्वाच्चान्द्रस्यैव गौणत्वं स्यादिति चेत्? मैवम्, "या वैशाखस्यामावास्या रोहिण्या सम्पद्यते" इति श्रुतौ वैशाखामाया रोहिण्यृक्षयोगप्रतिपादनात्सौरवैशाखे च मेषस्थसूर्यात्मके रोहिण्यृक्षीयवृषस्थचन्द्रवत्त्वासम्भवाद्दर्शान्तचान्द्र एव तादृशयोगसम्भवात्तस्यैव मुख्यत्वात्। उभयोः श्रौतत्वाविशेषेऽप्यनेकार्थत्वस्यान्याय्यत्वाद् एकत्र गौणत्वे आवश्यके अर्थवादगतेष्वेव तपआदिशब्देषु तत्कल्पनात्, न विधिगतेषु "न विधौ परः शब्दार्थः" इति न्यायात् । सावनादीनां व्यवस्थोक्ता ब्रह्मसिद्धान्ते--

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
सङ्क्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥ इति ।

अत्र ब्राह्मणादीनां यस्मिन् कर्मविशेषे "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिवचनान्तरेण मास उक्तः तस्मिन् कर्मविशेषे दर्शान्तत्वादिमात्रं नियम्यते न तु सर्वकर्मसु दर्शान्त एवेति, विधिलाघवात् । शूद्रादीनां सर्वकर्मसु मासविशेषविधौ सावनादीनां शूद्रानुलोमादिपरत्वापत्तेश्च । ज्योतिर्गर्गः--

सौरो मासो विवाहादौ यागादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

ब्राह्मे--

तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत् ॥

अथ मलमासः । एकमात्रसङ्क्रान्तिरहितः सितादिश्चान्द्रो

मासो मलमासः। एकमात्रसङ्क्रान्तिराहित्यम्—असङ्क्रान्तत्वेन सङ्क्रान्तिद्वयवत्त्वेन च भवतीति। मलमासो द्वेधा—अधिमासः क्षयमासश्चेति। तदुक्तं काठकगृह्ये—-

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः॥ इति।

मीनादिस्थो रविर्येषामारम्भप्रथमे क्षणे।
भवेत् तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः॥

इति वचनेन मीनस्थसूर्य्यारब्धशुक्लप्रतिपदादित्रिंशत्तिथिकत्वं चैत्रत्वम्। एवं वैशाखत्वादिकं मेषादिघटितं लभ्यते। एतच्च पूर्वमेवोपपादितम्। द्वादशेति च मलमासस्य शुद्धशेषत्वमवलम्ब्योक्तम्। अत्र ससङ्क्रान्तत्रिंशत्तिथिकत्वं शुद्धत्वम्, असङ्क्रान्तत्रिंशत्तिथिकत्वं च मलत्वम्। असङ्क्रान्तत्वं च एकसङ्क्रान्तिशून्यत्वम्। तेन सङ्क्रान्तिद्वययुक्ते क्षये नाव्याप्तिः।

ननु यत्र दीपावल्यमायां तुलासङ्क्रान्तिः, ततो मासमतिक्रम्य प्रतिपदि वृश्चिकसङ्क्रान्तिः, ततोऽव्यवहितामायां धनुःसङ्क्रान्तिः, तत्रासङ्क्रान्तः कार्तिकः, तुलास्थसूर्यारब्धशुक्लप्रतिपदादित्वात्, तदुत्तरो मासः क्षयमासः, सङ्क्रान्तिद्वययुक्तत्वात्। तदुत्तरश्च पौषः, धनुःस्थरव्यारब्धत्वात्। एवं स्थिते सङ्क्रान्तिद्वययुक्ते क्षयमासे मार्गशीर्षलक्षणं न घटते, वृश्चिकसङ्क्रान्तेः प्रतिपत्प्रवृत्त्युत्तरं प्रवृत्तेः तस्य वृश्चिकस्थरव्यारब्धत्वाभावात्; इति चेत्? न, गतिमान्द्यादमानन्तरं प्रतिपत्प्रवृत्तौ वृश्चिकसङ्क्रान्तेः प्रवेशेऽपि वृश्चिकसङ्क्रान्तिप्रवेशयोग्यताया अमायामेव सत्त्वात् वृश्चिकराशिस्थितियोग्यरव्यारब्धत्वरूपमार्गशीर्षत्वस्य तत्र सम्भवात्।

यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः।
तथैव सर्वसङ्क्रान्तिर्यावन्मेषं न गच्छति॥

इति वचनेन वृश्चिकसङ्क्रान्तिस्थितियोग्यताया अमाया-मेव बोधनात्।

ननु आगामिनि त्रिंशदुत्तरविंशतिशततमेऽब्दे आश्विनकृष्णामायां कन्यासङ्क्रान्तिः, ततो दर्शमतिक्रम्य प्रतिपदि तुलासङ्क्रान्त्या कन्यायामसङ्क्रान्तः, ततो वृश्चिकधनुषी शुक्लप्रतिपदोरेव, तदनन्तरदर्श एव मकरसङ्क्रान्तिरिति धनुषि क्षयः, सङ्क्रान्तिद्वययुक्तत्वात्। ततः कुम्भमीनावमायामेव। ततोऽनन्तरामामतीत्य मेषसङ्क्रान्तिरिति मीने पुनरसङ्क्रान्तः। एवं स्थिते धनुर्मकरसङ्क्रान्तिद्वययुक्तस्य क्षयस्य वृश्चिकस्थरव्यारब्धत्वान्मार्गशीर्षत्वं स्यात्। न चेष्टापत्तिः, पौषमासविलोपापत्तेः। यतस्तदुत्तरो न पौषः उत्तरामायां मकरसङ्क्रान्तेर्जातत्वेन तदुत्तरस्य धनुःस्थरव्यनारब्धत्वात्। न च धनुर्योग्यकालस्थरव्यारब्धत्वात्तत्र पौषत्वमुपपद्यत इति वाच्यम्, प्रतिपदस्तुलासङ्क्रान्तिकालत्वेन तस्या एव स्वाभाविकधनुःस्थानत्वेनामाया धनुर्योग्यकालत्वाभावात। किन्तु अमायां मकरसङ्क्रान्तिभवनेन मकरस्थरव्युपक्रान्तत्वात् क्षयोत्तरस्य माघत्वं स्यात्। तदुत्तरश्च न माघः, अमायामेव कुम्भसङ्क्रान्तिभवनेन मकरस्थरव्यनारब्धत्वात्; किन्तु फाल्गुनः कुम्भस्थरव्युपक्रान्तत्वात्। तदुत्तरो न फाल्गुनः, अमायामेव मीनसङ्क्रान्तिभवनेन कुम्भस्थरव्यनारब्धत्वात्; किन्तु चैत्रः मीनस्थरव्युपक्रान्तत्वात्। प्रतिपज्जातमेषसङ्क्रान्तिस्तु द्वितीयश्चैत्रः, तस्यापि मीनस्थरव्यारब्धत्वात्। तदुत्तरे तु वैशाखादय एवेति। एवं स्थिते प्रतिपत्तिथिस्थतुलासङ्क्रान्तिघटितस्य शुद्धाश्विनत्वे स्थिते तदुत्तरस्य प्रतिपत्तिथिस्थवृश्चिकसङ्क्रान्तिघटितस्य तुलास्थसूर्यारब्धत्वात्कार्तिकत्वे च स्थिते तदुत्तरस्य प्रतिपत्तिथिस्थधनुःसङ्क्रान्तिघटितस्य वृश्चिकस्थसूर्यारब्धत्वान्मार्गशीर्षत्वमापद्येत, एतदुत्तरस्य चामायामेव

मकरसङ्क्रान्तिभवनेन माघत्वादुत्तरयोश्च फाल्गुनत्वे चैत्रत्वे चोक्तरीत्या स्थिते कस्यापि धनुःस्थसूर्यारब्धत्वाभावात्पौषमासविलोपापत्तिरिति पूर्वपक्षनिष्कर्षः।

अत्रोच्यते। मकरकुम्भमीनसङ्क्रान्तीनाममावास्याजातानामपि स्वाभाविकतदुत्तरप्रतिपत्स्थानत्वमेव, "यां तिथिं समनुप्राप्य" इति पूर्वोक्तवचनात्। एवं च तत्र मकरादिसङ्क्रान्तिमदमाया धनुरादियोग्यकालत्वात् धनुरादिस्थितियोग्यरव्यारब्धत्वघटितं पौषत्वादिकमसङ्क्रान्तावधिकमासत्रयस्योपेयम्। तथाच वृश्चिकस्थरव्यारब्धत्वात्क्षयस्य मार्गशीर्षत्वं युज्यत एव। असङ्क्रान्तस्य च योग्यतया फाल्गुनत्वाङ्गीकारान्न चैत्राधिकत्वम्। प्रतिपज्जातमेषसङ्क्रान्तेरेव मीनस्थरव्यारब्धत्वाच्चैत्रत्वम्।

ननु यत्र दर्शे कन्यासङ्क्रान्तिस्ततोऽसङ्क्रान्तः, ततः प्रतिपदि तुलासङ्क्रान्तिः, तदनन्तरदर्श एव वृश्चिकसङ्क्रान्त्या कार्तिकः क्षयः। ततोऽमास्वेव मेषान्ताः सङ्क्रान्तयः, ततो दर्शमतीत्य प्रतिपदि वृषसङ्क्रान्त्या वैशाखोऽसङ्क्रान्तस्तत्र क्षयस्य कथं कार्तिकत्वम्, तुलापूर्वतनामायास्तुलायोग्यत्वासम्भवात् "यां तिथिं समनुप्राप्य" इति वचनाविरोधात्। तेन हि तुलासङ्क्रान्तिमत्तिथिसजातीयतिथेरेव वृश्चिकादिसङ्क्रान्तिमत्त्वं बोध्यते, न तु तुलाप्राक्तनामायास्तुलायोग्यत्वमिति चेत्? उच्यते, एकवर्षे जातयोर्द्वयोरसङ्क्रान्तयोरन्यतरस्य त्रिंशन्मात्रातिथिकत्वात्प्राकृतत्वे वाच्ये—

> एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ।
> पूर्वो मासः प्राकृतः स्यादुत्तरश्चाधिमासकः॥

इत्यादिवचनात्तुलापूर्वामायास्तुलायोग्यत्वमवसीयते। अन्यथा प्राकृतत्वमसङ्गतं स्यात्। एककलात्मकत्वेन चामाप्रतिपदोस्तद्योग्यता। ततश्च तदुत्तरस्य कार्तिकत्वम्। आश्विनस्य

योग्यतया तुलासम्बन्धाच्छुद्धत्वं च । एवं च विद्यमानस्यैव कार्तिकादेः क्षयो नाममात्रतया । सङ्कल्पे क्षयमासस्य तत्तन्मासत्वेनैवोल्लेख इति नवीनानुसारी पन्थाः । माधवानुसारिणस्तु मेषस्थरविसमाप्यत्वं चैत्रत्वम्, वृषस्थरविसमाप्यत्वं वैशाखत्वम् इत्येवं चैत्रादीनां लक्षणम्,

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः ॥

इति वचनात् । यत्र दर्शे कन्यासंक्रान्तिः, ततो दर्शमतिक्रम्य प्रतिपदि तुलासंक्रान्त्या कन्यायामसंक्रान्तः । ततो वृश्चिकधनुषी शुक्लप्रतिपदोरेव, तदनन्तरदर्शे एव मकरसंक्रान्तिरिति धनुषि क्षयः (२०२०) । तत्र धनुःस्थरविमदन्त्यक्षणकामावास्यान्तत्रिंशत्तिथिकत्वं मार्गशीर्षत्वं लुप्यते, क्षयसंज्ञायाः लोपनिबन्धनत्वात् । किन्तु तत्र मकरस्थरविसमाप्यत्वं पौषत्वमेवेति संकल्पे पौष एवोल्लेख्य इति वदन्ति । तदसत्, प्रागुक्तकार्तिकक्षये कार्तिकत्वलोपस्य दुरुपपादत्वात् वृश्चिकस्थरविसमाप्यत्वस्य कार्तिकत्वस्य सत्त्वात् । अथ तत्र तुलासंक्रान्तिकालसजातीयत्वयोग्यतया प्रतिपद एव वृश्चिकसंक्रान्तिकालत्वात् तत्पूर्वदर्शस्य तुलासम्बन्धयोग्यता वाच्या । तथा च तुलास्थरविसमाप्यत्वरूपाश्विनत्वसत्त्वात् कार्तिकत्वलोपः, संकल्पे च आश्विन एवोल्लेख्य इति चेत् ? तर्हि तदुत्तरस्य धनुःस्थरविसमाप्यत्वरूपमार्गशीर्षत्वसम्भवात् क्षीणकार्तिकत्वविशिष्टमार्गशीर्षत्वानुपपत्तिः इति कृतमतिविस्तरेण ।

किंच क्षयसंज्ञाया लोपनिमित्तकत्वे मार्गशीर्षादेर्लोपे मार्गशीर्षत्वनिमित्तकानां सांवत्सरिकश्राद्धादीनां तस्मिन् वर्षे लोपापत्तिः । तस्मात् नवीनानुसारी पन्था एव समञ्जस इति बोध्यम् । मलमासमृतानां तु यदा स एव अधिकः स्यात् तदा

तत्रैव प्रातिसंवत्सरिकं श्राद्धं कार्यम् ।

मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासेऽपि कर्तव्यं नान्येषां तु कथंचन ॥

इति पैठीनसिवचनात् । मलमासे कार्याकार्यविवेको निर्णयसिन्धौ द्रष्टव्यः । इति मासनिर्णयः ।

**पक्षनिर्णयस्तु—**

दैवे मुख्यः शुक्लपक्षः कृष्णे पित्र्ये विशिष्यते ॥

इति माधवेनोक्तः ।

अथ तिथिनिर्णयः । तिथिर्द्वेधा–शुद्धा, विद्धा च । दिने तिथ्यन्तरसम्बन्धरहिता शुद्धा, तत्सहिता विद्धा । यद्यपि

प्रतिपत्प्रभृतिः सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिता ॥

इत्युक्तेः अहोरात्रव्यापिन्यास्तिथेरेव सम्पूर्णात्वात् शुद्धात्वं युज्यते तथाऽपि उदयमारभ्य अस्तमयपर्यन्तं विद्यमानायास्तिथेरपि—

अहस्सु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते ॥

इति वाक्यात् शुद्धात्वं ज्ञेयम् । "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्" इति श्रुतेः अहर्भागेष्वेव दैवादिकर्मविधानात् ।

सूर्योदयं विना नैव स्नानदानादिकक्रमः ।
स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने ॥
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ।

इति सामान्यतो रात्रिनिषेधात्,

प्रातः सन्ध्यां बुधः कृत्वा सङ्कल्पं तत आचरेत् ।

इति सामान्यतो दिनारम्भे एव संकल्पविधानाच्च । तत्र

शुद्धायामसन्देहात् विद्धा निर्णीयते । वेधस्वरूपमाह पैठीनसिः—

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥

पक्षद्वयेऽपि उत्तरा तिथिः पूर्वां तिथिं सायं त्रिभिर्मुहूर्तैः विध्यति । पूर्वा तिथिः उत्तरां तिथिं प्रातस्त्रिमुहूर्तैर्विध्यतीत्यर्थः । हेमाद्र्यादौ द्विमुहूर्तोऽपि वेध उक्तः—

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥

इति विष्णुधर्मोक्तेः । उदिते भानौ द्विमुहूर्तं दैवतं देवकर्मार्हम्, अस्तमिते अस्तं गन्तुमुद्यते रवौ अह्नः त्रिमुहूर्तं पित्र्यं पित्र्यकर्मार्हम्, इत्यर्थः । अह्न एव त्रिमुहूर्तस्य ग्राह्यत्वात् अस्तमिते इत्यस्य अस्तं गन्तुमुद्यते इत्यर्थकत्वेन व्याख्यानं कृतम् । अत्र वेधिकायास्त्रिमुहूर्तव्यापित्वं वाचनिकं विध्यन्तीत्युक्तेः । वेध्यायास्तु त्रिमुहूर्तव्यापित्वमार्थिकं न्यायसाम्यात्,

पौर्वाह्णिकास्तु तिथयो दैवे कार्यफलप्रदाः ।

इति वृद्धयाज्ञवल्क्येन अह्नः पञ्चभागेषु आद्यभागरूपपूर्वाह्णभवत्वस्य तिथिषु फलप्रदत्वबोधनाच्च । अनुकल्पः स्नानदानादिविषयः ।

द्विमुहूर्ताऽपि कर्तव्या या तिथिर्वृद्धिगामिनी ।

इति दक्षेण अपिशब्दोक्तेः ।

त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी ।

इति अस्य पूर्वार्धेऽपि अपिशब्दान्वयात् न त्रिमुहूर्तत्यागे द्विमुहूर्तग्रहणे च तात्पर्यं किन्तु द्विमुहूर्तत्वस्य अनुकल्पत्वे इति । द्विमुहूर्तवेधश्च प्रातरेव, सायं तु त्रिमुहूर्त एव ।

यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत् ॥

इति स्कान्दोक्तेः ।

व्रतोपवासस्नानादौ घटिकैकाऽपि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥

इत्यादीनि स्कान्दादिवचनानि तु अवयवस्तुत्या त्रिमुहूर्त-प्रशंसापराणि इति दिक् । तत्र सर्वा तिथिः यदहःकर्मकाल-व्यापिनी सैव ग्राह्या ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति विष्णुधर्मोक्तेः ।

कर्म च षड्विधम्—उपवास, एकभक्त, नक्त, अयाचित, व्रत, दानभेदात् । उपवासे अहोरात्रः कर्मकालः, तस्य अहोरात्राभोजनसंकल्परूपत्वात् । अहोरात्रावच्छिन्न-द्वितीयभोजनाभावविशिष्टं मध्यान्हभोजनमेकभक्तम्, तादृशं प्रदोषभोजनं नक्तम्, अयाचितलब्धस्य तादृशं सकृद् भोजनं अयाचितम्, एतेष्वपि विशेष्यांशे मध्याह्नादिः विशेषणांशे च अहोरात्र एव कालः । एवं दानव्रतयोरपि प्रातरादिः । तत्तत्कर्मणि तत्तद्व्यापिनी तिथिर्ग्राह्या । कर्मकालव्या-प्तिर्द्वेधा—साकल्येन एकदेशेन वा । द्विविधाऽपि सा पुनर्द्वेधा—पूर्वे-द्युरेव परेद्युरेवेति । एषु पक्षेषु सैव ग्राह्या । दिनद्वये साकल्ये-न एकदेशेन वा व्याप्तौ अव्याप्तौ वा युग्मवाक्यान्निर्णयः ।

ननु कर्मकालशास्त्रात् "कर्मणो यस्य यः कालः" इति पूर्वोक्तात्

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥

इति शास्त्रं खर्वः साम्यं, दर्पो वृद्धिः, अर्थात् तिथिवृद्धौ ति-थिसाम्ये च परा तिथिर्ग्राह्या, तिथिक्षये तु पूर्वा इत्यर्थकं श्राद्धा-दिविषयकत्वेन वक्ष्यमाणं दुर्बलमस्तु, "ह्रासवृद्धी न कारणम्" इत्यु-

क्तेः । युग्मशास्त्रं तु अविशेषतः प्रवृत्तमपर्युदस्तं कर्मकालशास्त्रेण कुतो बाध्यं, मानाभावात् । तथाच युग्मशास्त्रेणैव कर्मकालशास्त्रबाधो दुर्वार इति चेत् ? अत्रोच्यते, कर्मस्वरूपप्रतिपादकवाक्यैः विहितस्य प्रातरादिकर्मकालस्य तिथ्यादिविधिप्रवृत्तिसमकालत्वात् शीघ्रोपस्थितिकत्वेन तत्तत्कर्माणि तस्यैव ग्रहणमुचितं, युग्मादिशास्त्रं तु तत्तत्कर्मसु विहितायां तत्तत्तिथौ खण्डायां सन्देहे सति निर्णयार्थमुपतिष्ठते इति तस्य विलम्बोपस्थितिकत्वात् कर्मकालशास्त्रेण व्यवस्थायां जातायां निराकाङ्क्षत्वात् न प्रवर्तते । यत्र तु कर्मकालशास्त्रेण व्यवस्था न जाता तत्र व्यवस्थापकाकाङ्क्षायां तत्प्रवर्तते इति 'ह्रासवृद्धी न कारणम्' इत्यत्र ह्रासवृद्धिपदस्य पश्चात्प्रवर्तमानशास्त्रमात्रोपलक्षकतया युग्मादिशास्त्रं खर्वादिशास्त्रं च न कुत्राऽपि पुरस्तात्प्रवृत्तिप्रयोजकम्, असंदेहात् । दिनद्वयकर्मकालव्याप्तौ साम्येन एकदेशव्याप्तौ च कर्मकालशास्त्रे प्रवृत्तेऽपि सन्देहानपायात् दिनद्वये तदव्याप्तौ च तस्य औदासीन्यात् सन्देहे सति युग्मादिशास्त्राणि निर्णायकानीति युग्मशास्त्रादेरुपरिष्टादेव प्रवृत्तिः । वैषम्येण एकदेशव्याप्तौ तु आधिक्यानुगृहीतकर्मकालशास्त्रादेव सन्देहनिरासः । युग्मवाक्यानि तु—

युग्माग्नि-युगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्त महादोषं हन्ति पुण्य पुराकृतम् ॥ इति ।

युग्मं द्वितीया, अग्निस्तृतीया, इदमेकं युग्मम् । युगश्चतुर्थी, भूतः पञ्चमी, इदं द्वितीयं युग्मम् । षट् षष्ठी, मुनिः सप्तमी, इदं तृतीयं युग्मम् । वसुः अष्टमी, रन्ध्रो नवमी, इदं चतुर्थं युग्मम् । रुद्रः एकादशी, द्वादशी, इदं पञ्चमं युग्मम् । चतुर्दशीपूर्णिमे,

इदं षष्ठं युग्मम् । प्रतिपद् अमावास्या, इति सप्तमं युग्मम् । युग्मगता पूर्वा तिथिः उत्तरविद्धा उदयव्यापिनी ग्राह्या । उत्तरा तिथिः पूर्वविद्धा अस्तमयव्यापिनी ग्राह्येत्यत्र तात्पर्यम् ।

सम्पूर्णे दशमी कार्या मिश्रिता पूर्वयाऽथवा ।

इति पुराणसमुच्चये सम्पूर्णे शुक्लपक्षे दशमी परया मिश्रिता कार्या, अथवा कृष्णपक्षे दशमी पूर्वविद्धा इति तदर्थः ।

त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने । इति ।

अथ कृष्णपक्षे अन्यथा युग्मानि पठ्यन्ते । आपस्तम्बः—

प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता ।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा ॥
पञ्चमी च प्रकर्तव्या षष्ठ्या युक्ता तु नारद ।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥
पूर्वविद्धा प्रकर्तव्या परविद्धा न कुत्र चित् ।
दशमी च प्रकर्तव्या सदुर्गा द्विजसत्तम ॥
षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥ इति ।

दशमी सदुर्गा नवमीसहिता इत्यर्थः । यत्र परस्परविरुद्धं युग्मवाक्यद्वयं प्राप्नोति, यथा तृतीयायां—"युग्माग्नियुगभूतानां" "चतुर्थीसंयुता या च सा तृतीया फलप्रदा" इति, तत्र "रम्भाख्यां वर्जयित्वा तु" इत्यादिकं प्रबलं व्यवस्थापकम् । यत्र च तादृशं व्यवस्थापकं नास्ति, तत्र—

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति शुक्लकृष्णवाक्यमेव व्यवस्थापकम् । विरुद्धयुग्मवाक्यद्वयाविषये इव विरुद्धयुग्मवाक्यद्वयविषयेऽपि तस्य निष्प्रत्यूहं प्रवृत्तेः ।

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।

खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥

इति व्याघ्रवचनं तु श्राद्धादिविषयम् ,

द्वितीयादिकयुग्मानां पूज्यता नियमादिषु ।

एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥

इति व्यासोक्तेः । नियमादिषु व्रतदानादिदैवकर्मसु, एकोद्दिष्टादेः तिथिवृद्ध्यादौ इत्यर्थः । ह्रासवृद्ध्यादिचोदना खर्वो दर्प इत्यादिवाक्यम् । कर्मकालव्याप्त्यभावे तु कर्मोपक्रमकालगैव तिथिर्ग्राह्या,

कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या न युग्मादरः ।

इति दीपिकोक्तेः,

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।

विद्यमानो भवेदङ्गं नोदितोपक्रमेण तु ॥

इति बौधायनवाक्याच्च । यथा साम्येन एकदेशव्याप्तौ यत्कर्म मध्याह्नादावेव उपक्रम्य समाप्यते तत्रैव कर्मोपक्रमयोगिनी युग्मशास्त्रबाधश्च । दिनद्वये कर्मकालव्याप्तौ तदस्पर्शे वा पूर्वमेव उपक्रम्य मध्याह्नादावनुष्ठीयमाने कर्मणि साम्येन तदेकदेशस्पर्शेऽपि युग्मवाक्यात् खर्वादिवाक्याद्वा निर्णयः, तत्र कर्मकालशास्त्रेण निर्णेतुमशक्यत्वात् । तदुपक्रमे इत्युक्तेरावृत्त्या तस्मिन्काले तस्य कर्मणः उपक्रमे तत्कालीनतत्संकल्पे इत्यर्थात् तदप्रवृत्तेश्च । उपक्रमः संकल्पः । यां तिथिं समनुप्राप्येत्यादीनि तु वचनानि त्रिमुहूर्तादिस्तुतिः । एकभक्ते तु—

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ।

इति वचनात् मध्याह्नव्यापिनी ग्राह्या । मध्याह्नश्च—

मुहूर्तत्रितयं प्रातः तावानेव तु संगवः ।

मध्याह्नस्त्रिमुहूर्तः स्यात् अपराह्णोऽपि तादृशः ॥

सायाह्नस्त्रिमुहूर्तः स्यात् सर्वधर्मबहिष्कृतः ।

इति व्यासोक्तः पञ्चधाविभक्तादिनतृतीयांशः । यद्यपि

अयं द्वादशदण्डानन्तरं प्राप्यते, तथाऽपि--

दिनार्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्यात् दिवैव हि ॥

इति षोडशादिदण्डा मुख्यः कालः । अष्टादशघटिकोत्तरं सूर्यास्तपर्यन्तं गौणः, दिवैव हीत्यस्य वैयर्थ्यापत्त्या गौणकालपरत्वात् । अत्र पूर्वेद्युरेव व्याप्तिः, परेद्युरेव व्याप्तिः, उभयेद्युर्व्याप्तिः, उभयेद्युर्व्याप्त्यभावः, अंशव्याप्तिः-अंशव्याप्तौ साम्यं, वैषम्यं चेति षट् पक्षाः । तत्र आद्ययोरसन्देह एव । तृतीये तु गौणमुख्यव्याप्तेः सत्त्वात् पूर्वेति माधवः । युग्मवाक्यान्निर्णय इति हेमाद्रिः । चतुर्थपक्षे पूर्वैव, गौणकालव्याप्तेः सत्त्वात् । वैषम्येण अंशव्याप्तौ अधिकव्याप्त्या निर्णयः । साम्ये पूर्वा, गौणकालव्याप्तेः सत्त्वात् । अयं च स्वतन्त्रैकभक्तनिर्णयः ।

प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ।

इत्यादौ कर्मणः प्रधानत्वात्तस्यैव निर्णयार्थमनुसरणीयत्वात् अङ्गभूतस्य तिथ्यादेर्निर्णयार्थमनुसर्तुमयोग्यत्वात् । प्रधानानुसारेण सा तिथिर्ग्राह्या । एतेन प्रतिपद्वचनादिना मध्याह्नस्यैकभक्ते विहितस्य कुतो न बाध इति शङ्का परास्ता । प्रधानभूतैकादश्युपवासाद्यङ्गभूते तत्पूर्वदिनकर्तव्ये एकभक्ते--

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

इति उपवासप्रतिनिधिभूते चैकभक्ते प्रधानानुरोधेनैव कर्तव्यतानिर्णयः ।

तिथिर्यथोपवासे स्यादेकभक्तेऽपि सा तथा ।

इत्युपवासप्रतिनिध्येकभक्ते सौमन्तववचनाच्च ।

**अथ नक्तम्** । तच्च दिनानशनपूर्वकं रात्रिभोजनम् । तत्र प्रदोषव्यापिनी तिथिर्ग्राह्या--

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।

इति वत्सोक्तेः । प्रदोषस्तु--

त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तङ्गते सति ।

इति मदनरत्ने व्यासेनोक्तः । तत्रापि त्रिदण्डोत्तरं नक्तं कार्यम्-

सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ।

इति स्कान्दोक्तेर्दण्डत्रयस्य सन्ध्यात्वात् । तत्र च--

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥

इति मार्कण्डेयेन भोजननिषेधात् । नक्तस्य वैधत्वाद्रागप्राप्तभोजनगोचरो निषेधस्तत्र न प्रवर्तते इति मदनरत्ने उक्तं, तत्तु विधेर्निषेधाविरोधस्यैव न्याय्यत्वादयुक्तम् । अन्यथा "कपिञ्जलानालभेत" ( पू०मी० ११-१-८ ) इत्यत्र त्रिभ्योऽधिकानां हिंसनं स्यात् । सायंकाले नक्तं तु दिनद्वये प्रदोषास्पर्शे ज्ञेयम् ।

प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।
आत्मनो द्विगुणा च्छाया मन्दीभवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशिभोजनम् ॥

इति स्कान्दात् । यत्यादीनामपि सायाह्ने नक्तम्—

नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ॥

इति मदनरत्ने एव स्मृत्यन्तरात् । इदमपुत्रविधुरोपलक्षणम् । पुत्रवतस्तु रात्रावेव ।

अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवान् ।

इति सङ्ग्रहोक्तेः । तुल्यन्यायाद्विधवाया अप्यपुत्रत्वे एव दिवानक्तमित्याहुः । सौरनक्तं तु दिवैव--

त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥

इति सुमन्तूक्तेः । हरिनक्ते विशेषः कालादर्शे स्कान्दे--

उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः। इति ।

अन्यनक्तं तु संक्रान्त्यादावपि रात्रावेव ।

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

इत्यादिलभ्यस्य निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधाबाधकत्वात् । दिनद्वयव्याप्तौ परा,

उभयोर्यदि वा तिथ्योः प्रदोषव्यापिनी तिथिः ।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः ॥

इति कालादर्शे जाबालिवचनात् । अन्यपक्षेषु एकभक्तवन्निर्णयः । तद् यथा—एकैकादिने एव व्याप्तौ मुख्यकालव्याप्तिरेव निर्णायिका । दिनद्वयास्पर्शे तु गौणकालव्याप्तिरेव,

प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।

इति पूर्वोक्तवचनात् । साम्येन वैषम्येण वाऽंशतो व्याप्तौ परैव, गौणकालव्याप्तेराधिक्यात् । यत्र वैषम्येणांशतो व्याप्तौ पूर्वैवाधिका, तत्र पूर्वैव, अधिकव्याप्तेरेव ग्रहीतुमुचितत्वात् । आधिक्यं च देवपूजाभोजनपर्याप्तं विवक्षितं न तु यत्किञ्चित् । पूर्वत्र यत्किञ्चिदधिकव्याप्तावप्युत्तरत्र पूर्णगौणकालव्याप्तेः किञ्चिन्न्यूनमुख्यकालव्याप्तेश्च सत्त्वेन तस्या एव ग्रहीतुमुचितत्वादित्यलम् ।

नक्तभोजने विशेषो मदनरत्ने गारुडे—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

हविष्याणि वक्ष्यन्ते । स्नानं पूजादेः प्राक् कर्माङ्गं प्रधानकालम् । सत्यं सत्यभाषणम् । आहारलाघवम्—अत्र प्राजापत्यप्रकरणगता नक्तभोजनविषया ग्राससंख्या ग्राह्या । सा चापस्तम्बेन—

सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ।

चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ॥

इति नक्ते द्वाविंशतिरुक्ता। यद्यपि पराशरेण चतुर्विंशतिमते च नक्ते द्वादशग्रासा उक्तास्तथापि शक्ताशक्तभेदेन व्यवस्था ज्ञेया। अग्निकार्यं व्याहृतिहोमः।

**अयाचितव्रतेषु** विशेषवचनाभावात्पक्षे उपवासस्यैव तत्प्रतिनिधित्वबोधनादुपवासवन्निर्णयः।

**अथ व्रतपरिभाषा।** तत्राधिकारिणो भविष्ये—

अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते।
व्रतोपवासनियमैर्नानादानैस्तथा नृप ॥

अनग्निग्रहणमुपवासविषयम्।

आहिताग्निरनड्वाँश्च ब्रह्मचारी च ते त्रयः।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥

इति देवलोक्तेः। एकादश्यादौ तु—

उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत् ॥
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

इति वायवीयवचनेन विहितानुकल्पफलादिभिरपि सिद्धेर्बोधनेन निषेधाविरोधाद्देवलवचनस्य काम्यविषयतैव युक्तेति बोध्यम्। शूद्रस्यापि अध्ययनाभावाद्वैदिकादिमन्त्रोच्चारणानधिकारेऽपि प्रधानभूतव्रताद्यनुष्ठानेऽधिकारोऽस्त्येव,

शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

इति व्यासोक्तेः,

निजवर्णाश्रमाचारनिरतः शुद्धमानसः।

इत्यविशेषेण स्कान्दाद्युक्तेश्च। अत्र पुँस्त्वस्याविवक्षितत्वात्स्त्रीणामपि व्रतादिधर्मेष्वधिकारः।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।

भर्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि ॥
इत्यादिस्कान्दवचनं तु भर्त्रननुज्ञाविषयम्,
भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदा ।
इति कात्यायनोक्तेः । स्त्रीणां व्रते विशेषो हरिवंशे—
स्नानं च कार्यं शिरसस्ततः फलमवाप्नुयात् ।
स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती ॥
गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा ।
गोशृङ्गं दक्षिणं सिक्त्वा प्रगृह्णीयाच्च तज्जलम् ॥
ततो भर्तुः सती दद्यात्स्नातस्य प्रयतस्य च ।
आत्मनश्चाभिषेक्तव्यं ततः शिरसि तज्जलम् ॥

अत्र शिरसः स्नानं कार्यमिति तु व्रताङ्गत्वेन स्त्रीणां सशिरस्कस्नानविधानादन्यत्र सुवासिनीनामशिरस्कमेव स्नानमिति ज्ञाप्यते ।

सर्वव्रतेषु सङ्कल्पविधिर्भारते—
गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद् यद्वा संकल्पयेद् बुधः ॥

औदुम्बरपात्राभावे हस्तेनैव जलं संगृह्य संकल्पयेदित्यर्थः ।

शुक्रगुर्वोरस्ते, मलमासे, भानुभौमशनिवासरेषु, व्यतीपातवैधृत्यादिषु, भद्रायां च व्रतानामारम्भमुद्यापनं च न कुर्यात् । दशम्यादिविद्धैकादश्यादावुपवासनिषेधपूर्वकं परेह्नि तद्विधानेऽपि तत्रारम्भमुद्यापनं च न कुर्यात् ।

उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् ।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम् ॥

इति मदनरत्ने सत्यव्रतोक्तेः । तत्रेति शेषः । व्रतग्रहणेऽपरो विशेषो देवलेनोक्तः—
अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ।

सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥ इति।

अत्र व्रतात्पूर्वदिने प्रातराहारमभुक्त्वैकभक्तव्रतं कृत्वेत्यर्थः।

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।
उपवासफलं प्रेप्सुर्जह्याद् भुक्तचतुष्टयम् ॥

इत्यादौ तथा दर्शनात्। अत एव व्रतशब्दस्य श्राद्धोपलक्षणत्वात्तत्पूर्वदिने एकभक्तं वदन्ति। आचम्येत्यादि तु परदिनाभिप्रायकमिति केचित्।

पूर्वदिने एव सायंसन्ध्योत्तरं व्रतं ग्राह्यम्। प्रातरित्यस्य स्नात्वेत्यनेनान्वय इत्यपरे।

व्रतदिने प्रातराहारमभुक्त्वेत्यर्थः। न चैवं

स्नानसन्ध्यातर्पणादिजपहोमामरार्चनम्।
उपवासवता कार्यं सायं सन्ध्याहुतीर्विना ॥

इत्यनेन पौनरुक्त्यम्, "नानृतं वदेत्" इति निषेधद्वयवदस्यापि सार्थक्यात्। यथा एकस्य वैयर्थ्यवारणाय दुरदृष्टद्वयमङ्गीकृत्यैकस्य पुरुषार्थविरोधित्वमपरस्य क्रतुविरोधित्वमित्युक्तं, तथा प्रातराहारे दुरदृष्टद्वयम्। तत्रैकस्य नित्यकर्मविरोधित्वमपरस्य व्रताविरोधित्वमित्यपौनरुक्त्यमितीतरे।

वस्तुतस्तु—

इक्षुरपः फलं मूलं ताम्बूलं पय औषधम्।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः ॥

इत्यभ्यनुज्ञातानामिक्ष्वादीनां निषेधार्थमभुक्त्वा प्रातराहारमिति वचनमिति सिद्धान्तः।

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः।
देवपूजाऽग्निहवनं सन्तोषः स्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः।

इति मदनरत्ने भाविष्ये ।

बहिर्ग्रामाऽन्त्यजान् सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

इति कौर्मे । पतितादिदर्शने—

तस्यावलोकनात्सूर्यं पश्येत्तु मतिमान्नरः ।

इति विष्णुपुराणे सूर्यावलोकनं प्रायश्चित्तमुक्तम् । स्पर्शादौ तु—

संस्पर्शे च नरः स्नात्वा शुचिरादित्यदर्शनात् ।
सम्भाष्य तैः शुचिपदं चिन्तयेदच्युतं बुधः ॥

इति विष्णुधर्मे स्नानादिकमुक्तम् । पृथ्वीचन्द्रोदयेऽग्निपुराणे—

स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्तयः ।
पूज्याः सुवर्णमय्याद्याः शक्त्या वै भूमिशायिना ॥
जपो होमश्च सामान्यव्रतान्ते दानमेव च ।
चतुर्विंशद्द्वादश वा पञ्च वा त्रय एव वा ॥
विप्राः पूज्या यथाशक्ति तेभ्यो दद्याच्च दक्षिणाम् । इति ।

अत्र विप्रा इति पुँल्लिङ्गदर्शनात्पुमांस एव पूज्या न तु स्त्रियः । एवं सहस्रभोजनादावपि, विरूपैकशेषस्य प्रमाणान्तरं विनाऽयुक्तत्वात् । अत एव "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" इत्यादौ विरूपैकशेषायोगात्पत्न्यभिप्रायं द्वित्वं न सम्भवतीत्युक्तमाचार्यैः । एतेनैकस्य ब्राह्मणस्यावृत्त्या भोजनं परास्तम् । बहुत्वस्यैकपदश्रुत्या ब्राह्मणान्वितत्वेन भोजनान्वयाभावात् ।

प्रतिमास्वरूपं भविष्ये—

अनुक्तद्रव्यतत्संख्या देवताप्रतिमा नृप ।
सौवर्णी राजती ताम्री वृक्षजा मार्तिकी तथा ॥
चित्रजा पिष्टलेखोत्था निजवित्तानुरूपतः ।
आमाषात्पलपर्यन्तं कर्तव्या शाठ्यवर्जितैः ॥

ब्राह्मे--

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

मन्त्रानुक्तौ समस्तव्याहृतिरूपो मन्त्रः, प्रजापतिश्च देवतेति कल्पतरुः ।

देवीपुराणे--

होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाप्राप्ति विधीयते ॥

वृद्धशातातपः--

उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् ।
कुर्यात्तेनास्य सगुण उपवासोऽभिजायते ॥

नन्दिपुराणे--

कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ।
उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् ॥
यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ।
वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते ॥
गाश्चैव काञ्चनं दद्याद् व्रतस्य परिपूर्तये ।

नारदीये—

सर्वेषामप्यलाभे तु यथोक्तकरणं विना ।
विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥
वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभम् ।
अदत्त्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥

भारते—

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वत्र तु यथोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥

अग्निपुराणे—

नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः ।
क्षारं क्षौद्रं च लवणं मधुमांसानि वर्जयेत् ॥

गृहीतव्रतत्यागे दोषश्छागलेयेनोक्तः—

पूर्वं व्रतं गृहीत्वा यो नाचरेत्काममोहितः ।
जीवन् भवति चाण्डालो मृतः श्वा चाभिजायते ॥

तत्र प्रायश्चित्तमुक्तमग्निपुराणे—

क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद् यदि ।
दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा ॥

प्रायश्चित्ताङ्गं मुण्डनं रात्रावपि कार्यम् ।

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ॥

इति वचनात् । व्रताशक्तौ हेमाद्रौ पुराणान्तरे—

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनादि वा दद्याद् भुक्तश्चेद् द्विगुणं तथा ॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ।
कुर्याद् द्वादशसंख्याकान् यथाशक्त्या तु यो नरः ॥

मात्स्ये—

उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।
तस्मात्कृतोपवासेन स्नानमभ्यङ्गपूर्वकम् ॥
वर्जनीयं प्रयत्नेन रूपघ्नं तत्फलं नृप ॥

स्त्रीव्रतेषु विशेषो गारुडे—

गन्धालङ्कारताम्बूलपुष्पमालानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमण्डनम् ॥

इदं च सभर्तृकोपवासविषयम् ।

अञ्जनं च सुताम्बूलं कुङ्कुमं रक्तवाससी ।

धारयेत्सोपवासाऽपि अवैधव्यकरं यतः ॥
विधवा यतिमार्गेण कुमारी च यदृच्छया ।

इति भविष्योक्तेः । यद्यपीदं सर्वोपवासाविषयं प्रतीयते तथाऽपि शिष्टाचारात्सौभाग्याद्यर्थं क्रियमाणनवरात्रत्रिरात्राद्युपवासविषयमेव, न त्वेकादश्याद्युपवासविषयम् ,

असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।
उपवासः प्रणश्येत्तु दिवास्वापाच्च मैथुनात् ॥

इति देवलेन तन्निषेधात् । न चास्य पुम्मात्रविषयत्वं युक्तं, ताम्बूलादिप्रापकस्यैवैकादश्यादीतराविषयत्वस्यापि सुवचत्वात् सुभगाचिन्हानां सौभाग्याद्यर्थव्रते एवौचित्याच्च ।

अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा ।
उपवासाद्व्रताद्वाऽपि सद्यो भ्रंशयति स्त्रियम् ॥

इति हरिवंशे । स्त्रियमित्युपलक्षणम् ।

अथ सूतकादौ निर्णयः—

गर्भिणी सूतिकादिश्च कुमारी वाऽथ रोगिणी ।
यदाऽशुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् ॥

इति पाद्मे लिङ्गस्याविवक्षितत्वाद् यस्मिन्व्रते यत्पूजाद्युक्तं तदन्येन कारयेत् शारीरनियमान् स्वयं कुर्यादिति । इदमारब्धव्रतविषयम् । अनारब्धस्य व्रतस्य आरम्भस्तु न भवति ।

बहुकालिकसंकल्पो गृहीतश्च पुरा यदि ।
सूतके मृतके चैव कृतं तन्नैव दुष्यति ॥

इति शुद्धितत्त्वे विष्णूक्तेः ।

पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।
तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जितम् ॥

इति मदनरत्ने ।

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।

तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥

इति कौर्मे। एतेन साङ्गेऽधिकाराद्व्रताङ्गदेवपूजादि कार्यमिति वर्धमानोक्तिः परास्ता। प्रारब्धं पूजादि तु कार्यमेव "न व्रतिनां व्रते" इति विष्णूक्तेः 'पूजामन्येन कारयेत्' इति निषेधस्य प्रारब्धपूजाशेषपरत्वासम्भवात्। अनारब्धमर्चनं त्वन्येनैव कारणीयम्।

सूतके तु नरः स्नात्वा प्रणम्य शिरसा हरिम्।

इति तु स्वयं पूजां विनाऽशनाकरणव्रतपरम्। 'प्रणम्य मनसा हरिम्' इति पाठे कायिक्याः पूजाया अन्येनैव कर्तव्यत्वार्थं मनःपदम्। पठन्ति च—

सूतकात्प्राक् समारब्धमनेकाहं तु यद्व्रतम्।
कायिकं तत्तु कुर्वीत न तु दानार्चनं जपम् ॥
सूतकाहे तु यत्किञ्चिद्दानाद्यन्तरितं भवेत्।
सूतकानन्तरे त्वन्हि तत्कर्तव्यमतन्द्रितैः ॥ इति ॥

नहीदं प्रारब्धपूजाद्यर्थत्यागं बोधयति, किन्तु दानादेरप्रारम्भं 'दानाद्यन्तरितम्' इत्युक्तेः। प्रतिनिधयश्च निर्णयामृते पैठीनसिनोक्ताः—

भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम्।
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ॥

प्रभासखण्डे—

भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखाऽपि च।
यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः ॥
एभिः कृतं महादेवि स्वयमेव कृतं भवेत्।

इदं च सर्ववर्णसाधारणमविशेषात्। केचित्तु शूद्रस्य ब्राह्मणादिरेव प्रतिनिधिर्युक्तो न शूद्रः,

जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम्।

विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥

इति मरीचिवचनादित्याहुः। तन्न, संपूर्णतावाचनमात्रस्यैवात्र बोधनेन ब्राह्मणे शूद्रप्रतिनिधित्वस्यालाभात्,

ब्राह्मणो हीनवर्णस्य यः कुर्यात्कर्म किञ्चन।
स तां जातिमवाप्नोति इह लोके परत्र च ॥

इति हेमाद्रौ मरीचिना तन्निषेधाच्च।

**अथ व्रतादिसन्निपाते निर्णयः**–तत्र तिथिद्वयसन्निपाते तत्र तत्रोक्तं दानहोमादि क्रमेणानुष्ठेयम्, अविरोधात्। यत्रोपवासद्वयमेकभक्तादिद्वयं वा तत्राङ्गिनस्तन्त्रं, भिन्नदैवत्यत्वादिना विरुद्धं पूजाहोमाद्यङ्गं सहैव कार्यम्,

पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते ॥

इति न्यायात्। इदं पूर्वारब्धेष्वेव। पूर्वारब्धकर्ममध्ये च कर्मान्तरारम्भो न भवति गुणफलादृते, "यस्य यज्ञे प्रतते अन्तरा यज्ञस्तायते तं यज्ञं निर्ऋतिर्गृह्णाति" इति राणकधृतश्रुतेः। यज्ञो व्रतादिकर्ममात्रम्, अनङ्गेन व्यवधानदोषस्य सर्वत्र साम्यात्। शिष्टास्तु माघकार्तिकादिस्नानादिमध्ये लक्षहोम-तुलादान-भारतश्रवणाद्याचरन्ति, तन्नित्यमध्येऽस्तु; काम्यमध्ये तु चिन्त्यम्। काम्यमध्येऽपि ययोः पुरुषार्थयोर्व्रतादिकर्मणोर्न विरोधस्तयोरेकमध्येऽपरानुष्ठानं युगपदारम्भो वा भवत्येव। यथा काम्यकार्तिकादिस्नानकाम्यतद्व्रतयोः, तत्र सर्वाङ्गोपसंहारेण स्वयं तादृशद्वयस्य सुकरत्वात्। अन्यत्र च प्रथमोपक्रान्तमेव कार्यं, प्राथम्यात्। यत्र तु नक्तैकभक्तादौ विरोधस्तत्र प्राथम्यादेकभक्तं कार्यं, नक्तं तु परेद्युस्तत्तिथौ गौणकाले कार्यम्। समकालीनविरुद्धव्रतादौ त्वेकं स्वयं कृत्वाऽन्यद्भार्यादिना कारयेत्।

तिथिद्वयोदितं कर्म तद्गतं पृथगाचरेत् ।
तिथ्योर्वेधे तु स्नानादि सकृदाह्निकमाचरेत् ॥

इति मरीचिवचनात् । यत्र तु शिवरात्र्यादौ तिथिमध्ये पारणयाऽह्नि भोजनं प्राप्तं,

भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

इति तन्निषेधश्च, तत्र पारणाया वैधत्वाद्दिवैव भोजनम् । निषेधस्तु रागप्राप्तभोजनविषयः । एवमष्टम्यादिनक्तव्रते संकष्टचतुर्थ्यां संक्रान्तौ रवौ च रात्रौ भोजनं कार्यं, तत्र भोजनस्य वैधत्वात् । यत्र त्वष्टम्यादौ दिवाभोजननिषेधः संक्रमे च रात्राविति निषेधद्वयं, तत्रोपवास एव कार्यः । यद्यपि पुत्रिण उपवासोऽपि निषिद्धस्तथापि—

उपवासनिषेधेऽपि भक्ष्यं किञ्चित्प्रकल्पयेत् ।

इति वचनात्किञ्चिद्भक्षयित्वोपवासः कार्यः । चान्द्रायणमध्ये एकादश्यादौ तु ग्राससंख्यानियमेन भोजनं कार्यमेव, चान्द्रायणस्य काम्यत्वेन नित्यबाधकत्वात् । चान्द्रायणादिवाक्येषु चन्द्रोदयकाले ग्राससंख्यावृद्धिह्रासवच्छुक्लकृष्णोभयकालाविशिष्टभोजनविधेरुपगमान्नित्यबाधं विना तदसम्भवाच्च । एकादश्यामेकान्तरोपवासादिपारणायां जलपारणां कृत्वोपवसेत् । तत्र कालत्रयगतभोजननिवृत्तेरेव चतुर्थकालाहारादिपदतात्पर्यविषयत्वेन भोजनांशे विध्यभावेनैकादश्युपवासबाधायोगात् , "आपो वाऽशितमनशितं च" इति श्रुतेरबशनस्य पारणानिर्वाहकत्वात् । एवं मासोपवासे श्राद्धदिने प्रदोषादिषु च द्वादश्यां पारणालोपः, अबशनेनैव पारणासिद्धिः । एवमन्यत्राप्यूह्यम् ।

एकादशीविषये विशेषः- तत्र दशम्यामेकादशीयोगे दश-

मीमध्ये एव भोजनं कार्यम् "एकादश्यां न भुञ्जीत" इति तस्या एव निवृत्तत्वात् ।

निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते ।

इति देवलोक्तेश्च । केचित्त्वेकादशीव्रताङ्गत्वेन पूर्वेद्युः—

दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः ।
एकादशीमुपवसेत्पक्षयोरुभयोरपि ॥

इत्यनेनैकभक्तविधानाद् विधिस्पृष्टे च निषेधानवकाशान्नै कादशीव्रताङ्गभोजननिषेधः प्रवर्तते । तेनैकादशीमध्येऽपि पूर्वदिने भोजनमित्याहुः ।

वस्तुतस्तु दशम्यामेकभक्तस्त्वित्यत्र विशेष्यं भोजनं नार्थः ।

सायमाद्यन्तयोरन्होः सायंप्रातश्च मध्यमे ।
उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥

इत्यत्र जह्यादित्येवाभिधानात् एकभक्तविधावनृतवदनादिनिवृत्तिवद्व्रताङ्गतया द्वितीयभोजननिवृत्तेरेव लाघवाद्विधातुमुचितत्वात् । ततश्च सायङ्कालिकभोजननिवृत्तेरेवैकभक्तपदतात्पर्यविषयत्वात्तस्याश्च सर्वैरेव पालनीयत्वाद्विद्धाधिकायां निषेधपालकस्य प्रातर्माध्यान्हिककर्मापकर्षविध्यभावात्तदपर्याप्तदशमीस्थले शुद्धाधिकद्वादश्यां च पूर्वदिनेऽपि उपवास एव लभ्यते इति बोध्यम् । अत्र—

एकभक्तेन यो मर्त्य उपवासव्रतं चरेत् ।

इत्यादावेकभक्तादिषूपवासशब्दस्तद्धर्मातिदेशार्थः । तेन तत्प्रयुक्ताः सर्वे धर्मास्तत्स्थानापन्नेऽपि भवन्ति । सङ्कल्पमन्त्रे चैकभक्तादिपदेनोहः । एकादश्यां श्राद्धप्राप्तौ स्कान्दे—

यस्मिन् दिने पितुः श्राद्धं मातुर्वाऽथ भवेदिह ।
तस्मिन्नेव दिने तात भवेदेकादशीव्रतम् ॥
अन्यदाऽपि व्रतं स्कन्द तदा कार्यं तु तच्छृणु ।

तदा कृत्वा तु वै श्राद्धं भुक्तशेषं तु यद्भवेत् ॥
तत्सर्वं दक्षिणे पाणौ गृहीत्वाऽन्नं शिखिध्वज ।
अवजिघ्रेदनेनाथ तेन श्राद्धं शिखिध्वज ॥
पितॄणां तृप्तिदं जातं व्रतभङ्गो न विद्यते ।

एतच्च मुख्योपवासपरम् । कन्दमूलफलाद्यनुकल्पे तु देवपितृपात्रे तत्परिवेषणेन शेषभक्षणं कार्यम्, सर्वजातीयशेषभोजनं विनाऽपि श्राद्धान्वयित्वस्याग्रे स्पष्टत्वात् ।

सूतके मृतके श्राद्धं सूतकान्ते विधीयते ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥

इति तु प्रलाप एव, महालयादौ षोडशश्राद्धादिविधानात् ।

प्रसङ्गाद्ग्रहणे निर्णयः। तत्र यस्मिन् यामे चन्द्रग्रहणं तस्मात्पूर्वं प्रहरत्रयं न भुञ्जीत । सूर्यग्रहणं तु यस्मिन् यामे तस्मात्पूर्वं प्रहरचतुष्टयं न भुञ्जीत ।

सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन बालवृद्धातुरैर्विना ॥

इति वृद्धगौतमोक्तेः ।

बालवृद्धातुराणां तु यस्मिन् यामे सूर्यग्रहणं चन्द्रग्रहणं वा तस्मात्पूर्वमेकयामं भोजनं निषिद्धम्—

सायान्हे ग्रहणं चेत्स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया ।

इति मार्कण्डेयोक्तेः । पूर्वोक्तवृद्धगौतमवचने 'बालवृद्धातुरैर्विना' इत्युक्त्याऽस्य वचनस्य बालादिविषयत्वात् । चन्द्रग्रहग्रस्तोदये—

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।

इति वृद्धवसिष्ठवचनेन ग्रहणयामात्पूर्वं यामचतुष्टयं न भोक्तव्यम् । सूर्यग्रस्तास्ते तु—

अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥

इति विष्णुधर्मवचनादहोरात्रं भोजनं निषिद्धम् । एवं चन्द्रग्रस्तास्तेऽपि ग्रहणयामात्पूर्वं यामत्रयं भोजननिषेधात्पूर्वरात्रौ भोजननिवृत्त्या—

अमुक्तयोरस्तगयोरद्याद् दृष्ट्वा परेऽहनि ।

इति व्यासवचनात् द्वितीयदिनेऽपि भोजननिवृत्त्या यामाष्टकं भोजनं निवर्तते । चन्द्रग्रस्तास्ते उत्तरदिने सन्ध्याहोमादौ न दोषः,

ग्रस्ते चास्तङ्गते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम् ।
स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः ॥

इत्युशनोवचनात् । स्नानहोमादिकं कार्यमित्यत्र स्नानपाकादिकमिति संवत्सरदीपे पाठः । तत्र शास्त्रावगतमुक्त्युत्तरमुदयात्पूर्वमपि पाकादि कार्यं, भोजनं तूदयोत्तरमित्यर्थ इत्युक्तम् । शिष्टास्तु उदयोत्तरमेव सर्वं कुर्वन्ति इति निर्णयसिन्धुटीकायाम् । वेधकाले ग्रहणे वा पक्वमन्नं त्याज्यम्—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥

इति षट्त्रिंशन्मतवचनात् । वेधात्पूर्वं पक्वमपि ग्रहणानन्तरितं त्याज्यमेव शृतमित्यस्योपलक्षणत्वात् ।

नवश्राद्धे तु यच्छिष्टं ग्रहपर्युषितं च यत् ।

इति मिताक्षरायां वचनात् ।

आरनालं पयस्तक्रं दधि स्नेहाद्यपाचितम् ।
मणिकस्थोदकं चैव न दुष्येद्राहुसूतके ॥

इति मेधातिथिवचनात्--

अन्नं पक्कमिह त्याज्यं स्नानं सवसनं ग्रहे ।
वारितक्रारनालादि तिलदर्भैर्न दुष्यति ॥

इति मन्वर्थमुक्तावलीवचनाच्च पयआदौ न दोषः । जले त्वदोषो गाङ्गविषयः ।

ग्रहोषितं जलं पीत्वा पादकृच्छ्रं समाचरेत् ।

इति चतुर्विंशतिमतेऽन्यजलस्य दोषोक्तेः । वेधकाले ग्रहणकाले ग्रस्तास्तकाले वा भोजने प्रायश्चित्तम्—

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति ॥

इति कात्यायनोक्तम् । अत्र चाऽऽद्यन्तयोः स्नानं कुर्यात्—

ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥

इति वचनात् ।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
सचैलं तु भवेत्स्नानं सूतकान्नं च वर्जयेत् ॥

इति वृद्धवसिष्ठोक्तेश्च । सचैलत्वं मुक्तिस्नानपरमिति मदनरत्ने उक्तम् ,

मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके ।
स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रहः ॥

इति चतुर्विंशतिमतवचनात् ।

यत्र पुंसः सचैलं स्यात्स्नानं तत्र सुवासिनी ।
कुर्वीतैवाशिरः स्नानं शिरोरोगी जटी तथा ॥

इत्यपि शातातपाद्यभिधानान्न प्रवर्तते । तेन सुवासिनीनामपि मुक्तौ सशिरः स्नानमेव भवति । ग्रहणकाले श्राद्धमुक्तमृष्यशृङ्गेण—

चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥ इति ।

इदं चामान्नेन हेम्ना वा कार्यं, न त्वन्नेन—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा ॥

इति शातातपोक्तेः इति माधवादयः। अपरार्कस्तु द्विजातीनां पाकाभावे एव आमश्राद्धमाह तीर्थश्राद्धवत् ,

पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।

इति सुमन्तूक्तेः । तत्राशौचमध्येऽप्यामश्राद्धादि कार्यमेव—

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

इति वृद्धवासिष्ठोक्तेः,

सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने ।
स्नात्वा श्राद्धं प्रकुर्वीरन् दानं शाठ्यविवर्जितम् ॥

इत्यङ्गिरोवचनाच्च । गौडास्तु--

स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितम् ।

इति पठन्तः स्नानमात्रं कर्तव्यमिति वदन्ति । रजस्वलायास्तु-

न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु ।
ग्रस्ते स्नायादुदक्याऽपि तीर्थादुद्धृत्य वारिणा ॥
स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥

इत्युक्तप्रकारेण स्नानं कार्यम् । यदा तु ज्योतिःशास्त्रगम्यो दिने चन्द्रग्रहो रात्रौ च सूर्यग्रहस्तदा ग्रहे दानस्नानादि न कार्यम् ,

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तदा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं नच क्वचित् ॥

इति षट्त्रिंशन्मतात् । ग्रहणादिने वार्षिकश्राद्धप्राप्तौ—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्येनासम्भवे हेम्ना कुर्यादामेन वा सुतः ॥

इति गोभिलोक्तप्रकारेण वार्षिकमनुष्ठेयम् । तत्र रविपितृसुतशब्दाः प्रदर्शनार्थाः, न्यायसाम्यात् । तेन चन्द्रग्रहणेऽपि सपिण्डादिवार्षिकमप्यन्नादिना तद्दिने एव कार्यमिति मदनपारिजाते व्याख्यातम् ।

आमश्राद्धं प्रकुर्वीत माससंवत्सरादृते ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचित् ॥

इति मरीच्यादिवचनानि ग्रहणदिनातिरिक्तविषयाणि । 'ग्रहणात्तु द्वितीयेऽह्नि' इत्यादीनि वचनानि तु महानिबन्धेष्वनुपलम्भान्निर्मूलानि । तेन ग्रहणदिने उपस्थितं वार्षिकश्राद्धं यथासंभवमन्नेनाऽऽमेन हेम्ना वा तद्दिने एव कार्यं न तु दिनान्तरे इत्यलम् ।

अत्रेदं विचार्यते—ग्रहणस्य मेघाच्छादने स्नानश्राद्धादि कर्तव्यं न वा । तत्र केचिदाहुः—ग्रहणस्य निमित्तत्वेन तन्निश्चयस्य स्नानादिप्रयोजकत्वाद् ज्योतिःशास्त्रादिना जातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि--

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे ॥

इति जाबाल्यादिवचनेषु दृशिप्रयोगाच्चाक्षुषज्ञानस्यैव निमित्तत्वान्मेघाच्छादने च तदभावात्स्नानादि न कार्यमिति । एवमन्धादीनां जन्मसप्तमाष्टमादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकारः, 'दृष्ट्वा स्नायात्' 'मुक्तिं दृष्ट्वा तु भुञ्जीत' इत्यादौ स्नानादिकर्तृगतस्यैव दर्शनस्य धातुसम्बन्धाधिकारविहितत्वाप्रत्ययाद्विशेषणत्वप्रतीतेः । इत्थं च स्नानादौ दर्शनसमानकालि-

कत्वस्यापि लाभाद्दर्शनापगमादौ स्नानं न भवति। दर्शनावच्छिन्नक्षणवैशिष्ट्यं तु स्नानादौ न सम्भवति इति दर्शनयोग्यत्वं निवेशनीयम्। तेन चाक्षुषज्ञानयोग्ये काले स्नायादिति वाक्यार्थः सम्पद्यते। योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यम्। अभ्रादीनां तु पुरुषप्रयत्नानपनेयत्वाच्चाक्षुषज्ञानप्रतिबन्धकत्वाच्च तत्काले न तद्राहित्यरूपा योग्यतेति न तदाच्छादनकाले स्नानाद्यनुष्ठानम् इति कल्पतरौ निर्णयामृते च।

परे तु मेघाच्छादने स्नानश्राद्धादि कार्यमेव, शास्त्रीयज्ञानस्यैव स्नानादिप्रयोजकत्वात्। चाक्षुषज्ञानस्य निमित्तत्वे तु—

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्॥

इतिवाक्यस्य वैयर्थ्यापत्तेः। रात्रौ सूर्यग्रहस्य दिवा चन्द्रग्रहस्य च चाक्षुषज्ञानविषयत्वाभावेन तत्र स्नानादेरप्राप्तेः। न च सूर्यग्रस्तास्ते चन्द्रग्रस्तास्ते चास्तानन्तरं स्नानादिवारणार्थं तच्चरितार्थमिति वाच्यम्, तद्वचने तत्र इति पदस्यास्तानन्तरकालिकरात्रिदिनपरत्वेऽन्यप्रयुक्तस्नानादेरपि तत्राभावापत्तेः।

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।
नोपरक्तं न वारिस्थं न मध्ये नभसो गतम्॥

इति मनुवचनबाधापत्तेश्च। न च रागप्राप्तोपरक्तदर्शनस्यैव मनुवचनेन पर्युदासो न तु विधेयस्य दर्शनस्य इति वाच्यम्, दर्शनस्य विधौ तत्र स्नानविधौ च विरुद्धत्रिकद्वयापत्तेः। न च सर्वनैमित्तिकार्थं तन्त्रेण सकृद्दर्शनं विधेयं न तु स्नानादिविधायकेन वाक्येन तन्त्रेण दर्शनं स्नानश्राद्धादि च विधेयम्। ततश्च न विरुद्धत्रिकद्वयापत्तिरिति वाच्यम्। 'मुक्तिं दृष्ट्वा ततः स्नायात्' इति मुक्तिस्नानेऽपि न्यायसाम्याच्चाक्षुषज्ञानस्य निमित्तत्वापत्तेः। न चेष्टापत्तिः, ग्रस्तास्ते—

तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः ।

इति दर्शनोत्तरं भोजनविधानादन्धस्य वेधकाल इव यावद्दर्शनं भोजनानापत्तेः । मध्येऽन्धीभूतस्य सुतरां यावच्चक्षुष्प्राप्ति उपवासप्रसङ्गाच्च । यद्येतदापत्तिभयाद् 'दृष्ट्वाऽभ्यवहरेत्' इत्यत्र दृशिना ज्ञानमात्रं विवक्ष्यते तदा 'दृष्ट्वा स्नायात्' इत्यत्रापि ज्ञानमात्रस्यैव निमित्तत्वमङ्गीक्रियताम् । इत्थञ्च शास्त्रीयज्ञानस्यान्धादीनामपि सम्भवात्तैरपि स्पर्शस्नानं मुक्तिस्नानं च कार्यम् । तस्माद् दर्शनस्योद्देश्यविशेषणत्वेन ग्रहैकत्ववदविवक्षितत्वादर्थासिद्धज्ञानमात्रानुवादत्वैव । अङ्गुलन्यूनग्रासस्यानादेश्यस्य ग्रहस्य व्यावृत्त्या वा दृशेरुपादानस्यार्थवत्त्वमस्तु । अङ्गुलन्यूनग्रासस्य द्रष्टुमयोग्यत्वाद्दर्शनयोग्यस्यैव च तस्य ज्योतिर्विद्भिरादेश्यत्वात् ।

रात्रौ सूर्यग्रहः स्याच्चेद्दिवा चन्द्रग्रहस्तथा ।
नादेश्यमुभयं राज्ञे यच्च सूक्ष्मतमं भवेत् ॥

इति गणकैः पाठादित्यभियुक्तोक्तेः । दर्शनयोग्यता च तत्तद्रेखावच्छेदेन ज्योतिःशास्त्रावेद्यत्वमेव । 'यावद्दर्शनगोचरे' इति वाक्येऽप्यन्धादिसाधारण्यार्थं व्यधिकरणस्यापि दर्शनस्य निमित्ततावच्छेदकत्वेनान्वयाच्चन्द्रसूर्योपरागो यस्मिन्देशे यावत्कर्मपर्याप्तश्चाक्षुषज्ञानयोग्यः स तद्देशे तावत्कर्मसु निमित्तमित्यर्थः । देशलाभश्च 'सूर्यग्रहो यदा रात्रौ' इत्यादिद्वीपान्तरस्थपर्युदासात्, द्वीपान्तरस्थान्प्रति तयोर्द्रष्टुं योग्यत्वात् । द्वीपान्तरदर्शनयोग्यस्यापि स्वाधिष्ठितद्वीपे तस्य दर्शनायोग्यत्वान्न स्नानादिनिमित्तत्वम् । किञ्च देशान्तरदर्शनयोग्यस्यापि स्वाधिष्ठितदेशे दर्शनायोग्यस्य न स्नानादिनिमित्तत्वं, तुल्यन्यायात् । दर्शनयोग्यता च यस्मिन्देशे यो वसति तदीयक्षितिजोर्ध्वदेशवृत्तित्वम् । ततश्च स्वाधिष्ठितदेशसम्बन्धिक्षितिजोर्ध्वदेशवृत्तित्वेन

ज्योतिःशास्त्रावेद्यग्रहकाले स्नानादिकमनुष्ठेयमिति निष्कर्षः । इत्थं च ग्रस्तोदये ग्रस्तास्ते वा ज्योतिःशास्त्रेण दिवाचन्द्रग्रहस्य रात्रौ च सूर्यग्रहस्य ज्ञानेऽपि न तत्काले स्नानादिकं, तत्काले ग्रहस्य तद्देशीयक्षितिजोर्ध्ववृत्तित्वाभावात् । तस्मान्मेघाच्छादने अन्धादेश्च स्नानादि भवत्येवेत्यलम् ॥

चैत्रशुक्लप्रतिपदि वत्सरारम्भः। तत्र प्रतिपदौदयिकी ग्राह्या।

चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति॥

इति ब्राह्मोक्तेः। दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वैव—

चैत्रे सितप्रतिपदि यो वारोऽर्कोदये स वर्षेशः।
उदयद्वितये पूर्वो नोदययुगुलेऽपि पूर्वः स्यात्॥
यस्माच्चैत्रसितादेरुदयाद्भानोः प्रवृत्तिरब्दादेः।

इति ज्योतिर्निबन्धोक्तेः। यदा तु चैत्रो मलमासो भवति, तदा दैवकार्यस्य तत्र निषिद्धत्वाच्छुद्धे मासि संवत्सरारम्भः कार्य इति केचिदाहुः।

वस्तुतस्तु 'सोऽन्तर्भवति चोत्तरे' इत्यादिवचनात् शुक्लादेर्मलमासस्य अग्रिमवर्षान्तःपातान्मलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादाविव मलमास एव संवत्सरारम्भः कार्य इति सिद्धान्तः। ननु शुक्रास्तादौ चैत्रशुक्लप्रतिपदन्तरस्याभावाद् युक्तं तन्मध्ये एवानुष्ठानं, मलमासे तु शुद्धप्रतिपदन्तरस्य सम्भवाच्छुद्धे एव वत्सरारम्भो युक्त इति चेन्न, प्रतिपदन्तरसत्त्वस्य वत्सरारम्भकार्याप्रयोजकत्वात्। तथा सति वत्सरारम्भकार्याणां द्विरनुष्ठानापत्तेः, वर्षेशद्वयापत्तेश्च; अपि तु वत्सरारम्भ एव वत्सरारम्भकार्याणां प्रयोजकः। तस्य तु 'सोऽन्तर्भवति चोत्तर' इत्यादिवचनैः पूर्ववर्षेऽन्तर्भावस्य ब्रह्मणाऽपि दुर्वचत्वात्।

अत्र च तैलाभ्यङ्गो नित्यः—

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते॥

इति वसिष्ठोक्तेः।

चैत्रशुक्लाष्टम्यां भवान्याउत्पत्तिः। तत्र नवमीविद्धा ग्राह्या।

अष्टमी नवमीविद्धा नवमी चाष्टमीयुता ।

इति ब्रह्मवैवर्तात् । अत्र भवानीयात्रोक्ता काशीखण्डे—

भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः ।

न जातु शोकं लभते सदाऽऽनन्दमयो भवेत् ॥ इति ।

चैत्रशुक्लनवमी रामनवमी । इयं च मध्याह्नयोगिनी ग्राह्या ।

चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि ।

सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥

इत्यगस्त्यसंहितोक्तेः । पूर्वेद्युरेव मध्याह्नयोगे कर्मकालव्याप्तेः सैव ग्राह्या । अष्टमीविद्धानिषेधशास्त्रापेक्षया कर्मकालशास्त्रस्य बलवत्त्वात् । दिनद्वये मध्याह्नव्याप्तौ तदभावे वा कर्मकालशास्त्रस्योभयत्र समानत्वादुदासीनत्वाद्वा पूर्वदिने पुनर्वसुनक्षत्रयुक्तामपि त्यक्त्वा परैव कार्या,

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।

उपोषणं नवम्यां च दशम्यां चैव पारणम् ॥

इति माधवीयेऽगस्त्यसंहितोक्तेः ।

पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥

इति प्राशस्त्यापादकवचनापेक्षया निषेधशास्त्रस्य बलवत्त्वात् । तथा चाह माधवः—'अष्टमीविद्धा सऋक्षापि नोपोष्या' इति ।

विद्धैव चेदृक्षयुक्ता व्रतं तत्र कथं भवेत् ।

इत्युपक्रम्य—

विद्धानिषेधश्रवणात् नवमी चेति वाक्यतः ।

वैष्णवानां विशेषात्तु तत्र विष्णुपरैरपि ॥

इति रामार्चनचन्द्रिकायां निषेधशास्त्रप्राबल्यालोचनेन ऋक्षयुक्तायास्त्याज्यत्वमभिहितम् ।

दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः ।

तदन्येषां च सर्वेषां व्रतं तत्रैव निश्चितम् ॥

इति च तत्रोक्तम् । अत्र 'दशम्यादिषु वृद्धिश्चेत्' इति वचनाद्यदा प्रातस्त्रिमुहूर्ता नवमी, दशमी च क्षयवशात्सूर्योदयात्प्रागेव समाप्यते, तदा स्मार्तानां तत्रैवैकादशीनिमित्तोपवासान्नवमीव्रताङ्गपारणालोपः स्यादतोऽष्टमीविद्धैव स्मार्तैः कार्या । वैष्णवानां त्वरुणोदयविद्धैकादश्या हेयत्वान्न नवमीव्रताङ्गपारणालोपप्रसङ्ग इति द्वितीयैव तैः कार्येति सूच्यते । त्याज्या विष्णुपरायणैरित्यनेन कर्मकालशास्त्रस्यापि बाध इति तदाशयः । 'दशम्यादिषु वृद्धिश्चेत्' इत्यत्र दशमीवृद्धिररुणोदयकाले सूर्योदयोत्तरं वा दशमीसत्त्वम् , आदिशब्दादेकादशीवृद्धिस्तृतीयदिने सूर्योदयोत्तरमेकादशीसत्त्वं, तत्र च द्वादश्याः क्षयस्तदाऽपि स्मार्तानां दशमीविद्धैकादश्या उपोष्यत्वान्नवमीव्रताङ्गपारणालोपप्रसङ्गोऽस्त्येव । यदा तु मुहूर्तमात्रा द्विमुहूर्ता वा नवमी, दशमी त्वरुणोदयात्पूर्वमेव समाप्यते, तदा मुहूर्तमात्रनवम्युपवासे द्वितीयदिने वैष्णवानामप्येकादश्युपवासप्राप्तेर्नवमीव्रताङ्गपारणालोपप्रसङ्गो भवत्येवेति अष्टमीविद्धैव मध्यान्हव्यापिनी वैष्णवैरप्युपोष्या । एवं क्षयेऽपि विद्धैवोपोष्येत्यर्थात्सिध्यति । रामार्चनचन्द्रिकामते नवमीव्रताङ्गपारणालोपप्रसङ्ग एवाष्टमीविद्धाग्राह्यत्वप्रयोजकः । माधवमते तु कर्मकालव्याप्तिशास्त्रमपि अष्टमीविद्धाग्राह्यत्वप्रयोजकमिति विशेषः ।

केचित्तु विष्णुपरायणैः भक्तैरिदं नवमीव्रतं कार्यमित्युपदेशमात्रेणैवोपपत्तेरष्टमीविद्धा सर्वैरपि त्याज्येत्याहुः । कर्मकालव्याप्तिशास्त्रं तु विद्धानिषेधशास्त्रापेक्षया प्रबलमेव । पूर्वेद्युरेव मध्यान्हव्याप्तौ वैष्णवैरवैष्णवैश्च पूर्वैव ग्राह्या । समाचारोऽपि प्रायः सर्वेषामयमेव । वाल्लभादीनां समाचारः परं रामार्चनचन्द्रिकानुसारी दृश्यते इत्यलम् ।

इयं च मलमासे न कार्या ।

सुजन्मप्रत्ययजन्म स्यान्नोपवासः कृतो भवेत् ।
न कुर्यान्मलमासे तु महादानव्रतानि च ॥

इति संग्रहवचनात्,

स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।

इति निषेधाच्च । एवं जन्माष्टम्यादावपि बोद्धव्यम् ।

मेषसंक्रमे पूर्वाः पराश्च दश घटिकाः पुण्यकालः । रात्रौ निशीथात्पूर्वं संक्रमे पूर्वदिने मध्याह्नोत्तरं पुण्यकालः, निशीथोत्तरं संक्रमे परदिने मध्याह्नपर्यन्तं पुण्यकालः, निशीथमध्ये संक्रमे पूर्वदिने मध्याह्नोत्तरं परदिने मध्याह्नपर्यन्तं च पुण्यकालः ।

वैशाखशुक्लतृतीयाऽक्षय्यतृतीया । सा पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वयेऽपि तद्व्याप्तौ परैव,

वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ।
दुर्लभा बुधवारेण सोमेनापि युता तथा ॥
रोहिणीबुधयुक्ताऽपि पूर्वविद्धा विवर्जिता ।
भक्त्या कृताऽपि मान्धातः ! पुण्यं हन्ति पुराकृतम् ।
गौरी विनायकोपेता रोहिणीबुधसंयुता ।
विनाऽपि रोहिणीयोगात्पुण्यकोटिप्रदा सदा ॥

इति नारदीयात् । इयं युगादिरपि,

माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ।
तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ।

इति रत्नमालावचनात् ।

माघस्य पौर्णमास्यां तु घोरं कलियुगं स्मृतम् ।

इति ब्राह्मोक्तेर्माघपौर्णमासी कलियुगादिरिति गौडा आहुः ।

दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।

इति भविष्यवचनात् माघमासस्यामैव द्वापरयुगादिरिति लभ्यते । अत्र कल्पभेदाद् युगभेदाद्वा व्यवस्था ज्ञेया । माघ-

स्यामा, नभस्यत्रयोदशी चामान्तमासानुरोधेन ग्राह्या। 'तिथि-कृत्ये च कृष्णादिम्' इति पूर्वोक्तब्राह्मवचनात् पौर्णमास्यन्तमा-सानुरोधेनैव ग्राह्येत्यन्ये।

युगादिषु श्राद्धमुक्तं मात्स्ये--

कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु।
हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत्॥

मन्वादयश्च—

तिथ्यग्नी, न, तिथिः, तिथ्याशे, कृष्णेभो, ऽनलो, ग्रहः।
तिथ्यर्कौ, न, शिवो, ऽश्वो, ऽपातिथी, मन्वादयो मधोः॥

इति दीपिकायामुक्ताः। मधोः मधुमासमारभ्य तिथ्यग्न्या-दयो मन्वादय इति तदर्थः। तत्र तिथिः पूर्णिमा अग्नि-स्तृतीया चैत्रशुक्लपक्षे मन्वादी। वैशाखे न मन्वादिर्ना-स्ति। ज्येष्ठे तिथिः पूर्णिमा मन्वादिः। आषाढे तिथिः पूर्णिमा आशा दशमी मन्वादी। श्रावणे कृष्णपक्षे इभः अष्टमी अर्थात् कृष्णजन्माष्टमी मन्वादिः। भाद्रशुक्लेऽनलस्तृतीया हरितालिका मन्वादिः। आश्विने शुक्लपक्षे ग्रहो नवमी मन्वादिः। कार्तिकशुक्ल-पक्षे तिथ्यर्कौ पौर्णमासीद्वादश्यौ मन्वादी। मार्गशीर्षे मन्वादि-र्नास्ति। पौषशुक्ले शिवः एकादशी मन्वादिः। माघशुक्ले अश्वः सप्तमी मन्वादिः। फाल्गुनेऽपापौर्णमास्यौ मन्वादी। शुक्लपक्ष-स्था युगादयो मन्वादयश्च श्राद्धेऽपि पूर्वाह्णव्यापिन्यो ग्राह्याः, कृष्णपक्षस्थास्त्वपराह्णव्यापिन्यः;

पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः॥

इति पाद्मोक्तेः। मन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या, कृष्णपक्षे त्वपराह्णव्यापिनीति धर्मसारेऽप्युक्तम्। दिनद्वये तत्त्वे परैवेति धर्मतत्त्वविदो हेमाद्र्यादयः। पूर्वाह्णस्तत्र द्वे-

धाविभक्तदिनपूर्वार्धः, 'द्वेधाभक्तदिनांशतोऽत्र गदितः प्राह्णापराह्णौ' इति दीपिकोक्तेः । माध्याह्नादयोऽप्येवम् । अत्र यद्यपि पूर्वाह्णशब्दस्य द्वेधाविभक्तदिनपूर्वार्धवाचित्वं द्वेधाविभागकथनादुल्लिखितं तथापि औदयिकभागस्य मुख्यत्वादन्यत्र बहुत्र त्रिमुहूर्तात्मकपञ्चधाविभक्तदिनपञ्चमभागस्यैव पूर्वाह्णशब्देन ग्रहणादौदयिकत्रिमुहूर्तातिरिक्ताधिकभागव्यापित्वेऽपि किञ्चित्त्रिमुहूर्ताधिकव्याप्तेरेव प्रशस्तत्वेन तस्या एव ग्रहणं बोध्यम् । तदुक्तं धर्मसिन्धौ—'द्वेधाविभक्तदिनपूर्वार्धैकदेशव्यापिनी दिनद्वये चेत् त्रिमुहूर्ताधिकव्याप्तिसत्त्वे परा, न्यूनत्वे पूर्वा' इति । न्यूनत्वे पूर्वेति कथनेन द्वितीयदिने त्रिमुहूर्तमात्रव्याप्तिसत्त्वेऽपि परैवेति सूच्यते । अत एव दिनद्वये उदयव्यापित्वे परैवेति हेमाद्र्यादीनां मतं सङ्गच्छते । प्रातर्द्विमुहूर्तवेधस्यापि त्रिमुहूर्तानुकल्पत्वविधानात्पूर्वदिने त्रिमुहूर्ताभ्यन्तरे तिथेरभावे द्वितीयदिने द्विमुहूर्ताया अपि ग्रहणं कर्तव्यमेव । वस्तुतस्तु पूर्वदिने त्रिमुहूर्ताभ्यन्तरे तिथेरलाभे द्वितीयदिने द्विमुहूर्तन्यूनाया अपि मुहूर्तमात्राया ग्रहणं न्याय्यम् ।

मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।

इत्यादौ मुहूर्तमात्राया अपि ग्राह्यत्वलाभात् । केचित्त्वीदृशे विषये घटिकामात्राया अपि ग्राह्यत्वं वदन्ति । श्राद्धमपि तिथेस्त्रिमुहूर्तव्यापित्वे तत्रैव कर्तव्यम् । अत एव स्मृतिकौस्तुभे "अत्र शुक्लयुगादिश्राद्धे पूर्वाह्णो नियम्यते न तु तद्विहिते दैवेऽपि कर्मणि, तत्र सामान्यशास्त्रादेव पूर्वाह्णस्य प्राप्तत्वात् । 'कृष्णे चैवापराह्णिके' इति चतुर्थपादे कृष्णयुगादिविहिते दैवे कर्मणि अपराह्णो नियम्यते, नतु श्राद्धे, तत्रापराह्णस्यातिदेशशास्त्रादेव प्राप्तेः । यश्च कर्मकालः तद्व्यापिनी तिथिस्तत्र ग्राह्येति न्यायसङ्कुतेन "कर्मणो यस्य यः काल" इति शास्त्रेणैव प्राप्तिसम्भ-

वात् तिथिगतपूर्वाह्णिकत्वापराह्णिकत्वेऽनुद्येते" इत्युक्तम् ।

वैशाखे मलमासे सति तत्रैव युगादिः कार्यः ।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादितः ॥

इति ऋष्यशृङ्गवचनात् । स्मृतिचन्द्रिकायां तु युगाद्यादि-श्राद्धं मासद्वयेऽपि कर्तव्यमित्युक्तम्,

यौगादिकं मासिकं च श्राद्धं चापरपाक्षिकम् ।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥

इति वचनात् । अत्रापरपक्षः कृष्णपक्षो न तु महालयस्तस्य मलमासे निषेधात् ।

प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरम् ।
मन्वादौ च युगादौ च तन्मासोरुभयोरपि ॥

इति मरीचिवचनाच्च । अत्र प्रतिवत्सरं क्रियमाणं कल्पादि-श्राद्धं ग्राह्यम् । अयं च निर्णयः सर्वयुगादिषु बोद्धव्यः ।

**वैशाखशुक्लसप्तम्यां गङ्गोत्पत्तिः।** इयं च शिष्टाचारान्म-ध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तावव्याप्तावेकदेशव्याप्तौ वा पूर्वा, युग्मवाक्यात् ।

**वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती।** सा प्रदोषव्या-पिनी ग्राह्या,

वैशाखे शुक्लपक्षे तु चतुर्दश्यां निशामुखे ।
मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् ।
वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारणम् ॥

इति नृसिंहपुराणोक्तेः । दिनद्वयेऽपि तद्व्याप्तावंशतः सम-व्याप्तौ च परा, संकल्पकाले सत्त्वात् । विषमव्याप्तौ त्वधिक-व्याप्तिमती । दिनद्वयेऽप्यव्याप्तौ परा, परदिने गौणकालव्याप्तेः सत्त्वात्पूर्वदिने च तदभावात् । यत्तु—

ततो मध्याह्नवेलायां नद्यादौ विमले जले ।

इत्युपक्रम्य--

परिधाय ततो वासो व्रतकर्म समारभेत् ॥

इति तत्रैवोक्तं, तत् संकल्परूपव्रतोपक्रमविषयं, न त्वेतावता मध्याह्नव्यापिनी ग्राह्येति भ्रमितव्यं पूर्वोक्त 'चतुर्दश्यां निशामुखे' इति विरोधात् ।

वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।
अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ! ॥

इति टोडरानन्दे स्कान्दाच्च । 'कूर्मः सिंहो बौद्धकल्की च सायम्' इति पूर्वोक्तपुराणसमुच्चयवचनाच्च ।

वृषसंक्रान्तौ पूर्वाः षोडश घटिकाः पुण्यकालः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

ज्येष्ठशुक्लदशमी दशहरा,

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥

इति ब्राह्मोक्तेः ।

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।

इति स्कान्दे दशयोगा उक्ताः । इयं च यत्रैव योगबाहुल्यं सैव ग्राह्या, योगाधिक्ये फलाधिक्यात् । ज्येष्ठे मलमासे सति तत्रैव दशहरा कार्या, न शुद्धे;

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

इति ऋष्यशृङ्गोक्तेः । युगादिवद्दशहराऽपि शुद्धेऽपि कार्येति कृत्यरत्नावल्याम् । अस्यां सेतुबन्धरामेश्वरस्य प्रतिष्ठादिनत्वाद्विशेषेण पूजा कार्या,

ज्येष्ठे मासि सिते पक्षे ······ वृषे रवौ।
दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्॥
रामो वै स्थापयामास शिवलिङ्गमनुत्तमम्।

इति स्कान्दे सेतुमाहात्म्योक्तेः।

**ज्येष्ठपौर्णमास्यां सावित्रीव्रतम्।**

ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे।

इत्युपक्रम्य—

व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिरा भवेत्॥

इति स्कन्दभविष्ययोरुक्तेः। दाक्षिणात्याश्चैतदेवाद्रियन्ते। निर्णयामृते भविष्ये तु—

अमायां च तथा ज्येष्ठे वटमूले महासती।
त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत्॥

इति वचनादेतद्व्रतममायामुक्तम्। मदनरत्ने तु इदमेव वाक्यं 'पञ्चदश्यां तथा ज्येष्ठे' इति पठित्वा ज्येष्ठपौर्णमास्यामेवोक्तम्।

अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया।
अयाचितं चतुर्दश्याममायां समुपोषणम्॥

इत्येतत्पाश्चात्या आद्रियन्ते। सावित्रीव्रते पूर्णिमाऽमावास्ये पूर्वाविद्धे ग्राह्ये,

भूतविद्धा न कर्तव्या अमावास्या च पूर्णिमा।
वर्जयित्वा नरश्रेष्ठ सावित्रीव्रतमुत्तमम्॥

इति ब्रह्मवैवर्तात्।

भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्।
वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन॥

इति स्कान्दाच्च। यदा त्वष्टादशघटिका चतुर्दशी, तदा परा ग्राह्या।

पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ।
नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि ॥

इति माधवोक्तेः । वस्तुतस्तु—

भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।

इत्यस्य दूषकतानुवादेन नाडीविशेषविधायकत्वं, लाघवात्; न तु वेधविशिष्टदूषकताविधायकत्वं, गौरवात् । तथा च यत्र व्रते भूतविद्धाऽमावास्या निषिद्धा तत्रैवाष्टादशघटिकाविशिष्टभूतस्य दूषकत्वम्; न तु यस्मिन्व्रते भूतविद्धाया ग्राह्यत्वं, तत्राष्टादशनाडीविशिष्टस्य भूतस्य दूषकत्वम् । अत एव स्कन्दव्रते पञ्चमीविद्धायाः षष्ठ्या ग्राह्यत्वात्तत्र पञ्चमीवेधस्यादूषकत्वात्षण्मुहूर्तपञ्चमीविद्धायामपि षष्ठ्यां तत्स्कन्दव्रतं कर्त्तव्यमेव । अन्यथाऽष्टादशनाडीविशिष्टभूतविद्धामावास्याया इव षण्मुहूर्तविशिष्टपञ्चमीविद्धायाः षष्ठ्या अपि 'नागो द्वादशनाडीभिः' इत्यनेन वर्जनीयत्वं स्यात् । तस्मात् 'भूतोऽष्टादशनाडीभिः' इत्यस्य सावित्रीव्रताविषयत्वाभावादष्टादशनाडीवेधेऽपि सावित्रीव्रतेऽमा पूर्णिमा च पूर्वैव ।

पूजाप्रधानसावित्रीव्रते एकाहसाध्ये शिष्टाचारप्राप्ते
पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।

इति सामान्यवचनान्मध्याह्नव्यापिनी ग्राह्या । अस्मिन्व्रते तु पूर्वविद्धाया अविधानात्सामान्यतः प्रवृत्तस्य 'भूतोऽष्टादशनाडीभिः' इत्यस्य प्रवृत्तेर्दुर्वारत्वादष्टादशनाडीवेधे उत्तरैवामा पूर्णिमा च ग्राह्येति काशीनाथादयः । अग्रत्वे शिष्टा अपि तथैवाचरन्ति । पूर्वविद्धाया ग्राह्यत्वं च सायं त्रिमुहूर्तसत्त्वे एव, तदैव तस्याः साकल्यापादकवचनेन ग्रहीतुं योग्यत्वादिति बोध्यम् । अत्र पूर्णिमानुरोधेनैव यथा त्रिरात्रसंपत्तिर्भवति तथा त्रयोदश्यादि ग्राह्यं, तस्याः प्रधानत्वात् । पारणं तु पूर्णिमान्ते कार्यम् ।

मिथुनसंक्रान्तौ पराः षोडशघटिकाः पुण्यकालः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

**आषाढशुक्लद्वितीयायां रथोत्सवः,**

आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं वै भद्रया सह ॥
यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान् बहून् ।
ऋक्षाभावे तिथौ कार्या यात्राऽसौ प्रीतये मम ॥

इति स्कान्दोक्तेः ।

**आषाढशुक्लैकादश्यां विष्णुशयनोत्सवः,**

एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते क्षीरार्णवजले सदा ॥

इति ब्राह्मोक्तेः ।

आषाढशुक्लद्वादश्यामनुराधायोगरहितायां पारणं कुर्यात् ।

आभाकासितपक्षेषु मैत्रः श्रवणरेवती ।
संगमे न हि भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥

इति भविष्योक्तेः । तत्रानुराधाप्रथमपाद एव वर्ज्यः ।
मैत्राद्यपादे स्वपितीह विष्णुः पौष्णान्त्यपादे प्रतिबोधमेति ।
श्रुतेश्च मध्ये परिवर्तमेति सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् ॥

इति विष्णुधर्मोक्तेः । इदं च मलमासे न कार्यम् ।

ईशानस्य बालिर्विष्णोः शयनं परिवर्तनम् ॥

इति कालादर्शे निषेधात् ,

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

इति मोहचूडोत्तरोक्तेश्च ।

**अत्रैव चातुर्मास्यव्रतारम्भ उक्तो भारते—**

आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।

चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियतो नरः ॥ इति ।
वार्षिकांश्चतुरो मासान् वाहयेत्केनचिन्नरः ।
व्रतेन, नो चेदाप्नोति किल्बिषं वत्सरं ध्रुवम् ॥
असम्भवे तुलार्केऽपि कर्तव्यं तत्प्रयत्नतः ।

इति भारतोक्तेश्चातुर्मास्यव्रतं नित्यम् । अस्य चैकादश्यां द्वादश्यां पौर्णमास्यां कर्कसङ्क्रान्त्यां वाऽऽरम्भः,

एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥

इति ब्रह्मवैवर्तात् ,

आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा ।
चातुर्मास्यव्रतारम्भं कुर्यात्कर्कटसंक्रमे ॥

इति वाराहाच्च । समाप्तिस्तु कार्तिकशुक्लद्वादश्यामेव,

चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥

इति भारतोक्तेः ।

अस्यारम्भः शुक्रास्तादावपि कार्यः,

न शैशवं न वार्द्धक्यं च शुक्रगुर्वोर्न वा तिथेः ।
खण्डत्वं चिन्तयेदादौ चातुर्मास्यविधौ नरः ॥

इति वृद्धगार्ग्योक्तेः । इदं च द्वितीयाद्यारम्भविषयम् । प्रथमारम्भस्तु न भवति, निषिद्धस्यास्तादेः सामान्यतः प्रतिप्रसवे गौरवादिति केचित् । ( वस्तुतस्तु वर्षभेदेऽपि व्रतैक्ये मानाभावात्सर्वेऽपि प्रथमारम्भा एव । तत्र च प्रतिप्रसवेनाविशेषात्प्रथमत्वेनाभिमतारम्भेऽप्यस्तादिविचारस्यानावश्यकत्वात् । ) आशौचमध्येऽपि द्वितीयाद्यारम्भो भवति,

अशुचिर्वा शुचिर्वाऽपि यदि स्त्री यदि वा पुमान् ।
व्रतमेतं नरः कृत्वा मुच्यते सर्वपातकैः ॥

इति स्कान्दोक्तेः,

आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति विष्णुवचनाच्च ।

असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि ।
मलमासमशौचं च वर्जयेन्मतिमान्नरः ॥

इति हेमाद्रौ चातुर्मास्यव्रतप्रकरणे भविष्यवचनं तु दर्शपूर्णमासप्रकरणपठितपूषानुमन्त्रणमन्त्रवदसंबद्धं मध्ये पठितम् । अन्यथा पित्र्यस्य पूर्वोक्तविवाहादेश्च चातुर्मास्यव्रते कः प्रसङ्गः? प्रकरणनिवेशोऽपि प्रथमारम्भविषयत्वमेव तस्य ज्ञेयम् ।

केचित्तु प्रतिवर्षं चातुर्मास्यव्रतप्रयोगाणां भिन्नत्वादाशौचादिपाते द्वितीयादिप्रयोगो न भवत्येवेत्याहुः । तन्न,

प्रतिवर्षं तु यः कुर्यादेवं वै संस्मरन् हरिम् ।
देहान्तेऽतिप्रदीप्तेन विमानेनार्कवर्चसा ॥
मोदते विष्णुलोकेऽसौ यावदाभूतसंप्लवम् ।

इति भविष्यवचने 'प्रतिवर्षं तु यः कुर्यात्' इत्यनेन प्रयोगैक्यसूचनात् ।

आषाढशुक्लपौर्णिमायां व्यासपूजा ।

तत्र त्रिमुहूर्ता चेत्परैव,

त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरमणाप्ययोः ।

इति संन्यासपद्धतिवचनात् ।

कर्कसङ्क्रान्तौ पूर्वास्त्रिंशद्घटिकाः पुण्यकालः । सूर्योदयोत्तरं संक्रमे तु परत एव पुण्यम् । रात्रौ संक्रमे तु माधवमते—

अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥

इति वृद्धगार्ग्योक्तेः,

मिथुनात्कर्कसङ्क्रान्तिर्यदि स्यादंशुमालिनः ।

प्रभाते वा निशीथे वा तदा पुण्यं तु पूर्वतः ॥

इति भविष्योक्तेश्च पूर्वदिन एव पुण्यम् । अयमेव पक्षोऽद्यत्वे शिष्टपरिगृहीतो दृश्यते ।

कर्ककन्याधनुःकुम्भेषु केशादिकर्तनं निषिद्धम् ,

कुम्भे कर्कटके वाऽपि कन्यायां कार्मुके रवौ ॥
रोमखण्डं गृहस्थस्य पितॄन्प्राशयते यमः ॥

इति सुमन्तुवचनात् ।

श्रावणशुक्लपञ्चमी नागपूजादौ परैव ग्राह्या,

पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।
तस्यां तु तुषिता नागा इतरा सचतुर्थिका ॥

इति चमत्कारचिन्तामण्युक्तेः ।

श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हि ताः ॥

इति मदनरत्नेऽभिधानाच्च ।

अथोपाकर्म--

अथातः श्रावणे मासे श्रवणर्क्षयुते दिने ।
श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते ॥
दिवसे विदधीतैतदुपाकर्म यथोदितम् ।
अध्यायोपाकृतिं कुर्यात्तत्रोपासनवह्निना ॥

इति बह्वृचानामुपाकर्म श्रवणर्क्षादिषु भवति । अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदिपरेति हेमाद्रिः । श्रावण्यामित्यस्य यजुर्वेदिपरत्वे शौनकोक्तौ तद्वैयर्थ्यं स्यात् । तस्मात्पर्वद्वये श्रवणं निर्णायकम् , 'पर्वण्यौदयिके' इत्युपक्रम्य 'बह्वृचाः श्रवणे कुर्युः' इत्युक्तेः । तदलाभे शुक्लपञ्चम्याम् । तस्माच्छ्रवणयुक्ते दिने तद्युक्तायां पूर्णिमायामित्यनयोः पक्षयोराचाराद्व्यवस्थेति सांप्रदायिकाः । 'उपासनवह्निना' इति तु

कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते ।

इति कारिकोक्तलौकिकाग्निना विकल्पते । तत्रापि 'अध्याप्यैरन्वारब्धाः' इति सूत्रात्माशिष्यस्य कर्तृत्वे तदधिकारिकस्याऽऽचार्यस्याग्नौ 'नान्यस्याग्नावन्यो जुहुयात्' इति निषेधाल्लौकिके एव । शिष्याभावे तु स्मार्ते इति निगर्वः । "अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे–श्रवणेन, श्रावणस्य पञ्चम्यां, हस्तेन वा" इत्याश्वलायनगृह्ये श्रवणो मुख्योऽन्ये गौणाः, तस्य प्राथम्यात् । श्रवणस्याऽहर्द्वययोगे हेमाद्रौ व्यासः—

घनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ॥
श्रवणेन तु यत्कर्म ह्युत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥ इति ।
उदयव्यापिनि त्वेवं विष्णुऋक्षे घटिकाद्वयम् ।
तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् ॥

इति गार्ग्योऽपि । पूर्वेद्युरुत्तराषाढयोगे परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादावुपाकर्म कार्यं न तु पूर्वविद्धायां पूर्णिमायां पूर्वविद्धे श्रवणे वा । सङ्गवकालमात्रस्पर्शयोगादुपाकर्म न कार्यम् । पूर्वाहोरात्रे एकोनषष्टिघटिकानन्तरं श्रवणस्पर्शे द्वितीयदिनेऽहोरात्रव्याप्तौ तृतीयदिने सङ्गवात्पूर्वमेव श्रवणनिवृत्तौ द्वितीयदिने श्रवणस्यौदयिकत्वेऽपि,

अष्टपञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृतः ।

इति परिभाषितोदयकालव्यापित्वाभावात्तृतीयदिने परिभाषितोदयकालव्यापित्वस्योदयोत्तरं द्विमुहूर्तादिकालव्यापित्वस्य च सत्त्वात्,

घनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद् भवेत् ।

इति वचनेन घनिष्ठायुक्तत्वस्य प्राशस्त्यबोधनाच्च तृतीय-

दिने श्रवणस्य ग्राह्यत्वप्रसक्तौ,

श्रवणः श्रावणं पर्व संगवस्पृग्यदा भवेत् ।
तदैवौदयिकं कार्यं नान्यदौदयिकं भवेत् ॥

इत्यपवादकवचनेन संगवस्पर्शाभावे तृतीयदिने श्रवणस्य पर्वणो वा ग्राह्यत्वमपोद्यते न तूत्तराषाढदूषितस्य श्रवणस्य भूतदूषितस्य पर्वणो वा संगवस्पर्शमात्रेण ग्राह्यत्वम्, तावन्मात्रेणैव चारिताथ्र्योपपत्तौ निषेधापवादकल्पने मानाभावात् । यथा 'व्रीहिभिर्यजेत' इतिवाक्यात् 'अश्वशफमात्रं पुरोडाशं करोति' इति वाक्याच्चाश्वशफमात्रपुरोडाशयोग्यव्रीहीणामभावेऽश्वशफमात्रपुरोडाशसंपादनायाल्पपरिमाणकव्रीहिषु संयोजनार्थं निषिद्धा माषा नोपादीयन्ते, एवमुत्तरदिने कर्मयोग्यकालव्यापिनः श्रवणस्य पर्वणो वाऽभावे निषिद्धस्योत्तराषाढाविद्धस्य श्रवणस्य भूतविद्धपर्वणश्च ग्रहणं नोचितम् । 'अयज्ञिया वै माषाः' इति निन्दोन्नीतनिषेधानुप्रवेशवत्

श्रवणेन तु यत्कर्म ह्युत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥

इति निन्दोन्नीतनिषेधानुप्रवेशस्य,

अतो भूतदिने तस्मिन्नोपाकरणमिष्यते ।
अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाक्रिया ।
दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः ॥

इति निषेधानुप्रवेशस्य च प्रकृते दुर्वारत्वात् । श्रवणे पर्वणि हस्ते वा संक्रान्त्यादौ तु—

उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

इति हेमाद्रौ निषेधात्पञ्चम्यादावुपाकर्म कर्तव्यम्

यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् ।

स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥

इति मदनरत्ने वचनात् ।

अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं यदा ।

उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ॥

इति कात्यायनोक्तेरर्धरात्रानन्तरं ग्रहणे संक्रमे वा न दोषः । ग्रहणसंक्रान्तिकाले श्रवणसत्त्वे पर्वसत्त्वे एव निषेधो नार्वागिति मूर्खोक्तिर्नादरणीया । ग्रहविशिष्टानां हस्तश्रवणपर्वणां प्रत्येकं निषेधे तद्युतोपाकर्मनिषेधे च विशिष्टोद्देशे वाक्यभेदात् पञ्चम्यां संक्रान्तौ निषेधाभावापत्तेश्च । तेनार्धरात्रात्पूर्वं ग्रहसंक्रमयोगे एव तन्निषेधो न तद्योगे एवेति सिद्धम् । इदं च

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।

इति प्रचेतसोवचनात्पूर्वाह्णे कार्यम् । सामगैस्तु—

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णिके ।

पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ॥

इति गोभिलोक्तेरपराह्णे कार्यम् । याजुषास्तु उपाकर्म पर्वणि कुर्युः । पर्व चाऽऽपस्तम्बैरौदयिकं ग्राह्यम् ,

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।

बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥

इति गार्ग्योक्तेः,

सम्प्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदयिके पुनः ।

अतो भूतादिने तस्मिन्नोपाकरणमिष्यते ॥

इति कालिकापुराणाच्च,

अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाक्रिया ।

दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः ॥

इति हेमाद्र्यादौ दोषोक्तेश्च ।

औदयिकस्य श्रवणस्य पर्वणो वा सङ्गवस्पर्शे एव ग्राह्यत्वं,

श्रवणः श्रावणं पर्व सङ्गवस्पृग्यदा भवेत् ।
तदैवौदयिकं कार्यं नान्यदौदयिकं भवेत् ॥
श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत् ॥
उदये सङ्गवस्पर्शे श्रुतौ पर्वाणि चार्कभे ।
कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात् ॥

इति वचनेभ्यः । तेनोदयसङ्गवोभयव्यापित्वं श्रवणादीनां मुख्यम् । परेद्युः सङ्गवाभावे पूर्वेद्युरुदयाभावे च पूर्वेद्युश्चतुर्दशीवेध-निषेधात्सामान्यवाक्यादौदयिकी कर्मपर्याप्ता ग्राह्या, न पूर्वा, सङ्ग-वस्पर्शमात्रेण पूर्वविद्धानिषेधस्यापवादितुमशक्यत्वात् । सङ्गवस्पर्श-रहिताया ग्राह्यत्वापवादकरणेनैव 'नान्यदौदयिकी' इत्यस्य चारि-तार्थ्यात् । तेन कर्मपर्याप्ताया औदयिक्या अभावे भाद्रादौ का-लान्तरे एवोपाकर्मानुष्ठानं न तु निषिद्धे श्रवणे पर्वणि वा । न हि अश्वशफमात्रपुरोडाशसम्पादकव्रीह्यलाभे 'अयाज्ञिया वै माषा' इति निषिद्धमाषग्रहणमपि युक्तम् । अत एव परेद्युः सङ्गवव्याप्ता-वेव पूर्वविद्धानिषेधः सङ्गवव्याप्त्यभावे तु पूर्वविद्धानिषेधो नेति व्यवस्थाऽप्ययुक्ता, पूर्वविद्धाग्राह्यत्ववचनसत्त्वे एव तस्याः सम्भवात् तादृशवचनस्य चाभावात् । वचनाभावेऽपि निषेधस-ङ्कोचकल्पने तु व्रीह्यलाभे माषनिषेधसङ्कोचकल्पनाऽपि स्यात्, न तु सा युज्यते । तस्मात् श्रवणः श्रावणं पर्व वोदयसङ्गवोभ-यव्यापि मुख्यमिति शिष्टाभट्टटीपराशरमाधवपृथ्वीचन्द्रादयः ।

परे तु—

उदयव्यापिनि त्वेव विष्णुऋक्षे घटिकाद्वयम् ।
तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् ॥

इति पूर्वोक्तवचनबलात्सङ्गवस्पर्शाभावेऽपि मुहूर्तमात्रश्रवण-स्यापि ग्राह्यत्वं बोध्यते । 'श्रवणः श्रावणं पर्व' इत्यादीनां तु

प्राशस्त्यमात्रपरत्वमेव ।

वस्तुतस्तु उभयदिने श्रवणसत्त्वे पर्वसत्त्वे वोत्तरस्य श्रवणस्य पर्वणो वोत्तरयोगात्प्राप्तं प्राशस्त्यमपोद्यते । तेन न कस्यापि वैयर्थ्यम् । ततश्च द्वितीयदिने सङ्गवाभावे पूर्वविद्धानिषेधवचनस्यापवादाभावान्निषिद्धपूर्वविद्धायां नोपाकर्मानुष्ठानम् । यथा सायं प्रातर्वाऽग्निहोत्रानुष्ठानासम्भवे जीवनावाच्छिन्नसामान्यकालेऽनिषिद्धे दर्शादौ वाऽग्निहोत्रानुष्ठानं यथा वाऽश्वशफमात्रपुरोडाशसम्पादकव्रीहिलाभे यागाक्षिप्तानिषिद्धवर्ज्यद्रव्येणैव यागानुष्ठानं न तु निषिद्धमाषादिना, तथोत्तरादिने सङ्गवस्पर्शाभावेऽपि कर्मपर्याप्तौदायिके मुहूर्तमात्रव्यापिनि श्रवणादिके पञ्चम्यादौ कालान्तरे वोपाकर्मानुष्ठानं न तु निषिद्धे कदाऽपि, अपवादाभावे उत्सर्गस्यैव प्राप्तेरित्याहुः ।

कात्यायनादीनां तु दिनद्वये पूर्वाह्णव्याप्तावेकदेशस्पर्शे वा पूर्वैवेति हेमाद्रिः ।

मदनरत्ने तु--

पर्वण्यौदायिके कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसङ्क्रान्तिवर्जिते ॥

इति बह्वृचान् प्रति कर्मविधानार्थं प्रवृत्ते बह्वृचपरिशिष्टे तैत्तिरीयककर्मविध्ययोगात् ।

चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान् स्वीकुर्वतः पद्मयोनेस्तौ जह्रतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
सम्प्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदयिके पुनः ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ॥
अशुभं वर्जयेत्कालं वेदाहरणशङ्कया ।

इति कालिकापुराणात्सामान्यत औदयिकपर्वप्राप्तेस्तन्निषेधेन 'बह्वृचाः श्रवणे कुर्युः' इति बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदमनुवादत्वादनुवादस्य च प्राप्त्यधीनत्वात्प्राप्तेश्च पूर्वोक्तकालिकापुराणेन यजुर्वेदमात्रपरत्वात्सर्वयजुर्वेद्युपलक्षणार्थमवयुत्याऽनुवादो वा न तु विधायकम् । येन तैत्तिरीयकसम्बन्धिधर्मविधानार्थं प्रवृत्तेनापस्तम्बादिगृह्येण तल्लाभे पुनस्तदुपादानं तैत्तिरीयकाणामेवौदयिकं पर्व ग्राह्यमिति विशेषविधिनोपसंहारात्कालिकापुराणादेस्तैत्तिरीयकमात्रविषयता स्यात् । अनुवादत्वे तु 'न विधौ परः शब्दार्थः' इति न्यायस्याप्रवृत्त्या लक्षणाश्रयणं न दोषाय प्रभवति । औदयिकपर्वविशिष्टोपाकर्मोद्देशेन तैत्तिरीयककर्तृविधौ तैत्तिरीयककर्तृविशिष्टोपाकर्मोद्देशेनौदयिकपर्वविधौ वा वाक्यभेदापत्तेः, विशिष्टोद्देशेन विधाने विशेषणांशे विशेष्यांशे च विधेयसम्बन्धबोधनेन वाक्यभेदस्य स्फुटत्वात् । तस्मात्तैत्तिरीयकपदाविवक्षया सर्वयजुर्वेदिनामौदयिकमेव पर्वेत्युक्तम् ।

अत्र कमलाकरभट्टः—यत्तावद् बह्वृचान् प्रति कर्मविधानार्थं प्रवृत्ते बह्वृचपरिशिष्टे तैत्तिरीयकर्मविध्ययोगादित्युक्तं, तदसङ्गतम्,

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

इत्यादितदुदाहृतपरिशिष्टे एव वेदान्तरधर्मविधीनां दर्शनात् ।

यदि सामान्यतः प्रवृत्तकालिकापुराणात्तैत्तिरीयकपदाविवक्षयौदयिकपर्वग्रहणं यजुर्वेदिमात्रसाधारणमित्युच्यते, तर्हि तदनुरोधादेव बह्वृचादीनामपि औदयिकपर्वग्रहणं स्यात्पूर्वार्धस्येवोत्तरार्धस्याप्यनुवादत्वात् । यदि च 'बह्वृचाः श्रवणे कुर्युः' इत्यत्र साक्षाद्विधिप्रत्ययश्रवणेन बह्वृचान् प्रत्यौदयिकश्रवणवि-

धानात्कालिकापुराणस्य बह्वृचातिरिक्तपरत्वं, तर्हि 'पर्वण्यौदयिके कुर्युः' इत्यत्रापि साक्षाद्विधिप्रत्ययश्रवणेन तैत्तिरीयकान् प्रत्यप्यौदयिकपर्वविधानात्कालिकापुराणस्यार्थवादत्वेनैतत्माप्तानुवादित्वात्कातीयाद्यातिरिक्तपरत्वमेव, तैत्तिरीयकाणां सूत्रे औदयिकपर्वविधानाभावेनात्र तदनुवादासम्भवात् ।

न च तैत्तिरीयकविशिष्टोपाकर्मोद्देशेनौदयिकपर्वविधाने वाक्यभेदः, 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्र ब्राह्मणमात्रस्योपनयनोद्देश्यत्वायोग्यत्वेनाष्टवर्षत्वविशिष्टब्राह्मणस्योद्देशेनोपनयनविधानवत् 'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' ( जै० सू० ६-४-६ ) इत्यत्राऽऽर्तिमात्रस्योद्देश्यत्वासम्भवेन हविर्विशिष्टार्त्युद्देशेन पञ्चशरावौदनयागविधानवच्च तैत्तिरीयककर्तृमात्रस्यौदयिकपर्वोद्देश्यत्वासम्भवेन तैत्तिरीयकविशिष्टोपाकर्मोद्देशेनौदयिकपर्वविधानसम्भवात् । यत्र हि विशेषणे विशेष्ये च विधेयसम्बन्धो बोध्यते यथा रूपवान् घटोऽनित्य इत्यादौ रूपे तद्विशिष्टे घटे चानित्यत्वं, तत्रैव विशिष्टोद्देशेन विधाने वाक्यभेदः, न तु तदुपलक्षितविशेष्योद्देशेन विधाने । तथा च प्रकृते तैत्तिरीयकोपलक्षितोपाकर्मोद्देशेनैवौदयिकपर्वविधानं न तु तैत्तिरीयके तदुपलक्षितोपाकर्मणि चौदयिकपर्वसम्बन्धविधानं, येन वाक्यभेदः स्यात् । तस्माद्वाक्यभेदरूपदोषाभावेनौदयिकपर्वविधानस्य न्याय्यत्वात्तैत्तिरीयकपदं विवक्षितार्थपरमेवेति न यजुर्वेदिमात्रसाधारण्येनौदयिकपर्वग्रहणं युक्तम् । अन्यथोत्तरार्धे बह्वृचपदस्याप्यविवक्षापत्त्या श्रवणस्यैव सर्वसाधारण्यापत्तिरिति ।

अत्राभिधीयते—यद्यपि

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

इति बह्वृचपरिशिष्टे वेदान्तरधर्मविधानमुपलभ्यते, तथापि प्रायो बह्वृचधर्मविधानस्यैव तत्रोपलब्धेः।

अथातः श्रावणे मासे श्रवणर्क्षयुते दिने।
श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते॥
दिवसे विदधीतैतदुपाकर्म यथोदितम्॥

इति कालचतुष्टयस्य तत्परिशिष्टे विधानात् श्रावण्याः पौर्णमास्या अपि बह्वृचोपाकर्मकालत्वप्राप्तेर्यदा पूर्वदिने औदयिकः श्रवण उत्तरदिने चौदयिकी पौर्णमासी तदा औदयिकपौर्णमास्यां बह्वृचैरुपाकर्म कार्यमौदयिके श्रवणे वेति सन्देह औदयिके श्रवण उपाकर्म कार्यं, नत्वौदयिकपौर्णमास्यामिति निर्णयार्थं प्रवृत्तस्य 'बह्वृचाः श्रवणे कुर्युः' इत्यस्य वचनस्योपष्टम्भकतया

पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः।

इत्युपयुज्यते, न तु स्वातन्त्र्येण तैत्तिरीयकाणामुपाकर्मण्यौदयिकपर्वविधायकमिदं वचनम्।

संप्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदायिके पुनः।
अतो भूतादिने तस्मिन्नोपाकरणमिष्यते॥
अशुभं वर्जयेत्कालं वेदाहरणशङ्कया।

इति कालिकापुराणवचनेनान्ययजुर्वेदिनामिव तैत्तिरीयकाणामप्युपाकर्मण्यौदयिकपर्वणः प्राप्तत्वेन तद्विधानस्यायोग्यत्वात्। न हि विधिप्रत्ययश्रवणमात्रेणात्र तद्विधायकत्वं युक्तम्, 'विष्णुरुपांशुर्यष्टव्यः' इत्यादौ विधिप्रत्ययश्रवणेऽपि विधायकत्वाभावात्। यथा तत्रोपक्रमोपसंहाराभ्यामेकवाक्यत्वप्रतीत्या 'उपांशुयाजमन्तरा यजति' इत्यस्यैव विधिप्रत्ययाश्रवणेऽपि विधित्वं कल्प्यते 'विष्णुरुपांशुर्यष्टव्यः' इत्यादीनां चार्थवादत्वं, तथा प्रकृतेऽपि 'कुर्युः' इतिविधिप्रत्ययश्रवणेऽपि विधेयार्थस्यान्यतः प्राप्तत्वादुपाकर्मकालद्वैधे बह्वृचान् प्रति श्रवणग्राह्यत्वबोधनार्थं प्रवृत्त-

स्य 'बह्वृचाः' इत्याद्युत्तरार्धस्य शेषतया पर्वकालविधायकवचनस्यावसरप्रदर्शनार्थं 'पर्वण्यौदयिके कुर्युः' इति वचनम्। तस्य चावसरस्य तैत्तिरीयकेष्विवान्ययजुर्वेदिष्वपि संभवात्तत्संग्रहस्यापि न्याय्यत्वात्तैत्तिरीयकपदमजहल्लक्षणया यजुर्वेदिमात्रबोधकम्। उत्तरार्धस्य तु पर्वद्वैधे श्रवणस्यैव ग्राह्यत्वबोधनार्थं प्रवृत्त्या न तस्यानुवादकत्वम्। येन कालिकापुराणाद् बह्वृचादीनामपि पर्वग्रहणापत्तिः स्यात्। विधायकवाक्ये उपात्तस्य बह्वृचपदस्याविवक्षायां मानाभावाच्छ्रवणस्य सर्वसाधारण्यापत्तिर्न युक्ता। तस्मात् सर्वेषां यजुर्वेदिनामौदयिकमेव पर्व ग्राह्यम्। तच्च श्रवणवन्मुहूर्तमात्रमपि ग्राह्यम्। तन्न्यूनत्वे तु पूर्वदिने भूतवेधे पञ्चम्यामुपाकर्म कार्यं न तु निषिद्धे पूर्वदिने इत्यलम्।

श्रावण्यां पौर्णमास्यां ग्रहणसंक्रान्तिदुष्टायां कातीयैः श्रावणशुक्लपञ्चम्यामुपाकर्म कार्यम्।

संक्रान्तिर्ग्रहणं वाऽपि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः॥

इति स्मृतिमहार्णवे वचनात्। एवमेव भूतविद्धपर्वणः क्षयेऽपि पौर्णमास्यां कार्यं तुल्यन्यायात्। अत्र वाजसनेयिग्रहणं येषां येषां गृह्ये पञ्चम्युक्ता तेषामुपलक्षणम्। पञ्चमी हस्तस्योपलक्षणम्। येषां गृह्ये हस्तपञ्चम्यौ नोक्ते तैः प्रौष्ठपद्यां कार्यम् 'श्रावण्यां प्रौष्ठपद्यां वा' इत्युक्तेः। 'श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य' इति बौधायनवचनं तु प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थम्। उपाकर्मणो वार्षिकमिति समाख्यया वर्षास्वेव तदनुष्ठानस्योचितत्वात्। सामगास्तु भाद्रपदहस्ते ग्रहादिदोषदूषिते सति श्रावणे हस्ते कुर्युः।

बह्वृचाः श्रवणे चैव हस्तर्क्षे सामवेदिनः।

इति गोभिलोक्तेः। हस्तोऽपि श्रवणवदुत्तर एव ग्राह्यः।

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

इति परिशिष्टोक्तेः। एतच्च शुक्रास्तादावपि कार्यम्,

उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ।

इति लिखितवचनात्। अस्ते प्रथमारम्भस्तु न भवति,

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा ।
तथाऽधिमाससंसर्पमलमासादिषु द्विजे ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ।

इति कश्यपोक्तेः।

अत्र प्रथमारम्भे वृद्धिश्राद्धं कुर्यात्,

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किञ्चित्समारभेत् । इति ।

एतच्चाधिमासे न कार्यम्,

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।

इति कात्यायनोक्तेः।

दशाहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादितः ॥

इति ऋष्यशृङ्गवचनं तु सामगविषयं, तेषां सिंहार्के एवोपाकर्मोक्तेः। अधिमासादौ "तथाऽधिमाससंसर्पमलमासादिषु द्विजे। प्रथमोपाकृतिर्न स्यात्" इति निषेधोऽपि सामगानामेव सार्थकः। अन्येषां तु--

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।

इति कात्यायनवचनेनाधिमासादावुपाकर्मादेरप्राप्तत्वात् ।

उत्सर्जनं तु तत्तच्छाखीयानां भिन्नभिन्नकाले विहितमपि सर्वैरुपाकर्मदिन एव वा कार्यम्,

पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा ।

इति खादिरगृह्योक्तेः। उपाकर्मोत्सर्गयोः कर्मविशेषमाह

कार्ष्णाजिनिः—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन् दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः ॥ इति ।

अस्यामेव पौर्णमास्यां रक्षाबन्धनमुक्तं भविष्ये—

संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम् ।
शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते ॥
उपाकर्माणि कर्तव्यमृषीणां चैव पूजनम् ।
ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ॥
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः । इति ।

तत्र "जुहोति व्याहृतीश्चतस्रस्तन्त्रं समाप्य प्रतिसरान् दक्षिणे पाणावाबध्नीरन् स्वस्त्ययनार्थमथ दध्यक्षतधाना भक्षयन्ति" इति छन्दोगपरिशिष्टकवाक्यतया—

ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः ॥

इत्यादिना स्मार्तसमन्त्रस्नानपूर्वकोपाकर्मोत्तराङ्गत्वेन रक्षाबन्धनं विधीयते, शूद्राणां तु मन्त्ररहितस्नानादेरुक्तत्वात्तादृशस्नानपूर्वकदानोत्तराङ्गत्वेनैव । अपराह्णकालिकत्वं तु तस्यार्थसिद्धं, मध्याह्नस्नानपूर्वकोपाकर्माद्यनुष्ठानेन द्वेधाविभक्तादिनपूर्वभागस्योपक्षीणत्वात् । अत एव भद्रासत्त्वे कालान्तरेऽपि तदनुष्ठानं सिध्यति ।

भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।

इति संग्रहोक्तेः । अङ्गस्य चानुष्ठानमङ्ग्यनुरोधेनैवेति यस्मिन् दिने उपाकर्माद्यनुष्ठानमौदयिके पर्वण्युदयसंबन्धाभयव्यापिनि वा पर्वणि तस्मिन्नेव दिने तदुत्तरकाले रक्षाबन्धनानुष्ठानम् ।

गयोगविधिभेदोऽप्यकृत्वादेव न युज्यते ।

अत एव ग्रहसंक्रान्तिदोषे उपाकर्मण उत्कर्षे रक्षाबन्धनस्याप्युत्कर्षो न्याय्यः । यैस्तु भविष्योक्तं रक्षाबन्धनं यथाविधि नानुष्ठीयते, स्वस्वगृह्योक्तमुपाकर्मैव पर्वादावनुष्ठीयते, तेषामुपाकर्मण उत्कर्षे रक्षाबन्धनस्योत्कर्षाप्राप्त्या समाचारात्पौर्णमास्यामेव लौकिकं रक्षाबन्धनमौदयिके पर्वण्येव । सामवेदिनामुपाकर्मण आपराह्णिकत्वेऽप्यौदयिकहस्तग्रहणस्यैव रक्षाबन्धनस्यापराह्णिकत्वेऽपि 'पौर्णमास्यां दिनोदये' इति भविष्ये उपक्रमे सूर्योदयकालस्यैव निर्देशात्पूर्वदिने प्रायो भद्रादोषस्य नान्तरीयकत्वान्न पूर्वदिने रक्षाबन्धनानुष्ठानमुचितम् ।

नन्दाया दर्शने रक्षा बलिदानं दशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥

इति प्रतिपद्योगनिषेधकं वचनं शुद्धाधिकापरमिति मदनरत्ने नवरात्रप्रकरणे निर्णयसिन्धौ चोक्तम् । अत एव त्रिमुहूर्तव्यापिन्यां पौर्णमास्यां रक्षाबन्धनमुक्तं धर्मसिन्धौ । उपाकर्मानुष्ठानप्रयोजकश्रवणादीनां मुहूर्तमात्रव्यापित्वमिव रक्षाबन्धनोपयोगिपर्वणोऽपि मुहूर्तमात्रव्यापित्वमुचितमित्युक्तम् ।

सिंहे पूर्वाः षोडश घटिकाः पुण्यकालः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

भाद्रकृष्णचतुर्थी बहुलाख्या मध्यदेशे प्रसिद्धा । सा सायाह्नव्यापिनी ग्राह्या । दिनद्वये तत्त्वे पूर्वा ग्राह्या,

गौर्याश्चतुर्थी वटधेनुपूजा दुर्गाऽर्चनं दुर्भरहोलिके च ।
वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति सुखं सराष्ट्रम् ॥

इति दिवोदासीये वचनात् । वत्सस्य पूजा वत्सद्वादशी । अत्र वत्सपूजायाः पृथगुपादानाद्धेनुपूजाशब्देन बहुलाख्या गृह्यते इति स एव व्याचख्यौ । अत्र गोपूजा यवान्नाशनं च तत्रैवोक्तम् ।

**अत्रैव संकष्टचतुर्थीव्रतं स्कान्दे—**

श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये ।
गणेशं पूजयित्वा तु चन्द्रायार्घ्यश्च दीयते ॥ इति ।

अत्र श्रावणोऽमान्तः, 'व्रते शुक्लादिमेव च' इत्युक्तेः । इयं चन्द्रोदयव्यापिनी ग्राह्या,

चन्द्रोदये व्रते चैव तिथिस्तात्कालिकी स्मृता ।

इत्युक्तेः । दिनद्वये चन्द्रोदये सत्त्वे मातृयोगस्य प्रशस्तत्वात्पूर्वा ।

ननु दिवा त्रिमुहुर्तवेधे हि 'मातृविद्धा प्रशस्यते' इत्यस्य प्रवृत्तिर्युक्ता न तु रात्राविति चेत् ? न,

अहस्सु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते ॥

इति वाक्याद्रात्रिवेधस्यापि रात्रिसाध्यकर्मसु हेमाद्रिमाधवादिभिरुक्तत्वादिति केचित् ।

अन्ये तु दिने मुहूर्तत्रयादिरूपस्य तृतीयायोगस्याभावान्माधवोक्तमध्याह्नव्यापित्वस्य सत्त्वात्सम्पूर्णत्वाच्च परैवेत्याहुः । दिनद्वये तदभावे तु परैव । मातृविद्धाप्राशस्त्यवचनस्य भाद्रशुक्लचतुर्थीपरत्वाद्रात्रियोगप्राशस्त्यस्यापि कृष्णाष्टम्यादौ यत्र रात्रियोग उक्तस्तावन्मात्रपरत्वात्सङ्कष्टचतुर्थीव्रते तद्ग्रहणे मानाभावात् । अयमेव पक्षः पुरुषार्थचिन्तामणिसम्मतः । प्रतिमासमनुष्ठीयमानसङ्कष्टचतुर्थीव्रतेऽप्ययमेव निर्णयो ज्ञेयः ।

**अथ जन्माष्टमी** । सा च कृष्णादिमासेन भाद्रकृष्णाष्टमी,

तथा भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥

इति ब्राह्मोक्तेः । तत्राष्टमी द्वेधा–रोहिणीयुता तद्रहिता च । रोहिणीरहिताऽपि चतुर्धा–पूर्वेद्युरेव निशीथयोगिनी, परेद्युरेव निशीथयोगिनी, उभयेद्युर्निशीथयोगिनी, उभयेद्युर्निशीथा-

योगिनी चेति । पूर्वेद्युरेव निशीथयोगे कर्मकालव्याप्तेस्तत्रैव सत्त्वा-त्पूर्वैव । एवं द्वितीयपक्षे परैव । उभयेद्युर्निशीथयोगे परैव, प्रातः सङ्कल्पकालव्याप्तेराधिक्यात् ,

वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी ।

इति ब्रह्मवैवर्ताच्च । एवमुभयेद्युर्निशीथयोगाभावे परैवेति ज्ञेयम् । एवमंशतः समव्याप्तावपि । विषमव्याप्तौ त्वाधिक्येन निर्णयः । रोहिणीयुताऽपि चतुर्धा—पूर्वेद्युरेव निशीथे रोहिणी-युता, परेद्युरेव निशीथे रोहिणीयुता, उभयेद्युर्निशीथे रोहिणी-युता, उभयेद्युर्निशीथे रोहिणीयोगरहिता चेति । अत्राप्याद्ये न सन्देहः,

कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ।

इति पाद्मोक्तेः,

जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।

इति गारुडाच्च,

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।
भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ ॥

इति वह्निपुराणाच्च । अत्र वह्निपुराणवचने 'निशीथे' इत्यु-पादानाद्दिनद्वये रोहिणीयोगे यदि पूर्वेद्युर्निशीथे रोहिणी तदा पूर्वैवेति ध्वनितम् ।

द्वितीयपक्षे त्वसन्देह एव,

अविद्धायां तु सर्क्षायां जातो देवकिनन्दनः ।

इत्यर्धरात्रे ऋक्षसाहित्यमत्ययात् । तृतीयपक्षे परैव,

सऋक्षाऽपि न कर्तव्या सप्तमीसंयुताऽष्टमी ।

इति ब्रह्मवैवर्तात् । उभयेद्युर्निशीथे रोहिणीयोगरहिताऽ-पि त्रेधा—पूर्वेद्युर्निशीथे केवलाऽष्टमी, परेद्युर्निशीथे केवलरोहि-णीत्येका, परेऽह्नि निशीथे केवलाष्टमी, पूर्वेऽह्नि निशीथे केवलरो-

हिणीति द्वितीया, उभयेद्युरष्टम्या रोहिण्याश्च निशीथायोग इति तृतीया । तत्राद्ये परेद्युर्जयन्तीयोगस्य सत्त्वात्परैवेति माधवः,

यस्मिन् वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः ॥

इति तदुक्तेः,

पूर्वविद्धाऽष्टमी या तु उदये नवमीदिने ।
मुहूर्तमपि संयुक्ता सम्पूर्णा साऽष्टमी भवेत् ॥
कलाकाष्ठामुहूर्ताऽपि यदा कृष्णाऽष्टमी भवेत् ।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता न हि ॥

इति पाद्मोक्तेश्च । मुहूर्तमपि संयुक्तेत्यत्र रोहिण्येति शेषः । केचित्त्वष्टम्याः प्राधान्यात्तस्याश्च पूर्वेद्युः कर्मकालव्यापित्वात्पूर्वैव । पाद्मं तु पूर्वेद्युर्निशीथेऽष्टम्यभावे ज्ञेयम् । अन्तर्भावोक्तिस्तु मूर्खप्रतारणमात्रमित्याहुः ।

वस्तुतस्तु—

उपवासद्वयं कार्यं, द्वयोर्नित्यत्वात् । तत्राष्टम्युपवासप्रचार एव प्रायः शिष्टेषु दृश्यते ।

अन्त्ययोः परैव,

सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम ।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्धं भवेद्यदि ॥
तदाऽष्टयामिकं पुण्यं प्रोक्तं व्यासादिभिः पुरा ।

इति स्कान्दादिति दिक् ।

अथ जन्माष्टमीव्रतपारणानिर्णयः । पारणं च

सर्वेष्वेवोपवासेषु पूर्वाह्णे पारणं भवेत् ।
अन्यथा तु फलस्यार्धं धर्ममेवोपसर्पति ॥

इति देवलेन स्मर्यते । तच्चोपवासे व्रतसामान्ये वाक्यम् । "पारणान्तं व्रतं ज्ञेयम्" इत्यत्र हि व्रतशब्दस्य नियम एवार्थः ।

तिथीनामेव सर्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ॥

इत्यत्रादिशब्देनैकभक्तनक्तयोरपि ग्रहणात् । यस्यां तिथा-वुपवासव्रतादीनि कृतानि परेद्युस्तत्तिथ्यन्ते भोजनस्य पारणत्वा-त् । न च "भोक्ष्येऽहमपरेऽहनि" इत्यादिलिङ्गाद्भोजननियमा-त्मकोपवाससमाप्तेश्च भोजनेनैव भावात् पारणस्य भोजनरूपत्वे च रागप्राप्तभोजनानुवादेन पूर्वाह्णकालस्य विधानमस्तु किमपू-र्वविधानेनेति वाच्यम्, शास्त्रीयकर्मसमाप्तेर्ज्ञापनादिफलच्छास्त्री-यत्वावश्यम्भावात् । अन्यथोपवासादौ "अद्भिस्तु पारणं कुर्यात्" इत्यादिप्रतिनिधिविध्यनुपपत्तेः । तस्मात्पारणमुपवासव्रताद्यङ्गमेव । अतस्तत्कालनिर्णयः क्रियते ।

तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ।
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् ॥

इति ब्रह्मवैवर्तात्,

तिथ्यर्क्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा ।
अर्धरात्रेऽथवा कुर्यात्पारणं त्वपरेऽहनि ॥

इति हेमाद्रौ वचनाच्चार्धरात्रेऽप्युभयान्तेऽन्यतरान्ते वा पा-रणमित्येकः पक्षः ।

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।

इति ब्रह्मवैवर्तवचनस्यैतदन्यविषयत्वात्

न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ।
तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम् ॥

इति ब्रह्माण्डपुराणात् रात्रौ सार्धप्रहरमध्य एव कार्यम् ।

महानिशा तु विज्ञेया मध्यमं मध्ययामयोः ।

इति वचनात् महानिशायामुभयान्तेऽन्यतरान्ते वा तृती-यदिने पारणम् 'अपरेऽहनि' इति पारणोत्तरदिनपरत्वाद् उभ-

यान्तस्यावश्यापेक्षणीयत्वात् । "अर्धरात्रेऽथवा कुर्यात्" इत्यत्र "अर्धरात्रे ततः कुर्यात्पारणं त्वपरेऽहनि" इति पाठस्यैव न्याय्यत्वात् । अर्धरात्र इत्यस्य पूर्वार्धान्वयित्वात् महानिशायां पारणस्य सर्वथाऽनुचितत्वात् इति कल्पतरौ मदनरत्ने च द्वितीयः पक्षः । "अर्धरात्रेऽथवा कुर्यात्" इत्ययमेव पाठः साम्प्रदायिकः । तथा च व्रतोत्तरदिनेऽर्धरात्रे पारणं कुर्यादिति सामानाधिकरण्येनैवान्वयस्य न्याय्यत्वात्तृतीयादिने पारणकल्पनमनुचितम् । इत्थं चार्धरात्रे भोजनस्य निषिद्धत्वेऽपि पारणस्य तत्र विधानाद्द्वैधपारणे निषेधाप्रवृत्तेरुभयान्तस्यान्यतरान्तस्य वाऽवश्यापेक्षणीयत्वान्महानिशायामेव तल्लाभे तत्रैव पारणं कर्तुमुचितम् । महानिशातोऽर्वाक् अन्यतरान्तलाभे तु महानिशाभोजननिषेधबाधस्यायोग्यत्वान्महानिशातोऽर्वागेव पारणं कर्तव्यम् । "न रात्रौ पारणं कुर्यात्" इति वचनं तु बहुषु निबन्धेष्वदर्शनान्निर्मूलमेव । इति कमलाकरभट्टस्य तृतीयः पक्षः ।

वस्तुतस्तु—

तिथ्यृक्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा ।
अर्धरात्रेऽथवा कुर्यात्पारणं त्वपरेऽहनि ॥

इति वचनस्यार्धरात्रे यदा तिथ्यृक्षयोश्छेदस्तदा अपरेऽहनि पारणमित्यर्थो न त्वर्धरात्रेऽपरेऽहनीत्यर्थः । तिथ्यृक्षयोश्छेदाऽन्वितस्यार्धरात्रस्य अपरेऽहनीत्यत्र पुनरन्वयायोगात् । एकत्र विशेषणत्वेनान्वितस्यान्यत्र विशेषणत्वेनान्वये मानाभावात् । अत एव "एकैकमन्यांश्चमसांश्चमसिनो भजन्ति । अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते" इत्यत्र चमसिपदस्य हारियोजनान्वयो वारितस्तृतीये । तथा च अपरेऽहनि इत्युक्त्या अर्धरात्रे तिथ्यृक्षयोश्छेदे दिवैव पारणं लभ्यते । तृतीयेऽहनि पारणकल्पनं काल्पदृष्टत्वादन्याय्यत्वाच्चासङ्गतम् । तत्र निश्यपि तत्कुर्यादि-

त्यस्याप्यपिशब्दघटितत्वेन

"आततायिनमायान्तमपि वेदान्तिनं रणे"

इत्यादेरिव स्वार्थपरत्वाभावात् उभयान्ते पारणस्य प्रशस्तत्वमात्रबोधनाद् दिवैव पारणार्थः । रोहिणीव्रतमात्रपरत्वं वा तस्य वचनस्य ।

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दते धातृक्षपारणात् ।

इति ब्रह्मवैवर्तात् । तस्माद्रात्रौ उभयान्ते अन्यतरान्ते वा व्रतोत्तरेऽहन्येव पारणमित्येव सिद्धान्तः । अशक्तौ तु—

तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् ।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि तद्भवेत् ॥

अयमेवोत्सवान्तः,

तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् ।

इति कालादर्शोक्तेः ।

भाद्रामावास्यायां कुशग्रहणमुक्तं हारीतेन—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ इति ।

अत्र नभः श्रावणः, स च दर्शान्तमानेन ग्राह्यः,

मासे नभस्येऽमावास्या तस्यां दर्भोच्चयो मतः ॥

इति मरीचिवाक्येनैकवाक्यत्वात् । अत्र 'अयातयामा' इत्यस्योपयुक्तावपि अपवादं विहायान्यत्र विनियोज्या इत्यर्थः इति केचित् । वस्तुतस्तु—

हविराज्यं पुरोडाशाः कुशा यूपाश्च खादिराः ।
यातयामं नियोज्यं न कुर्वन्ति पुनरध्वरे ॥

इति रामायणवचनादुपयुक्तत्वरूपयातयामत्वविशिष्टानां कुशादीनां पुनर्विनियोगनिषेधात् 'अयातयामा' इत्यस्यास्या-

ममावास्यायां सकृद्गृहीता दर्भा जीर्णत्वरूपयातयामत्वाभाववन्तः। अतः सकृद्गृहीतसमुदायात्पुनः पुनर्विनियोज्या इत्यर्थो न तु विनियुक्तानां पुनर्विनियोगो न्याय्य इति श्राद्धप्रकरणीयमिताक्षराव्याख्यायां बालंभट्टः। इयं च—

समित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः।

इत्युक्तेर्द्वितीयप्रहरव्यापिनी ग्राह्या।

**भाद्रपदशुक्लतृतीयायां हरितालिकाव्रतम्**। तत्र परा ग्राह्या,

मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात्॥

इति माधवोक्तेः,

चतुर्थीसहिता या तु सा तृतीया फलप्रदा।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्धिनी॥
द्वितीयाशेषसंयुक्तां या करोति विमोहिता।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः॥

इत्यापस्तम्बवचनाच्च।

**भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रतम्**। तत्र मध्याह्नव्यापिनी ग्राह्या,

प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप।

इति भविष्ये तत्रैव पूजोक्तेः। परदिन एकांशेन साकल्येन वा मध्याह्नव्याप्तौ पराऽन्यथा पूर्वा,

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि॥

इति बृहस्पतिवचनात्,

मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके।
मध्याह्ने परतश्चेत्स्यान्नागविद्धा प्रशस्यते॥

इति स्मृत्यन्तराच्च । अत्रोभयत्र 'परतश्चेत्' इत्यस्य परत एव चेदित्यर्थः ।

अस्यां चतुर्थ्यां चन्द्रदर्शनं निषिद्धम् ।

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याऽभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥

इति मार्कण्डेयोक्तेः ।

पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥

इति तिथितत्त्ववाक्ये चतुर्थ्यामित्यस्य प्रधानाक्रियान्वयलाभाद्दर्शनक्रियायामेवान्वयो न तूदयक्रियायाम् । तेन चतुर्थ्यामुदितस्य पञ्चम्यां न निषेधः, दिवादर्शनेऽपि न निषेधः ।

ततश्चतुर्थ्यां रात्र्यां तं प्रमादाद्वीक्ष्य मानवः ।
पठेत्पौराणिकं वाक्यं प्राङ्मुखो वाऽप्युदङ्मुखः ॥

इति पुराणान्तरवचनात् ।

सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥

इति पौराणिकं वाक्यं पठेत् । सकृत्पाठेनैव दोषनिवृत्तिः । सिंहःप्रसेनमिति मन्त्रेणाभिमन्त्रितं जलं वा पिबेत् , स्यमन्तकोपाख्यानं च शृणुयात् समाचारादिति स्मार्ताः ।

**भाद्रपदशुक्लपञ्चमी ऋषिपञ्चमी**। सा मध्याह्नव्यापिनी ग्राह्या । दिनद्वये मध्याह्नव्याप्तौ परा, "सिता परयुता स्यात्पञ्चमी" इति दीपिकोक्तेः । "ऋषिपञ्चमी षष्ठीयुतैव" इति दिवोदासोक्तेश्च । पूर्वविद्धा ग्राह्या, "युग्माग्नियुग्मभूतानाम्" इति युग्मवाक्यादिति केचित् ।

**भाद्रशुक्लषष्ठी सूर्यषष्ठी**। सा सप्तमीयुतैवेति दिवोदासः

**भाद्रपदशुक्लसप्तम्यां मुक्ताभरणव्रतम्** । तत्र सप्तमी

पूर्वयुता ग्राह्या, "षण्मुन्योर्वसुरन्ध्रयोः" इति युग्मवाक्यात् ।

भाद्रपदशुक्लाष्टमी दूर्वाष्टमी । सा पूर्वा ग्राह्या,

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति बृहद्यमोक्तेः ।

शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ॥

इति पुराणसमुच्चयाच्च । दूर्वाष्टमीव्रतं चागस्त्योदये कन्यार्के च न कार्यम् ।

शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाऽष्टमी ।
सिंहार्क एव कर्तव्या न कन्यार्के कदाचन ॥
सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तमे ।

इति स्कान्दोक्तेः । मुक्ताभरणसप्तमीव्रतस्य दूर्वाष्टमीव्रतसन्नियोगेनैवानुष्ठानं समाचारात् । दूर्वाष्टमीव्रतोत्कर्षे तदप्युत्कृष्टव्यम् । दूर्वाष्टमीव्रतोत्कर्षश्च शुक्लाष्टम्यामगस्त्योदये भाविनि पूर्वकृष्णाष्टम्यां कार्य इति हेमाद्रिर्दीपिका च ।

भाद्रपदशुक्लद्वादश्यां श्रवणयोगरहितायां पारणं कुर्यात्, "आभाकासितपक्षेषु" इति दिवोदासोदाहृतवचनादिति पूर्वं निरूपितम् । अत्रैव द्वादश्यां भागवतेऽष्टमस्कन्धे वामनोत्पत्तिरुक्ता—

श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ।
ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥
द्वादश्यां सविता तिष्ठन्मध्यन्दिनगतो नृप ।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥

भविष्ये तु—

अथ काले बहुतिथे गते सा गुर्विणी भवेत् ।
सुषुवे नवमे मासि पुत्रं सा वामनं हरिम् ॥

एतत्सर्वं समभवदेकादश्यां युधिष्ठिर ।
तेनेष्टा देवदेवस्य सर्वथा विजया तिथिः ॥

इत्येकादश्यां वामनावतार उक्तः । अत्र कल्पभेदाद्व्यवस्था । अस्यामेव द्वादश्यां श्रवणयुतायां दध्योदनयुक्तजलपूर्णघटदानमुक्तं विष्णुधर्मे—

तस्मिन्दिने तथा स्नानं यत्र क्वचन सङ्गमे ।
दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे ॥
वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च ।
न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति ॥ इति ।

अत्रैव दुग्धव्रतं सङ्कल्पयेत्, "दुग्धमाश्वयुजे मासि" इति वचनात् । दुग्धव्रते पायसं न वर्ज्यं, प्रकृतिवर्जने विकारवर्जनस्यायुक्तत्वात् । अन्यथा दधिघृतादीनामपि वर्जनापत्तेः ।

न च यत्र प्रकृतिरसोपलम्भस्तस्यैव वर्जनं, दधिघृतादौ तु पयोरसानुपलम्भान्न तद्वर्जनं, पायसे तु तद्रसोपलम्भात्तद्वर्जनं युक्तमिति वाच्यम्, मांसनिषेधे मांसविकारस्य निषेधानापत्तेः तत्र तद्रसोपलम्भाभावात् । औष्ट्रदुग्धस्य निषेधे तद्दध्यादेश्चानिषेधापत्तेः, तत्रापि तद्रसोपलम्भाभावात् । तस्मात्प्रकृतिरसोपलम्भाभावेऽपि यत्र प्रकृतिमात्रस्यैव वर्जनमुक्तं तत्र तस्यैव वर्जनं, यत्र तु विकारस्य वर्जनमुक्तं तत्र विकारमात्रस्य वर्जनम् । प्रकृते तु पयोमात्रवर्जनसङ्कल्पान्न तद्विकारपायसवर्जनं न्याय्यं दध्यादिवत् इति केचित् ।

वस्तुतस्तु यस्मिन् विकारे प्रकृतिरसोपलम्भः प्रकृतिप्रत्यभिज्ञा वा तस्य विकारस्य निषेधः । मांसविकारे रसोपलम्भाभावेऽपि मांसप्रत्यभिज्ञाया विद्यमानत्वान्मांसनिषेधे तन्निषेधो भवत्येव । औष्ट्रदध्यादेस्तु न प्रकृतिनिषेधप्रयोज्यो विकारनिषेधः, किन्तु औष्ट्रमिति विकारसामान्यार्थकतद्धितप्रत्ययेन विका-

रमात्रनिषेधात्सर्वस्यैवोष्ट्रविकारस्य निषेधः। विकाराविकारेऽपि विकारत्वस्यानपायात्। अत एव शकृन्मूत्रादीनामपि तत्र निषेधः। न च "सन्धिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत्" इति सन्धिन्यादिक्षीरनिषेधे दध्यादिग्रहणापत्तिः प्रकृतिप्रत्याभिज्ञाया-स्तद्रसस्य चानुपलम्भादिति वाच्यम्, न्यायतस्तद्ग्रहणस्य प्राप्तत्वेऽपि

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः॥

इति वचनेन निषेधात्। तस्मात् दुग्धव्रते पायसे दुग्धरसोपलम्भाद्वर्जनं न्याय्यम्। अत एवामिक्षायां दधिसत्त्वेऽपि माधुर्योपलम्भात्पयोरूपत्वमुक्तं मीमांसकैः "पय एव घनीभूतमामिक्षेत्यभिधीयते" इति। दध्यादिषु तु प्रत्यभिज्ञाया रसस्य चानुपलम्भादवर्जनम्।

भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतम्। तत्र त्रिमुहूर्ताऽप्यौदयिकी ग्राह्या,

उदये त्रिमुहूर्ताऽपि ग्राह्याऽनन्तव्रते तिथिः।

इति माधवोक्तेः। निर्णयामृते तु मुहूर्तमात्राऽप्यौदयिकी त्युक्तम्—

मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी।
सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम्॥

इति स्कान्दात्।

मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे।

इति मध्याह्नकालस्य कथायां कर्मकालत्वश्रवणात्,

पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः॥

इति माधवीये वचनाच्च विध्यर्थवादयोरेकवाक्यत्वस्य न्याय्यत्वाच्च सामान्यार्थकविधिवाक्यस्य विशेषपरत्वस्य 'अक्ताः

शर्करा उपदधाति' इत्यादौ घृताञ्जनपरत्वस्येव मध्याह्नकालिक- चतुर्दशीपरत्वस्यावश्यकतया मध्याह्नव्यापिनी ग्राह्येति दिवो- दासीये प्रतापमार्तण्डे च। इदमेव मतं युक्तमिति निर्णयसिन्धौ च।

भाद्रपौर्णमास्यां प्रपितामहात्परांस्त्रीनुद्दिश्य श्राद्धं कार्यम्,

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥

इति ब्राह्ममार्कण्डेययोर्वचनात् । नान्दीमुखत्वं चैषामुक्तं ब्राह्मे—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ इति ।

अत्र मातामहा अपि कार्याः ।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ॥

इति धौम्यवचने पितृशब्दस्य जनकपरत्वे बहुवचनविरो- धेन सपिण्डीकरणप्रयोज्यपितृभावापन्नपरत्वात् तत्प्रयोज्यपितृ- भावस्य च प्रपितामहात्परेष्वपि सत्त्वात् । न च जीवत्पितृक- स्यान्वष्टकायां मातृश्राद्धेऽपि मातामहादीनां पूज्यतापत्तिः, इष्टा- पत्तेः । वार्षिकपार्वणे तु—

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इति वचने प्रत्याब्दिकं मुक्त्वेति पर्युदासान्मातामहानां नि- वृत्तिरिति मदनरत्नादीनां मतम् ।

परे तु पितृशब्दस्याजहल्लक्षणया पित्रादिपरत्वात्पित्रादीनां श्राद्ध एव मातामहाः पूजनीया न तु प्रपितामहात्परेषां प्रौष्ठप- दीश्राद्धे जीवत्पितृककर्तृकान्वष्टकामातृश्राद्धे च । पितृशब्दस्य

सपिण्डीकरणप्रयोज्यपितृभावापन्नपरत्वे तु सपिण्डीकरणात्पूर्वं क्रियमाणे श्राद्धषोडशके "तथाद्यं श्राद्धषोडशम्" इति पर्युदासानुपपत्तिः । तत्र सपिण्डीकरणप्रयोज्यपितृभावापन्नस्य पूजनाभावेन मातामहपूजनस्याप्राप्तेरित्याहुः ।

कन्यासङ्क्रमे पराः षोडश घटिकाः पुण्यकालः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

अथ महालयः । तत्र वृद्धमनुः—

आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥ इति ।

अत्र कन्यायोगस्य प्राशस्त्यम्,

कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यमुच्यते ॥

इति शाट्यायनिस्मृतेः,

कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्वणेनेह विधिना श्राद्धं तत्र विधीयते ॥

इति ब्रह्माण्डपुराणाच्च ।

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥

इति षोडशदिनान्यपि तत्रोक्तानि । तत्र षोडशत्वं तिथिवृद्धौ ज्ञेयमित्येकः पक्षः । भाद्रपदपूर्णिमया सम्पाद्यमिति द्वितीयः । आश्विनशुक्लप्रतिपदेति तृतीयः ।

अहः षोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता ॥

इति देवलोक्तेरन्त्य एव युक्तः । भाद्रपदपूर्णिमाया अपरपक्षत्वाभावात्तिथिवृद्धेरनियतत्वाच्च । अशक्तस्य तु एकस्मिन्नपि दिने श्राद्धमुक्तं नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।

यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत्सन्तृप्ताः पितरो ध्रुवम् ॥ इति ।

विधवायाश्च विशेषः—

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥

इति स्मृतिरत्नावल्याम् ।

अत्रेदं बोध्यम्—विधवाया दर्शश्राद्धे पुत्राभावे तद्वदेवाधिकारः,

अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत् ।

इति वचनात् । पुत्रवदिति वतिना प्रकरणानुरोधात् श्राद्धक्रियातुल्यतोऽस्या पुत्रकर्तृकश्राद्धवदेव देवता । उद्देश्यत्वं तु पुत्रपित्रादीनां भर्तृत्वादिना, पुत्रमातामहानां च पितृत्वादिना, यं प्रति येन रूपेण सम्बन्धिता तं प्रति तेनैव रूपेणोद्देश्यत्वात् । अत एव 'स्वभर्तृप्रभृतित्रिभ्य' इत्युक्तं वचने । भर्तृपित्रोश्च यथायोग्यं सपत्नीकत्वमपि । इदं षड्दैवतं दर्श एव । तीर्थमहालयादिश्राद्धे तु मृतश्वश्र्वादेः श्वश्र्वादिपार्वणमपीति नवदैवत्यम् । तच्च कृताकृतमित्येके । मृतमातृकायाः स्वमात्रादिपार्वणमपीति द्वादशदैवतं केचिदाहुः । स्वमातामहपार्वणेन पञ्चदशदैवतमित्यन्ये । स्वमातामहीपार्वणेनाष्टादशदैवतं परे । इदं सर्वं कृताकृतमेव । भर्तृपार्वणं पितृपार्वणं चावश्यकम् । स्वपितरि जीवति द्वारलोपात्पितृपार्वणलोपः । एवमुत्तरत्रापि आद्यजीवने तत्पार्वणलोप एव । एकोद्दिष्टानि च तीर्थमहालयादौ स्वसम्बन्धेनास्याः पुत्रवद्भवन्त्येव । क्षयाहे तु भर्त्रादीनां यथासम्प्रदायमेकोद्दिष्टं पार्वणं वा । भ्रात्रादीनामेकोद्दिष्टं तीर्थमहालयादावस्याः स्वसम्बन्धेन पुत्रवद्भवत्येव ।

संन्यासिनां तु द्वादश्यां श्राद्धं कार्यम् ,

यतीनां च वनस्थानां वैष्णवानां विशेषतः ।
द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ॥

इति सङ्ग्रहोक्तेः । अत्र पक्षे श्राद्धाकरणे गौणकालमाह यमः

हंसे कन्यासु वर्षास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः ॥

आश्विनकृष्णशुक्लपञ्चम्योर्मध्ये इत्यर्थः । तत्राप्यसम्भवे —

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितृणां वै महालयं ॥

इति भविष्यवचनाद्दीपावल्यमावास्यायां कर्तव्यम् । तत्रा प्यसम्भवे—

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
शून्यं प्रेतपुरं तावद्वृश्चिकं यावदागतः ॥

इति भारतवचनाद्वृश्चिकसङ्क्रान्ति यावत्कस्मिन्नपि दिने कार्यम् । सम्प्राप्ते वृश्चिके तु न श्राद्धकालः । एतच्च संन्यस्तपितृकादीनां जीवत्पितृकेणापि कार्यम् ,

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥

इति कात्यायनोक्तेः ।

न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ॥

इति कौण्डिन्यवचनं तु संन्यस्तपितृकाद्यतिरिक्तविषयम् । एतच्च जीवत्पितृकेण पिण्डरहितं कार्यम् ,

मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गर्भिणीपतिरेव च ॥

इति दक्षोक्तेः । अन्वष्टक्यमातृवार्षिकादौ तु वचनाद्भवतीति वक्ष्यते । अन्वष्टकादौ—

अनेका मातरो यस्य श्राद्धे चापरपाक्षिके ।

अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥

इति गालववचनात्सापत्नमातुर्मात्रा सहैकतन्त्रेण श्राद्धं कुर्यात् । जीवन्मातृकस्तु सापत्नमातुरेकोद्दिष्टं कुर्यात्, न पार्वणम् । श्राद्धकलिकायां तु—

आन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयम् ।
पितृपत्नीषु च श्राद्धं कार्यं पार्वणवद्भवेत् ॥

इति बृहन्मनूक्तेः पार्वणमुक्तम् । इदं चासङ्गतम् ।

सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥

इत्यनेन विरोधात् । तस्मात् "पितृपत्नीषु च" इत्यत्रान्वष्टक्यादेर्नान्वयः, किन्तु श्राद्धमित्यस्याब्दिकश्राद्धमित्यर्थात् ज्येष्ठपितृपत्नीनामाब्दिकश्राद्धपरं तत् । आब्दिकं प्रकृत्य—

पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् ।

इति वचनैकवाक्यत्वात् । सर्वासामेवाब्दिकं पार्वणवद्भवेदित्येतत्परं वा कलिकावचनमस्तु । तस्मात्सपत्नमातुरान्वष्टक्यं महालयं च जीवन्मातृक एकोद्दिष्टं कुर्यादिति कमलाकरभट्टमतम् ।

वस्तुतस्तु "अनेका मातरो यस्य" इति वचनमान्वष्टक्य एव प्रवर्तते न तु महालयादावपि "ताताम्बात्रितयं सपत्नजननी" इति संग्रहवचने मातृत्रयानन्तरं सपत्नमातुरुक्तेः जीवदजीवन्मातृकयोः प्रकारभेदानौचित्याच्च । तस्मान्महालयादौ सपत्नमातुरेकोद्दिष्टमेवेति ।

अनेका मातरो यस्य तीर्थे चापरपाक्षिके ।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥

इति देवलवचनान्मातृभ्य एक एव पिण्डो देय इत्युक्त्वाऽशक्तपरमिदम्, शक्तेन तु पृथक् पिण्डो देय इति भाव इति तीर्थप्रकाशे चतुरशीतितमे पृष्ठ उक्तम् । तस्मादपि महालयादौ

सपत्नमातृभ्यः पृथगेव पिण्डदानाविति कथ्यते ।

महालये च धुरिलोचनौ विश्वेदेवाः,

अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ ।

इत्यादित्यपुराणादिति केचित् ।

वस्तुतस्तु कन्यासंक्रान्तिनिमित्तके श्राद्धे काम्ये च धुरिलोचनौ, न तु महालये,

पुरूरवोमाद्रवौ च पार्वणे समुदाहृतौ ।

इति तत्रैव वचनान्तरात् । महालयश्राद्धस्य--

आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।

श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा न वा ॥

इत्यादित्यपुराणस्थवचनान्तरेण कन्यागतसूर्यनिमित्तकत्वाभावबोधनेन कन्यागते सूर्ये इत्यस्य कन्यागतसूर्यनिमित्तकमहालये इत्यर्थस्यासङ्गतत्वेन कन्यासंक्रान्तिनिमित्तके श्राद्ध इत्यर्थस्यैवोचितत्वात् । कन्यागतसूर्याधिकरणक इत्यर्थस्त्वसङ्गत एव, तथासति पार्वणविधिना क्रियमाणे वार्षिकेऽपि कन्यागतसूर्याधिकरणके धुरिलोचनापत्तेः । तस्मान्महालय श्राद्धे पुरूरवोमाद्रवावेव विश्वेदेवा इति परे । स्पष्टं चेदं कृत्यरत्नावल्याम् ।

आश्विनकृष्णपक्षे षष्ठी योगविशेषेण कपिलासंज्ञा--

नभस्यकृष्णपक्षे तु रोहिणीपातभूसुतैः ।

युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥

व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।

कपिलां च द्विजाग्र्याय दत्त्वा क्रतुफलं लभेत् ॥

इति वाराहोक्तेः,

भाद्रे मास्यासिते पक्षे भानौ चैव करे स्थिते ।

पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥

इति पुराणसमुच्चयोक्तेश्च । अत्र हस्तार्कः फलातिशयार्थः,

संयोगे तु चतुर्णां वै निर्दिष्टा परमेष्ठिना ।

इति तत्रैवोक्तेः । अत्र दर्शान्तत्वेन भाद्रपदकृष्णपक्षो महालयो ज्ञेय इत्युक्तं हेमाद्यादौ । इयमेव चन्द्रषष्ठी । सा चन्द्रोदयव्यापिनी ग्राह्या । उभयत्र तथात्वे पूर्वा,

तद्वद् भाद्रपदे मासि षष्ठ्यां पक्षेऽसिते दले ।
चन्द्रषष्ठीव्रतं कुर्यात्पूर्ववेधः प्रशस्यते ॥
चन्द्रोदये यदा षष्ठी पूर्वाह्ने चापरेऽहनि ।
चन्द्रषष्ठ्यसिते पक्षे सैवोपोष्या प्रयत्नतः ॥

इति भविष्योक्तेः ।

आश्विनकृष्णाष्टम्यां महालक्ष्मीव्रतम् । इयं चन्द्रोदयव्यापिनी ग्राह्या, तत्रैव पूजाद्युक्तेः । परदिने चन्द्रोदयादूर्ध्वं त्रिमुहूर्तव्यापित्वे परैव कार्या, अन्यथा पूर्वैव,

पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा ।
त्रिमुहूर्ताऽपि सा पूज्या परतश्चोर्ध्वगामिनी ॥

इति संग्रहोक्तेः । भाद्रशुक्लाऽष्टमीमारभ्याऽऽश्विनशुक्लाष्टमीपर्यन्तं षोडशसु दिनेषु महालक्ष्मीयात्रा कार्या ।

महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृता नृणाम् ।
सम्पूजयेद्यो विधिवत्पद्मां स च न मुञ्चति ॥

इति काशीखण्डात् ।

आश्विनकृष्णनवम्यामन्वष्टकाश्राद्धम् । तत्स्वरूपं च—

अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।
पित्रादि मातृमध्यं च ततो मातामहान्तकम् ॥

इति कात्यायनेनोक्तम् । यद्यपि "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः, अपरेद्युरन्वष्टक्यम्". इति पारस्करगृह्यवचनात् चतस्रोऽन्वष्टकाः भाद्रकृष्णाष्टम्युत्तरा च पञ्चमी

अन्वष्टका,

प्रौष्ठपद्युत्तरा भूयः पितृलोके भविष्यति ।

इति पाद्मोक्तेः; इति पञ्चस्वप्यन्वष्टकासु श्राद्धं विहितम् ; तथापि—

प्रौष्ठपद्युत्तरा भूयः पितृलोके भविष्यति ।

इति वचनादेवास्यां श्राद्धमावश्यकम् ।

सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ॥

इति स्मृतोक्तेश्च । अत्र स्वमातरि जीवन्त्यामपि सपत्नमातृभ्यो दद्यात् । 'स्वमातरि मृतायां च तस्यै ताभ्यश्च दद्यात्' इति वृत्तिकारः । मृतमातापितृक एव सपत्नमातृभ्यो दद्यात् इत्यन्ये । जीवत्पितृकमातृश्राद्धे मातामहा न भवन्तीति पूर्वं(७२पृष्ठे)निरूपितम् । अत्र सर्वासां मातॄणां नामनिर्देशेन ब्राह्मणोऽर्घ्यः पिण्डश्चैक एवेति वृत्तिकारः । "अनेका मातरो यस्य" इति पूर्वोक्तगालववचनादर्घ्यदानं पृथगेव न्याय्यम् । तन्त्रेण प्रयोगप्रदर्शनस्याशक्तपरतया शक्तस्य भेदेनैवानुष्ठानमुचितमित्यन्ये ।

भर्तृमरणोत्तरं पूर्वमृतमातृनवमीश्राद्धं न कार्यम् ,

श्राद्धं नवम्यां कुर्यात्तन्मृते भर्तरि लुप्यते ।

इति वचनादिति केचित् । वचनस्य मूर्खप्रतारणमात्रत्वात्कर्तव्यमेवेति परे । अविधवाया एव मातुर्मरण इदं श्राद्धमिति प्रवादोऽपि मूर्खाणामेवेति श्राद्धमयूखे नीलकण्ठभट्टः ।

पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः ।
श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयते ॥

इति ब्राह्मवचनादपुत्रपितृष्वसृमातृष्वसृपत्न्यादेरप्यस्यां नवम्यां श्राद्धं कर्तव्यम् । इदं च मृतमातृकस्यैव । जीवन्मातृकस्य तु नास्यां नवम्यां पितृष्वस्रादिश्राद्धसम्प्रदायः । यस्तु जी-

वन्ध्यां मातरि पितृष्वस्रादिभिः पालितस्तद्धनग्राही वा, तस्य तु श्राद्धमुचितमिति सिन्धुटीकायां कृष्णभट्टः। इदं च जीवत्पितृकेणापि सपिण्डकं कार्यम् ,

अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च ।

इत्युपक्रम्य--

पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम ।

इति विष्णुधर्मोत्तरवचनात् । श्राद्धविधिनैव श्राद्धे पिण्डदाने प्राप्ते पुनस्तत्कीर्तनस्य जीवत्पितृकगर्भिणीपतित्वादिना प्राप्तस्य पिण्डदाननिषेधस्य प्रतिप्रसवार्थत्वात् । अन्वष्टकाश्राद्धे सुवासिनीभोजनमुक्तं मार्कण्डेयपुराणे—

मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैः सह भोजनम् ।
सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् ॥
स्त्रीश्राद्धे पुत्रदेयाः स्युरलङ्काराश्च योषिते ।
मञ्जीरमेखलादामकर्णिकाकङ्कणादयः ॥ इति ।
हंसे हंसस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवस्वती नाम सा च्छाया कुञ्जरस्य तु ॥

इति परिभाषितायां गजच्छायायां श्राद्धं कुर्यात् ।

अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥

इति विष्णुमनुवचने केवलत्रयोदशीश्रुतेर्मघायोगो गुणमात्रमिति कल्पतरुः । केवलत्रयोदशीवाक्यानामर्थवादत्वात् , विधिवाक्येऽपि मघायोगश्रुतेर्विशिष्टमेव निमित्तमिति शूलपाणिः । एतच्च पिण्डरहितं कार्यम् ,

मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः ।
ससन्तानो नैव कुर्यादित्यं ते कवयो विदुः ॥

इति बृहत्पराशरोक्तेः ।

**अथ चतुर्दशी ।** अस्यां च

वृक्षारोहणलोहाद्यैर्विद्युज्जलविषाग्निभिः ।
नखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ॥

इत्यादिप्राचेतसादिवाक्यैः "प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्" इति गौतमोक्तदुर्मरणोपलक्षणत्वाद् दुर्मरणमृतानां सकृन्महालयश्राद्धं कार्यम् । अत्रोद्देश्यविशेषणस्य पुंस्त्वस्याविवक्षितत्वात्स्त्रीणामपि शस्त्रादिहतानामेकोद्दिष्टं कार्यम् । गौतमवचने इच्छतामित्युपादानाद्यदृच्छया दुर्मरणेन मृतानामेवेदं श्राद्धम् । असाध्यव्याध्यादिपीडितानामभ्यनुज्ञातजलाग्न्यादिप्रवेशानां जलाग्न्यादिप्रवेशेन मृतानां भर्तृमरणानिमित्तकाग्निप्रवेशेन मृतानां स्त्रीणां च नेदं श्राद्धमिति वाचस्पतिः । वैधत्वात्सहगमनेऽपि न कार्यमिति हेमाद्रिः । एतच्चैकोद्दिष्टं दैवयुक्तं कार्यमित्युक्तं प्रयोगपारिजाते--

प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः ।
दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् ॥ इति ।

अत्र शस्त्रहतस्यैव चतुर्दश्यामिति नियमो न तु चतुर्दश्यामेव शस्त्रहतस्येति,

श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।

इति कालादर्शवचनात् । वार्षिकादीनामकरणापत्तेश्च । तेन महालय एव दिनान्तरे पार्वणे मातामहादिप्रीत्यर्थं कार्यमेव । पितामहोऽपि शस्त्रहतश्चेदेकोद्दिष्टद्वयं कार्यम् "एकस्मिन्द्वयोर्वैकोद्दिष्टम्" इति हेमाद्रौ स्मृत्यन्तरात् । त्रिषु शस्त्रहतेषु पार्वणमेव ।

पित्रादयस्त्रयो यस्य शस्त्रैर्यातास्त्वनुक्रमात् ।
स मृते पार्वणं कुर्यादाब्दिकानि पृथक् पृथक् ॥

इति बृहत्पराशरोक्तेः । यस्तु महालये चतुर्दश्यामेव शस्त्रादिना हतस्तस्य वार्षिकमेव पार्वणमेकोद्दिष्टं वा कार्यं न तु श्राद्ध-

द्वयं प्रसङ्गसिद्धेरित्युक्तं पृथ्वीचन्द्रोदये। प्रमादादिना शस्त्रहतस्य श्राद्धाकरणेऽग्रिमापरपक्षे दिनान्तरे पार्वणमेव तस्य कार्यमित्यपि तत्रैवोक्तम्। यद्यपि—

शस्त्रविषहतानां च शृङ्गिदंष्ट्रिसरीसृपैः।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत्॥

इति छागलेयाद्यैः शस्त्रादिहतानां श्राद्धं निषिद्धं, तथापि प्रमादमृतानां श्राद्धार्हत्वात्कार्यम्। बुद्धिपूर्वमृतानां तु न कार्यम्। यत्तु—

चतुर्दश्यां तर्पणीया लुप्तपिण्डोदकक्रियाः।

इति ब्राह्मं, तत् गौणमिति शूलपाणिः।

पतितेनापि कर्तव्यं कर्तव्यं पतितस्य च।

इति गयादिवद्विशेषविधिबलात्पतितानामपि कार्यमिति गौडाः। वस्तुतस्तु "समत्वमागतस्य" इति वचनबलात्कृतक्रियाणां कार्यम्। यावदौर्ध्वदेहिकं न कृतं तावच्चतुर्दशीश्राद्धमपि न कार्यं छागलेयादिवचनादित्याहुः। महालयश्राद्धमम्यादिनेषु प्राप्तं,

न दर्शेन विना श्राद्धमाहिताग्नेर्विधीयते।

इति मनुवचनेन दर्शे नियम्यते इति सिन्धुः।

हंसे करस्थिते या तु अमावास्या करान्विता।
सा ज्ञेया कुञ्जरच्छाया तस्यां श्राद्धं प्रकल्पयेत्॥

इति यमेन परिभाषितायां गजच्छायायां श्राद्धं कुर्यात्।

आश्विनशुक्लप्रतिपदि दौहित्रस्य मातामहश्राद्धम्।

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते॥

इति सङ्ग्रहोक्तेः। इयं सङ्गवव्यापिनी ग्राह्या,

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम्।
श्राद्धं मातामहं कुर्यात्सपिता सङ्गवे सदा॥

इति वचनादिति निर्णयदीप उक्तम्। अत्र समूलत्वं वि-

मुख्यमिति सिन्धुः । पार्वणत्वादपराह्णव्यापिनी ग्राह्येति तद्भावः । इदं च मलमासे न कार्यम् ,

स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।

इतिवचनात् । एवं च मातामहश्राद्धस्य कन्योपलक्षितापरपक्षनिमित्तकत्वात्कन्यायामधिमासे अधिमासोत्तरप्रतिपद्येव कन्यायुक्तायामपरपक्षाव्यवधानेनैव तत्कार्यम् । तत्र कथञ्चिदन्तराये शुक्लपक्षम्यादिगौणकाले कार्यम् । एवमेव जीवत्पितृकस्य मातृनवमीश्राद्धान्तरायेऽपि मातृनवमीश्राद्धं शुक्लपक्षम्यादिगौणकाले कार्यमिति कृष्णभट्टः । सिन्धुकारेण तु मातृनवमीश्राद्धान्तराये—

एभिर्ऋग्भिर्जपेन्मन्त्रं शतवारं तु तद्दिने ।
आन्वष्टक्यं यदा न्यूनं सम्पूर्णं याति सर्वथा ॥

इति ऋग्विधानोक्तं प्रायश्चित्तमुपदिष्टम् । मातामहश्राद्धं च जीवत्पितृकेणैव कार्यमिति शिष्टाः "सपिता मह्ले सदा" इति वचनाच्च । इदं च पिण्डरहितं कार्यं "मुण्डनं पिण्डदानं च" इति पूर्वोक्तनिषेधात् आन्वष्टक्यवद्विशेषवचनाभावाच्च ।

अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः । तत्र प्रतिपन्मुहूर्तमात्राऽपि परा ग्राह्या,

अमायुक्ता न कर्तव्या प्रतिपत्पूजने मम ।
मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ॥
आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः ।
कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम् ॥

इति देवीपुराणवचनात् ,

प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत् ॥

इति तत्रैव वचनान्तराच्च ।

व्रतोपवासनियमे घटिकैकाऽपि या भवेत् ।
सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके ॥

इति देवलवचने घटिकापदेन मुहूर्तो ग्राह्य इति गौडाः । यदा तु पूर्वदिने सम्पूर्णा शुद्धा च भूत्वा परादिने वर्धते तदा सम्पूर्णत्वादमायोगाभावाच्च पूर्वैव । द्वितीयायोगनिषेधकान्यन्यवचनानि तु शुद्धाधिकानिषेधपराण्येव । परदिने प्रतिपदोऽत्यन्तासत्त्वे तु दर्शयुताऽपि पूर्वैव ग्राह्या ।

तिथिः शरीरं तिथिरेव कारणं
तिथिः प्रमाणं तिथिरेव साधनम् ।

इति लल्लवचनात् । "अमायुक्ता प्रकर्तव्या" इत्यादिवचनान्यप्येतद्विषयाण्येव ।

केचित्तु—

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥

इत्यौदयिक्यास्तिथेर्द्विमुहूर्तत्वनियमान्मुहूर्तमात्रा कर्तव्येत्यस्य द्विमुहूर्तस्तुतिपरत्वात् "घटिकैकाऽपि" इत्यस्यापि द्विमुहूर्तस्तुतिपरत्वाद् द्विमुहूर्तैव प्रतिपत्परा ग्राह्या न तु ततो न्यूनेत्याहुः ।

प्रतिपदि च वैधृत्यादियोगनिषेधो देवीपुराणे—

त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकाऽर्चने ।
तयोरन्ते विधातव्यं कलशारोपणं गृहे ॥ इति ।

वैधृत्यादियुक्ताऽपि द्वितीयायुता चेत्सैव ग्राह्या,

भद्रान्विता चेत्प्रतिपत्तु लभ्यते विरुद्धयोगैरपि सङ्गता सती ।
सैवाऽपराह्ने विबुधैर्विधेया श्रीपुत्रराज्यादिविवृद्धिहेतुः ॥

इति दुर्गोत्सवोक्तेः । वैधृत्यादिपरिहारेण प्रतिपदोऽलाभे—

प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रयोः ।
आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ॥

चित्रावैधृतिसम्पूर्णा प्रतिपच्चेद्भवेन्नृप ।
त्याज्या अंशास्त्रयस्त्वाद्यास्तुरीयांशे तु पूजनम् ॥
सम्पूर्णा प्रतिपद्देव चित्रायुक्ता यदा भवेत् ।
वैधृत्या वापि युक्ता स्यात्तदा मध्यन्दिने रवौ ॥
अभिजित्तु मुहूर्ते यत्तत्र स्थापनमिष्यते ।

इत्यादिवचनमनुसृत्य कलशस्थापनं विधेयम् । चित्रादिनिषेधे मूलं चिन्त्यमिति सिन्धुः । कलशस्थापनं च रात्रौ न कार्यम्,

न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम् ।

इति मात्स्योक्तेः ।

अत्राशौचे विशेषो विश्वरूपनिबन्धे—

आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ।
शावाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः ॥
सूतके वर्तमाने च तत्रोत्पन्ने सदा बुधैः ।
देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ॥
सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।
देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते ॥ इति ।

विष्णुरहस्येऽपि—

पूर्वसङ्कल्पितं यच्च व्रतं सुनियतव्रतैः ।
तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जितम् ॥ इति ।

तिथितत्त्वेऽप्युक्तम्—'आश्विनशुक्लप्रतिपदादि षष्ठ्यादि सप्तम्यादि चैकं कर्म, अतश्च मध्ये आशौचपातेऽपि न दोषः "सङ्कल्पो व्रतसत्रयोः" इति विष्णूक्तेः' इति । 'आरब्धं स्वयमेव कार्यम्, अनारब्धं त्वन्येन कारयेत्' इति दिवोदासः । रजस्वला त्वन्येन कारयेत् सूतकादिवाद्विशेषवचनाभावात् ।

आश्विनशुक्लपक्षे मूलनक्षत्रे पुस्तकेषु सरस्वती-

स्थापनं कार्यम् ,

मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम् ।
उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत् ॥

इति देवीपुराणात् ।

मूलऋक्षे सुराधीश पूजनीया सरस्वती ।
पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम् ॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।
पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः ॥

इति रुद्रयामलोक्तेश्च । मूलस्याद्यपादे आवाहनमिति शिष्टाः। श्रवणस्याद्यपादे देवीं विसर्जयेत्—

आदिभागो निशायां तु श्रवणस्य यदा भवेत् ।
सम्प्रेषणं तदा देव्या दशम्यां च महोत्सवः ॥

इति ब्रह्माण्डपुराणात् ।

अथ महाष्टमी । सा च परयुता,

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥

इति ब्रह्मवैवर्तात् ,

सप्तमीशल्यसंयुक्तां मोहादज्ञानतोऽपि वा ।
महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते ॥
सप्तमी कलया यत्र परतश्चाष्टमी भवेत् ।
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम् ॥

इति स्मृतिसङ्ग्रहवचनाच्च । तेन नात्र त्रिमुहूर्तवेधः । ततो घटिकामात्राऽप्यौदयिकी ग्राह्या ।

व्रतोपवासनियमे घटिकैकाऽपि या भवेत् ।

इति देवलोक्तेः । यानि तु—

भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया ।

तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ॥
आश्विनस्य सिताष्टम्यामर्धरात्रे तु पार्वति ।
भद्रकाली समुत्पन्ना पूर्वाषाढासमायुता ॥
तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ॥
सप्तम्याऽपि युता कार्या मूलेन तु विशेषतः ।

इत्यादीनि वचनानि, तानि परदिनेऽष्टम्यभावविषयाणीति मदनरत्ने उक्तम् । तत्रैव परदिनेऽष्टमीसत्त्वेऽपि—

यदाऽष्टमीं तु सम्प्राप्य ह्यस्तं याति दिवाकरः ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥
दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते ।

इति पूर्वविद्धाविधायकं वचनं, तत् परदिने दशम्या नवम्यभावविषयम्,

यदा सूर्योदये न स्यान्नवमी चापरेऽहनि ।
तदाऽष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप ॥

इति स्मृतिसङ्ग्रहोक्तेः । वस्तुतस्तु—

यदा सूर्योदये न स्यान्नवमी चापरेऽहनि ।

इति वचने नवमी चेति चकारादष्टमी ग्राह्या । तथा च यदा पूर्वदिने सूर्योदयोत्तरमष्टमीः प्रवृत्ता द्वितीयसूर्योदयादव्यवहितपूर्वमेव समाप्ता, नवमी च सूर्योदयमारभ्य प्रवृत्ताऽपरसूर्योदयात्पूर्वमेव समाप्ता तदाऽष्टमीनवम्योरुभयोरपि सूर्योदयद्वयासम्बन्धाचादृशे समये सप्तमीविद्धाया अष्टम्या ग्राह्यत्वबोधकमिदं वचनमिति दिक् ।

अथ नवरात्रपारणानिर्णयः । सा च दशम्यां कार्या,

आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

त्रिरात्रं वाऽपि कर्तव्यं सप्तम्यादि यथाक्रमम् ।

इति धौम्यवचनात् ।

नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ।

इत्यादिवचनैर्नवमीपर्यन्तं प्रधानभूतपूजाद्युक्तेः उपवासादेश्च पूजाद्यङ्गत्वेन नवमीपर्यन्तत्वस्यैवोचितत्वात्, "पूजाजपादिकम्" इत्यत्रादिशब्देनोपवासस्यापि ग्रहीतुमुचितत्वात्, त्रिरात्रव्रते नवम्या अप्युपोष्यत्वाच्च । न च पारणान्तत्वेन त्रिरात्रत्वं नवरात्रत्वं वोपपादनीयं, विष्णुत्रिरात्रादावपि तथापत्तेः । न च नवरात्रे उपवासानुष्ठाने मानाभावः,

एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः ।

इति भविष्योक्तत्वात्, नवरात्रसमाख्यातश्च नवम्यामप्युपोष्यत्वात् । तिथिह्रासेऽपि नवतिथीनामुपोष्यत्वान्नवरात्रसमाख्याया अक्षतेः ।

नवम्यां पारणं कुर्याद्दशमीमिश्रिता न चेत् ।

इत्यादीनि वचनानि तु लोहाभिसारिकनन्दादिचतुष्टयविषयाणि, तस्याष्टमीपर्यन्तमेवोक्तेः । यानि तु नवम्यां पारणाविधायकानि कैश्चिल्लिखितानि, तानि हेमाद्र्यादिविरुद्धत्वान्निर्मूलानि । समूलत्वेऽपि यदा दिनद्वये नवमी तदा पूर्वदिन उपोष्य द्वितीयदिने नवमीमध्य एव पारणा कार्या न तु तिथ्यन्ते शिवरात्रिव्रते चतुर्दश्यां पारणावदित्येवंपरतया नेयानीत्यलम् ।

पारणाहे सूतकादिप्राप्ते सूतकान्ते पारणं कुर्यादिति केचिदाहुः । तदयुक्तम्,

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥
व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति कौर्मविष्ण्वादिवचनैरारब्धे व्रत आशौचप्राप्तावपि मध्ये तत्कर्तव्यतावगतेः, व्रतस्य पारणान्तत्वात् । प्रारम्भश्च—

प्रारम्भो वरणं यज्ञ सङ्कल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति विष्णुनैवोक्तः ।

सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।
तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः ॥

इति रुद्रयामलवचनेन स्पष्टमेव सूतके पारणाया लाभाच्च । एवं स्त्रीभिरपि रजोदर्शनमध्य एकादशीव्रतपारणं कर्तव्यमेव,

सम्प्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ।

इति ऋष्यश्रृङ्गवचनात् । द्वादशीव्रतं पारणात्मकम् । एवं नवरात्रत्रिरात्रादिदीर्घव्रतेष्वपि रजोमध्ये पारणं भवत्येव,

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥

इति सत्यव्रतवचनात् । द्वादशीव्यतिरिक्तैकाहोपवासे तु रजोमध्ये पारणं न भवति,

नियमस्था यदा नारी प्रपश्येदन्तरा रजः ।
उपोष्यैव तु ता रात्रीः स्नात्वा शेषं चरेद् व्रतम् ॥

इत्यङ्गिरोवचनादिति सङ्क्षेपः ।

आश्विनशुक्लदशम्यां देवीं विसर्जयेत् ,

ततः प्रातः पूजयित्वा दशम्यां विधिपूर्वकम् ।
सम्प्रेषणं तु कर्तव्यं गीतवादित्रनिःस्वनैः ॥

इति देवीपुराणात् ।

इयमेव विजयादशमी । सा च द्वितीयदिने श्रवणयोगाभावे पूर्वा ग्राह्या,

दशम्यां तु नरैः सम्यक्पूजनीयाऽपराजिता ।

ऐशानीं दिशमाश्रित्य अपराह्ने प्रयत्नतः ॥
नवमीशेषयुक्तायां दशम्यामपराजिता ।
ददाति विजयं देवी पूजिता जयवर्धिनी ॥

इति स्कान्दात् । यदा तु पूर्वदिने श्रवणयोगाभावः परदिने चाल्पापि श्रवणयोगिनी, तदा परैव,

उदये दशमी किञ्चित्सम्पूर्णैकादशी यदि ।
श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ॥

इति कश्यपवचनात् । काले अपराह्ने, तस्य कर्मकालत्वात् । परदिनेऽपराह्ने श्रवणाभावे तु सर्वपक्षेषु पूर्वैवेति । इत्थमपराह्णव्याप्त्या दशमीनिर्णयं कृत्वा मदनरत्नेऽप्येवमिति मदनरत्नसंवादं च प्रदर्श्य—

आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकामार्थसिद्धये ॥

इति चिन्तामण्युक्तवचनेन सम्भावितस्य प्रदोषकालस्य—

ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्वकामार्थसिद्धिदः ॥

इति नारदवचनेनापि प्रदोषस्य कर्मकालत्वमुत्प्रेक्षते सिन्धुकारो "रत्नकोशे नारद" इति । प्रदोषकालस्य विजययात्रायां सिद्धिप्रदत्वेऽप्यपराजितपूजनस्यापराह्ण एवोक्तेस्तस्यैव मुख्यकर्मकालत्वाभिप्रायेण निर्णयमुपक्रमते—"अत्राय"मिति । ननु दिनद्वयेऽपराह्णव्यापित्वे प्रदोषव्याप्तेराधिक्यात्पूर्वेतिकथनमयुक्तम्, उत्तरादिनेऽपराह्णे श्रवणसत्त्वेऽल्पाया अपि दशम्याः पूर्वाया एव ग्राह्यत्वोक्तेरपराह्णव्यापिन्यास्तस्याः सुतरां ग्राह्यत्वबोधनात् इत्यत आह "इदं शुद्धातिथौ" इति । श्रवणयोगरहितदशम्या दिनद्वयेऽपराह्णव्यापित्वे प्रदोषव्याप्तेराधिक्यात्पूर्वेति तदर्थः । ननु दिनद्वयेऽपराह्णव्यापित्वेऽपि द्वितीयदिने श्रवणयोगा-

नुरोधाद्यथा परा गृह्यते तथा दिनद्वये प्रदोषव्यापित्वेऽपि पूर्वदिने श्रवणयोगानुरोधात्पूर्वा कुतो न गृह्यते इत्यत आह—"अन्यकाले श्रवणस्तु" इति । अपराह्णातिरिक्तकाल इत्यर्थः। यथा निशीथातिरिक्तकाले रोहिणीयोगो न जयन्तीप्रयोजकस्तथाऽपराह्णातिरिक्तकाले श्रवणयोगो न विजयाप्रयोजकः । एवं दशम्या अप्यपराह्णेऽसत्त्वेऽस्तोत्तरं प्रवेशेऽपराह्णे श्रवणमात्रेण न दशम्या ग्राह्यता मुख्यकर्मकालासंस्पर्शात् । दिनद्वयेऽपराह्णास्पर्शेऽपराह्णव्याप्तौ वा पूर्वा चेच्छ्रवणयुता तदा पूर्वा, परदिनेऽपराह्णे श्रवणसत्त्वे तु परैव ।

अपराह्णरूपकर्मकालानुरोधेनापकृष्यमाणमपराजितापूजनं देवीविसर्जनमपकर्षति तदन्तापकर्षन्यायात् । देवीपूजनादौ सर्वत्र घटिकाव्यापिनी तिथिर्ग्राह्या,

व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
तामेव तिथिमाश्रित्य कुर्यात्कर्माण्यतन्द्रितः ॥

इति व्यासोक्तनिगमश्रुतेः । एवं च घटिकोनदशम्या अपराजितापूजानर्हत्वात्तत्र तत्पूजनं पूर्वदिने । अत एव—

आश्विने शुक्लपक्षस्य दशम्यां पूजयेत्तथा ।
एकादश्यां न कुर्वीत पूजनं चापराजितम् ॥

इति शिवरहस्योक्तमेकादशीयुक्तदशमीनिषेधकं वचनमपि घटिकोनदशमीपरमेव । ततश्च तत्पूर्वकृत्यं देवीविसर्जनमपि तदैव, तदन्तापकर्षन्यायात् । वाचस्पतिमिश्रोऽप्येवमिति स्मृतितत्त्वान्तर्गते तिथितत्त्वेऽष्टाशीतितमे पृष्ठे रघुनन्दनभट्टाचार्यः । अत्र "घटिकैका यदा भवेत्" इत्यादौ घटिकापदं मुहूर्तपरम् ।

घटिकैका त्वमावास्या प्रतिपत्सु न चेत्तदा ।
सर्वं तदासुरं दानं दैवे कर्मणि चोदितम् ॥
मुहूर्तमप्यमावास्या प्रतिपत्सु यदा भवेत् ।

तद्दानमुत्तमं देव शेषं पूर्वं हि पूर्ववत् ॥

इति राजमार्तण्डधृतजाबालिवचनस्थयोर्घटिकामुहूर्तयोरेकार्थत्वात् । शेषं तिथ्यन्तरम् । पूर्वं पूर्वोक्तघटिकान्यूनम् । पूर्ववत् आसुरम्, इत्यपि तत्रैव ।

आश्विनपौर्णमास्यां कोजागरव्रतम् । तत्र पौर्णमासी प्रदोषनिशीथोभयव्यापिनी ग्राह्या । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिस्तदा परेद्युः कार्या, पूजारूपप्रधानकार्यव्याप्तेः सत्त्वात् । लक्ष्मीपूजनकालस्य च—

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् ॥

इत्यादौ प्रदोषस्यैव निर्दिष्टत्वात् ।

कौमुद्यां पूजयेल्लक्ष्मीमक्षैर्जागरणं चरेत् ।
निशीथे वरदा लक्ष्मीः को जागर्तीतिभाषिणी ॥
तस्मै वित्तं प्रयच्छामि ह्यक्षैः क्रीडां करोति यः ।

इति लैङ्गेऽपि लक्ष्मीपूजनपूर्वकेऽक्षजागरणे निशीथपदोपादानेन निशीथकालस्यार्धरात्रकालस्य लक्ष्मीपूजनोत्तरकालत्वबोधनेन लक्ष्मीपूजनस्य प्रदोषकालिकत्वस्यैव बोधनाच्च । यदा न परेद्युः प्रदोषव्याप्तिः पूर्वेद्युश्च निशीथव्याप्तिस्तदा पूर्वा ।

नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते ।

इति वचनात् ।

तुलासङ्क्रमे पूर्वाः पराश्च दश घटिकाः पुण्याः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

अथ कार्तिकस्नानम् । तत्र—

तुलामकरमेषेषु प्रातः स्नानं विधीयते ।

इति विष्णुस्मृतिपाद्मयोः सौरमासमाश्रित्योक्तम् ।

आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।

कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः ॥

इति पाद्मोक्तिमाश्रित्याश्विनशुक्लैकादशीमारभ्य केचिद-नुतिष्ठन्ति ।

पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः ।

इत्युक्त्वा—

मासं समग्रं परया च भक्त्या
समाप्यते कार्तिकपौर्णमास्याम् ॥

इत्यन्तेनादित्यपुराणेऽभिधानाद् आश्विनपौर्णमासीमारभ्य कार्तिकपौर्णमास्यां समापयन्ति केचित् । पक्षत्रयमपि शिष्टसमाचारपरम्पराप्राप्तं दृश्यते । कार्तिकस्नानं च प्रातःसन्ध्यां कृत्वा कार्यम्, तेन विनेतरकर्मानधिकारात् । यद्यपि प्रातःसन्ध्यायाः सूर्योदयानन्तरं समाप्तिस्तथापि वचनबलादपकृष्यानुदितहोमवत्सूर्योदयात्पूर्वमनुष्ठानं भविष्यति ।

**कार्तिककृष्णचतुर्थी करकचतुर्थी** । सा चन्द्रोदयव्यापिनी ग्राह्या । दिनद्वये व्याप्तावव्याप्तौ च निर्णयः पृष्ठे पूर्वमुक्तः ।

**कार्तिककृष्णद्वादशी गोवत्ससंज्ञा** । सा प्रदोषव्यापिनी ग्राह्या ।

नरो वा यदि वा नारी नक्तं सङ्कल्प्य चेतसि ।

इत्युपक्रमे—

माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः ।

इत्यन्ते च नक्तभोजनोक्तेः । दिनद्वये प्रदोषव्यापित्वे पूर्वा ।

वत्सपूजा वटश्चैव कर्तव्या प्रथमेऽहनि ।

इति वचनात्,

नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते ।

इत्युक्तेश्च ।

**कार्तिककृष्णत्रयोदश्यां यमप्रीत्यर्थं दीपदानम्** ।

कार्त्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥

इति स्कान्दात् । यावन्तः परिवारजनास्तेषामेकैकस्यैकैकं दीपं दद्यात् इति सम्प्रदायः ।

कार्त्तिककृष्णचतुर्दश्यां प्रभाते चन्द्रोदयेऽभ्यङ्गं कुर्यात्,

कार्त्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥

इति भविष्योत्तरवचनात् । इनश्चन्द्रः । विधूदये इति क्वचित्पाठः । दिनोदय इति पाठं कल्पयित्वा सूर्योदयोत्तरं त्रिमुहूर्ते स्नानं वदतां गौडानां तदनुसारिणां च मूढतैवेति सिन्धुः । दिनद्वये तु चन्द्रोदये चतुर्दशीसत्त्वे दिनद्वयेऽपि चन्द्रोदये चतुर्दश्यभावेऽपि वा सम्पूर्णेऽरुणोदये खण्डे वारुणोदये दिनद्वये चतुर्दशीसमत्वे च पूर्वदिनेऽभ्यङ्गं कुर्यात् "पूर्वविद्धचतुर्दश्याम्" इति वचनात् । पूर्वदिने एव परदिने एव वा सत्त्वे सैव ग्राह्या ।

कार्त्तिककृष्णामायां लक्ष्मीपूजनम् ।

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् ॥
दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च ।

इति भविष्यवचनात् । अयं च दर्शः प्रदोषव्यापी ग्राह्यः ।

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥

इति ज्योतिषोक्तेः । दिनद्वये प्रदोषसत्त्वे परः,

दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि ।
तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका ॥

इति तिथितत्त्वे ज्योतिर्वचनात् ।

दीपावल्यमावास्याऽपि प्रदोषार्धरात्रिव्यापिनी ग्राह्या ।
अर्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् ॥

इति ब्राह्मोक्तेः । एकैकव्याप्तौ तु परैव प्रदोषस्य मुख्यत्वाद् इति दिवोदासीय उक्तम् । वस्तुतस्तु अर्थवादवाक्ये अर्धरात्र इत्युपादाने पूजने तद्ग्रहणे मानाभावाच्च ।

प्रदोषसमये राजन् कर्तव्या दीपमालिका ।

इति प्रदोषस्यैव सर्वत्र विधिवाक्येषूपादानात्तद्व्यापिन्येवामावास्या युक्ता न त्वर्धरात्रव्यापिनीत्याहुः ।

कार्तिकशुक्लप्रतिपदि गोक्रीडनमुक्तं निर्णयामृते—

या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ।
पूजनात् त्रीणि वर्धन्ते प्रजा गावो महीपतिः ॥
प्रतिपद्यग्निकरणं द्वितीयायां गवार्चनम् ।
मोहाच्छेदं करिष्येते वित्तनाशं कुलक्षयम् ॥
प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् ।
परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः ॥ इति ।

एते च विधिप्रतिषेधाः पूर्वदिने प्रतिपदः सायाह्नव्यापित्वे द्वितीयदिने चन्द्रदर्शनसम्भवे च ज्ञेयाः ।

गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।
सोमो राजा पशून्हन्ति सुरभिः पूजकांस्तथा ॥

इति पुराणसमुच्चयात् । दिनद्वये सायाह्नव्यापित्वे तु परैव ग्राह्या,

वर्धमानतिथौ नन्दा यदा सार्धत्रियामिका ।
द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोच्यते ॥

इति वचनात् । सार्धत्रियामिकेत्यनेन चन्द्रदर्शनाभाव उक्तः, द्वितीयायाः पञ्चधाविभक्तदिनचतुर्थभागरूपापराह्णव्याप्तावेव चन्द्रदर्शनसम्भवात् । दिनद्वये प्रतिपदः सायाह्नव्याप्त्य-

भावे तु पूर्वैव, रात्रौ बलिपूजाविधानेन कर्मकालव्याप्तित्वात् परदिने चन्द्रोदये तन्निषेधाच्च। अत्र गोवर्धनपूजनादि चोक्तं स्कान्दे-

प्रातर्गोवर्धनं पूज्य द्यूतं चापि समाचरेत्।
भूषणीयास्तथा गावः पूज्याश्चावाहदोहनाः॥ इति।

कार्तिकशुक्लद्वितीया यमद्वितीया।

सा प्रतिपद्युता ग्राह्येत्युक्तं निर्णयामृते। मध्याह्नव्यापिनी ग्राह्येति हेमाद्रौ। वस्तुतस्तु अपराह्णव्यापिनी ग्राह्या,

ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्।

इति स्कान्दवाक्येऽपराह्णस्य कर्मकालत्वात्। दिनद्वये तद्व्याप्तावव्याप्तौ च परा "युग्माग्नियुगभूतानाम्" इति युग्मवाक्यात्। अपराह्णः पञ्चधा विभागपक्षेणेति सम्प्रदायः। द्विधापक्षेणेति नव्या इति सिन्धुटीकायां कृष्णभट्टः। अस्यामेव द्वितीयायां भगिनीहस्ताद्भोजनपूर्वकं ताभ्यः स्वर्णालङ्कारवस्त्रादिदानं चोक्तं भविष्ये—

कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः॥
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः॥
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम्।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः॥
स्वर्णालङ्कारवस्त्राग्रपूजासत्कारभोजनैः।

सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः। इति।

प्रतिपन्नका इत्यस्य भगिनीत्वेन कल्पिता इत्यर्थः। यस्य भगिनी नास्ति तेनापि कांचित्स्त्रियं भगिनीत्वेन प्रकल्प्य तस्या गृहं गत्वा तद्धस्तात्पुष्टिवर्धनं भुक्त्वा सा स्वर्णालङ्कारादिदानैः संमाननीयेत्यनुकल्पविधानम्। एतेनास्यां द्वितीयायां भगिनी-

कर्तृकं स्वगृहे भ्रातृपूजनं भ्रातृकर्तृकं च भगिनीपूजनं चेत्येतद्द्वयमावश्यकमिति ध्वनितम् । इदं च—

ऊर्जे शुक्लाद्वितीयायामपराह्णेऽर्चयेद्यमम् ।

इति स्कान्दवचनसिद्धापराह्णिकयमपूजनात्कर्मान्तरम् । अतस्तस्यापराह्णिकत्वेन भ्रातृभगिन्योः परस्परपूजनस्यापराह्णिकत्वोत्प्रेक्षणं, तेन चापराह्णव्यापिन्या द्वितीयाया भ्रातृपूजने प्राह्यत्वाभिधानं चायुक्तम् , यमपूजनस्यापराह्णिकत्वेऽपि भ्रातृपूजनस्य तत्त्वे मानाभावात् ।

स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् ।

इति भोजनश्रवणात्तस्य च माध्याह्निकत्वाद्भगिनीहस्ताद्भोजने मध्याह्नव्यापिनी द्वितीया ग्राह्येति हेमाद्र्यादीनामुक्तिरपि न समञ्जसा, नित्यभोजनस्य माध्याह्निकत्वेऽपि भगिनीहस्तात्पुष्टिवर्धनभोजनस्योत्सवरूपस्य कुमारबालादिसाधारणस्य माध्याह्निकत्वे मानाभावात् । तस्मात् भ्रातृभगिन्योः परस्परपूजनं पौर्वाह्णिकमेवोचितम् । पितृकर्मातिरिक्तकर्मणः सर्वस्यैव दैविकत्वात् ,

पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम् ।

इति पक्षद्वयस्यैवोल्लेखेन पित्र्यकर्मातिरिक्तकर्मणो दैवकर्मण्येवान्तर्भावनीयत्वात् । पौर्वाह्णिकत्वे च "युग्माग्नियुगभूतानाम्" इति युग्मवाक्यात्तृतीयायुता ग्राह्या । सा च त्रिमुहूर्तैव । त्रिमुहूर्ताया एव तिथेर्ग्राह्यत्वादिति धरणीधरपन्तः । मुहूर्तमात्राऽपि ग्राह्येत्यन्ये,

मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परं ।

इत्यादौ तथादर्शनात् ।

कार्तिकशुक्लनवमी युगादिः । सा पौर्वाह्णिकी ग्राह्येत्युक्तम् ।

**कार्तिकशुक्लैकादश्यां भीष्मपञ्चकव्रतम्** ,

कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः ।
एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ॥

इति नारदीयात् ।

**कार्तिकशुक्लैकादश्यां** रेवतीनक्षत्रयोगरहितायां पारणं कार्यम् । रेवत्याश्चतुर्थपादमात्रं वा वर्जयेत् । एकादश्यां रात्रौ देवोत्थापनम् ,

एकादश्यां च शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥

इति ब्राह्मात् ।

चतुरो वार्षिकान्मासान्नियमं यस्य यत्कृतम् ।
कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सदक्षिणम् ॥

इति ब्राह्मवचनाद्यस्य भक्ष्यस्य नियमः कृतस्तद्द्रव्यं द्वादश्यां दद्यात् ।

**कार्तिकशुक्लचतुर्दशी वैकुण्ठसंज्ञा** ।

सा विष्णुपूजायां निशीथप्रदोषोभयव्यापिनी ग्राह्या,

कार्तिकस्यासिते पक्षे चतुर्दश्यां नराधिप ।
सोपवासस्तु सम्पूज्य हरिं रात्रौ जितेन्द्रियः ॥

इति भविष्योक्तेः । अस्या एव विश्वेश्वरप्रतिष्ठादिनत्वात्तत्प्रीत्यर्थं यदोपवासादि क्रियते तदाऽरुणोदयव्यापिनी ग्राह्या,

वर्षे च हेमलम्बाख्ये मासे श्रीमति कार्तिके ।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ॥
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।
स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ॥

इति सनत्कुमारसंहितोक्तेः । तत्पूर्वदिने चोपवासः कार्यः,

ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् ।

दण्डपाणेर्महाभाग्नि वनेऽस्मिन्कृतपारणः ॥

इति तत्रैवोक्तेः ।

ततोऽरुणोदये जाते स्नात्वा स्नात्वा च भस्मना ।
सन्ध्यां समाप्य विश्वेशं मामभ्यर्च्य यथाविधि ॥
मद्भक्तान्भोजयामासुर्ऋषयो बुभुजुस्ततः ।

इति शिवरहस्योक्तेश्च ।

कार्तिकी पौर्णमासी परा ग्राह्या, "अमापौर्णमास्यौ परे" इति दीपिकोक्तेः । अस्यामेव सायङ्काले मत्स्यावतारो जात इति पाद्मे उक्तम्—

वरान्दत्त्वा यतो विष्णुर्मत्स्यरूप्यभवत्ततः ।
तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ॥ इति ।

अत्रैव त्रिपुरोत्सव उक्तो भार्गवार्चनदीपिकायाम्—

पौर्णमास्यां तु सन्ध्यायां कर्तव्यस्त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण प्रदीपांश्च सुरालये ॥
कीटाः पतङ्गा मशकाश्च वृक्षा
जले स्थले ये विचरन्ति जीवाः ।
दृष्ट्वा प्रदीपं न च जन्मभागिनो
भवन्ति नित्यं श्वपचा हि विप्राः ॥

अत्रैव कार्तिकेयदर्शनमुक्तं काशीखण्डे—

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ इति ।

वृश्चिकसंक्रान्तौ पूर्वाः षोडश घटिकाः पुण्याः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

मार्गशीर्षकृष्णाष्टमी कालाष्टमी । सा च रात्रिव्यापिनी ग्राह्या,

मार्गशीर्षाऽसिताष्टम्यां कालभैरवसन्निधौ ।

उपोष्य जागरं कुर्यात्सर्वपापैः प्रमुच्यते ॥

इति काशीखण्डाद्रात्रिव्रतत्वावगतेः । दिनद्वयेऽशतो रात्रिव्याप्तावुत्तरैव, भैरवोत्पत्तेः प्रदोषकालीनत्वादिति केचित् ।

वस्तुतस्तु शिवरहस्ये—

नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ ।

इत्युपक्रम्य—

तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः ।
आविरासीत्तदा लोकान् भीषयन्नखिलानपि ॥

इति मध्याह्ने भैरवोत्पत्तेः अत्रणादिनद्वये मध्याह्नव्याप्तौ पूर्वदिने मध्याह्नप्रदोषोभयव्यापित्वात्पूर्वैव । एवं दिनद्वये प्रदोषव्याप्तावुत्तरदिने मध्याह्नप्रदोषोभयव्यापित्वात्परैव । यदा तु पूर्वदिने प्रदोषव्याप्तिरेव परदिने मध्याह्नव्याप्तिरेव तदा बहुशिष्टाचारानुरोधात्प्रदोषगा पूर्वैव । पूर्वोक्तशिवरहस्यवचनेन मध्याह्ने भैरवाविर्भावनिश्चयेऽपि आविर्भावकालव्यापिन्येव तिथिर्ग्राह्येत्यत्र प्रमाणाभावात् । अस्तोत्तरयामचतुष्टयपूजनसन्ध्यापूजनादिप्रधानकर्मकलापस्य रात्रिकालिकत्वाद्रात्रिव्यापिन्या एवाष्टम्या ग्रहीतुमुचितत्वादिति ।

मार्गशीर्षशुक्लचतुर्दश्यां काश्यां पिशाचविमोचनतीर्थे श्राद्धं त्रिस्थलीसेतौ भट्टैरुक्तम् । तच्छ्राद्धं यदि प्राप्तपैशाचस्वपित्राद्युद्देशेन क्रियते तदा पार्वणत्वादपराह्णव्यापिनी ग्राह्या । यदा तु अज्ञातनामपिशाचाद्युद्देशेन क्रियते तदेकोद्दिष्टत्वान्मध्याह्नव्यापिनी । स्नानतर्पणादौ त्वौदयिक्येव ।

मार्गशीर्षपौर्णमास्यां दत्तात्रेयोत्पत्तिः,

मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले ।
मृगशीर्षयुते पौर्णमास्यां ब्रह्म च वासरे ॥
जनयामास देदीप्यमानं पुत्रं सती शुभम् ।

तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाकरोत्स्वयम् ॥
दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरः ।

इति स्कान्दात् । इयं च प्रदोषव्यापिनी ग्राह्येति वृद्धाः ।

धनुःसंक्रमे पराः षोडश घटिकाः पुण्याः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

मकरसङ्क्रमे परा विंशतिघटिकाः पुण्याः ।

त्रिंशत्कर्कटके पूर्वा मकरे विंशतिः परा ॥

इति वृद्धवसिष्ठोक्तेः । यदा तु सूर्यास्तात्पूर्वं सङ्क्रान्तिर्भवति तदा सर्वमते पूर्वमेव पर्वकालः । रात्रौ तु प्रदोषे निशीथे वा मकरसङ्क्रमे द्वितीयदिन एव पुण्यम् ।

यद्यस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि ॥

इति वृद्धगार्ग्यवचनात् । अस्तमयं प्रदोषः । प्रदोषे पूर्वरात्रे । इदं माधव-कालादर्श मदनपारिजातादीनां मतम् । हेमाद्रिस्मृत्यर्थसारानन्तभट्टादीनां मते तु निशीथात्पूर्वं मकरसंक्रान्तौ पूर्वदिने, निशीथात्पश्चात्संक्रान्तौ परादिने पुण्यम् ।

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वापरविभागेन रात्रौ संक्रमणं यदा ॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि ॥

इति स्कान्दवचनात् । धनुर्मीनौ कन्यां मिथुनं चातिक्रम्य यदा रात्रेः पूर्वभागे संक्रमणं तदा पूर्वदिनस्यान्ते पञ्च नाड्यो दैवे पित्र्ये च कर्माणि पुण्यतमाः स्मृताः । यदा रात्रेरपरभागे संक्रमणं तदा परादिनस्योदये पञ्च नाड्यः पुण्यतमा इति तदर्थः । अनेन स्कान्दवचनेन कर्के मकरे च प्रदोषे पूर्वरात्रे वा सङ्क्रमे पूर्वदिनान्ते पञ्चानां नाडीनां पुण्यतमत्वबोधनादपररात्रे च

सङ्क्रमे परदिनस्योदये पञ्चानां नाडीनां पुण्यतमत्वबोधनात्—

"कार्मुकं तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि ॥"

इति भविष्यवचने एतत्समानार्थके वृद्धगार्ग्यवचने च 'प्रदोषे वा' इति वाशब्दं यथार्थत्वेन 'अर्धरात्रे वा' इति वाशब्दं तथार्थत्वेन परिकल्प्य 'यथा प्रदोषे सङ्क्रमे पूर्वेद्युः पञ्चानां नाडीनां पुण्यत्वं तथाऽर्धरात्रे संक्रमे परेऽह्नि पञ्चानां नाडीनां पुण्यत्वम्' इति हेमाद्र्यादिभिर्व्याख्यातं; तत्तु पदस्वारस्यानगुणम् । तस्मात्—

कार्मुकं तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि ॥
मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा तदा पुण्यं तु पूर्वतः ॥

इति भविष्यपुराणोक्तवचनद्वयानुरोधात् 'धनुर्मीनावतिक्रम्य' इति वचनं पूर्वापरविभागेनेत्यस्य मकरकर्कभिन्नसंक्रान्तिपरत्वाद्रात्रौ पूर्वभागे मकरसंक्रमे परेऽह्नि उदये पञ्चनाड्यः पुण्या रात्रावपरभागे कर्कसंक्रमे पूर्वदिनान्ते पञ्च नाड्यः पुण्या इति धनुर्मीनावतिक्रम्येति स्कान्दवचनस्यार्थः । इत्थं च न कश्चिद्विरोधः । एवम्—

आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिवा ॥

इति देवलवचनेऽप्यासन्नसंक्रमं दिनार्धं पुण्यमित्यस्य विषुवत्येवान्वयः । अयने दिवा इत्यत्र रात्राविति सम्बन्ध्य रात्रावयने सति दिने पुण्यमित्यर्थः । तत्र कस्मिन् दिने इत्यपेक्षायां कर्के पूर्वेऽह्नि मकरे परेऽह्नि इति 'मिथुनात्कर्कसंक्रान्तिः' इति वचनस्य 'कार्मुकं तु परित्यज्य' इति वचनस्य चानुरोधा-

दर्थे उच्यमाने न कोऽपि विरोधः ।

अस्तंगते यदा सूर्ये मृगं याति दिवाकरः ।
प्रदोषे वाऽर्धरात्रे वा तदा पुण्यं दिनद्वयम् ॥

इति बौधायनवचनाद् दिनद्वयं पुण्यकालं केचिदाहुः । 'तदा पुण्यं दिनान्तरम्' इति मदनरत्नादिसम्मतो युक्तः पाठः । तस्माद्रात्रौ मकरसंक्रमे उत्तरादिनमेव पुण्यम् । रात्रौ कर्कसंक्रमे पूर्वेद्युरेव पुण्यम् । तुलामेषयोश्च पूर्वेद्युः परेद्युश्चेत्यर्थः ।

माघकृष्णामावास्यायामर्धोदययोगो महाभारते—

अमाऽर्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥

पौषमाघयोर्मध्यवर्तिनी पौषीपौर्णमास्युत्तराऽमावास्येत्यर्थ इति भट्टाः ।

दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।

इति श्लोकार्धप्रक्षेपेण निर्णयामृते रात्रावयं योगो निरस्तः । हेमाद्र्यादिमते तु रात्रावर्धोदयो भवत्येव । किञ्चिदूनो महोदय इति केचिदाहुः । तन्निर्मूलमिति सिन्धौ ।

पातस्यान्ते पूर्वभागे त्वमायाः
श्रोणामध्ये भास्करस्योदये च ।
भानोर्वारे अर्धमित्याहुरार्या-
श्चन्द्रोर्वारे तन्महत्पूर्वमाहुः ॥

इति धर्मप्रवृत्तिवचनादिन्दोर्वारे महोदयमाहुष्टीकाकाराः ।

माघकृष्णचतुर्दश्यां यमतर्पणमुक्तं यमेन—

अनर्काभ्युदिते काले माघकृष्णचतुर्दशीम् ।
स्नातः सन्तर्प्य तु यमं सर्वपापैः प्रमुच्यते ॥ इति ।

माघशुक्लचतुर्थी तिलचतुर्थी ।

सा प्रदोषव्यापिनी ग्राह्या,

माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥

इति काशीखण्डात् । इयमेव कुन्दचतुर्थी । सापि प्रदोषव्यापिनी ग्राह्या,

माघशुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् ।
सम्पूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः ॥

इति कौर्मवचने नक्ताशीत्युक्तेः । वस्तुतस्तु मध्याह्नव्यापिनी ग्राह्येति बहुपुस्तकपाठो युक्तः । सम्पूज्येत्यनेन पूजाव्रतत्वोक्तेः । तत्र च—

पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।

इति वचनान्मध्याह्नस्यैव कर्मकालत्वात् । नक्ताशीति तु नक्तस्याङ्गत्वमात्रबोधकं न तु नक्तभोजनस्य प्राधान्यबोधकं, येन प्रदोषव्यापिनी तिथिर्गृह्येत । तस्मान्मध्याह्नव्यापिन्येव ग्राह्येति सिन्धुटीकायां कृष्णभट्टः ।

माघशुक्लपञ्चमी श्रीपञ्चमी ।

तत्र श्रीपूजा कार्या,

चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।
सौभाग्यं मङ्गलं कुर्यात्पञ्चम्यां श्रीरपि श्रियम् ॥

इति भविष्येऽभिधानात् । इयं च हेमाद्रिमते परा,

पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद ।

इत्यापस्तम्बवचनात् । अस्यामेव पञ्चम्यां रतिकामादिपूजावसन्तोत्सवश्चाभिहितः,

माघमासे सुरश्रेष्ठ शुक्लायां पञ्चमीतिथौ ।
रतिकामौ तु सम्पूज्य कर्तव्यः सुमहोत्सवः ॥

इति पुराणसमुच्चयात् । अत्र मध्याह्नः कर्मकालः पूजाव्रतत्वात् । श्रीकृष्णभक्तैस्त्वत्र सलक्ष्मीको भगवान् श्रीकृष्णः पूज्यः,

माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ॥

इति वाराहोक्तेः । अत्र त्रेधाविभागेन पूर्वाह्णः कर्मकालो ग्राह्यः,

त्रेधाविभक्तदिवसे प्रातःकाले सुरार्चनम् ।
मध्याह्ने तीर्थकार्यं च सायं रक्षाकरी क्रिया ॥

इति दिनकरोद्द्योतवचनात् । दिनद्वये तदेकदेशव्याप्तौ परा,

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।

इति वाक्यात् । "युग्माग्नियुगभूतानाम्" इति युग्मवाक्यं तु नेह प्रवर्तते उपवासे सावकाशत्वात् ।

**माघशुक्लसप्तमी रथसप्तमी ।**

साऽरुणोदयव्यापिनी ग्राह्या ।

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥

इति विष्णुवचनात् । यत्तु—

अचला सप्तमी दुर्गा शिवरात्रिर्महाभरः ।
द्वादशी वत्सपूजायां सुखदा प्राग्युता सदा ॥

इति दिवोदासीये षष्ठीयुतत्वमुक्तं, तत्तु यदा पूर्वेऽह्नि घटिकाद्वयं षष्ठी, सप्तमी च क्षयवशादरुणोदयात्पूर्वं समाप्यते तत्परं बोध्यम् । तत्र षष्ठ्यां सप्तमीक्षयं प्रवेश्यारुणोदये स्नानं कार्यम् ।

इयं मन्वादिरपि । शुक्लपक्षस्थत्वात्पौर्वाह्णिकी ग्राह्या ।

**माघशुक्लाष्टमी भीष्माष्टमी ।**

सा परा ग्राह्या, शुक्लपक्षस्थत्वात् । अस्यां च भीष्मोद्देशेन तर्पणं श्राद्धं च विहितं पाद्मे—

माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥ इति ।

भीष्मतर्पणं तु जीवत्पितृकस्यापि भवति,

जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।

इति पाद्मोक्तेः ।

**माघशुक्लद्वादशी भीष्मद्वादशी ।**

इयं पूर्वयुता, युग्मवाक्यात् ।

**माघी पूर्णिमा परेत्युक्तं प्राक् ।**

कुम्भे षोडश घटिकाः पूर्वाः पुण्याः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

**फाल्गुनकृष्णचतुर्दशी शिवरात्रिः ।**

सा च केषुचिद्वचनेषु प्रदोषव्यापिनी, केषुचिच्च निशीथव्यापिनी । तत्राद्या माधवीये—

त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।

भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥ इति ।

स्मृत्यन्तरेऽपि—

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।

रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥ इति ।

द्वितीया च नारदसंहितायाम्—

अर्धरात्रियुता यत्र माघकृष्णचतुर्दशी ।

शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥ इति ।

अर्धरात्रश्च द्वितीययामान्त्यतृतीययामाद्यघटीद्वयरूप इति माधवः । एवं सति पूर्वेद्युरेवोभयव्याप्तौ पूर्वैव ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।

जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

इति स्कान्दोक्तेः । दिनभुक्तिरस्तमयः । दिनद्वये निशीथव्याप्तौ हेमाद्रिमते पूर्वा ।

अर्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ।

पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः ॥

इति पाद्मवचनात् । मदनरत्नेऽप्येवम् ।

परदिने प्रदोषनिशीथोभयव्याप्तिसत्त्वात्परैवेति तु माधवः । इदमेव च युक्तम् । यदा तु प्रागुक्तार्धरात्रस्य परेद्युरेकदेशव्याप्तिः पूर्वेद्युस्तु सम्पूर्णार्धरात्रव्याप्तिस्तदा परेद्युः प्रदोषनिशीथोभययोगे सत्यपि पूर्णनिशीथव्याप्तेरभावात्पूर्वेद्युश्च पूर्णनिशीथव्याप्तेः सत्त्वात्पूर्वैव ।

व्याप्यार्धरात्रं यस्यां तु लभ्यते या चतुर्दशी ।
तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः ॥

इति माधवघृतेशानसंहितोक्तेः । पूर्वेद्युर्निशीथस्य परेद्युः प्रदोषस्येत्येकैकव्याप्तौ च पूर्वैव ।

माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी ।
अनङ्गेन समा युक्ता कर्तव्या सा सदा तिथिः ॥

इति नागरखण्डे जयायोगप्राशस्त्योक्तेः । यदा तु पूर्वेद्युर्निशीथादूर्ध्वं चतुर्दशी प्रवृत्ता परेद्युश्च निशीथादर्वागेव समाप्यते तदा परेद्युरेकव्याप्तिसत्त्वात्परैव । एवं दिनद्वये प्रदोषव्याप्त्यभावे निशीथव्याप्तिसत्त्वात्पूर्वैव ।

शिवरात्रिपारणे विरुद्धानीव वाक्यानि दृश्यन्ते ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इति स्कान्दवचनं तिथ्यन्ते पारणबोधकम् ।

उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् ।
कृतः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा ॥

इत्यादीनि तिथिमध्ये पारणबोधकानि ।

अत्रेयं व्यवस्था–"तिथ्यन्ते पारणं भवेत्" इति कृष्णाष्टम्यादिविषयमेव, न तु शिवरात्रिविषयम् । शिवरात्र्युपादानं तु तत्र

पूर्वयुतत्वमात्रकथनार्थम् । अत एवोत्तरत्र स्कान्दे—

तिथ्यन्ते पारणं कुर्यात् विना शिवचतुर्दशीम् ।

इति पर्युदासः सङ्गच्छते । तस्माच्छिवरात्र्याः सर्वप्रकारेषु तिथिमध्य एव पारणेति शिष्टाः ।

**अमान्तमानेन माघामावास्या द्वापरयुगादिः।** "माघमासे त्वमावास्या" इत्युक्तेः । अन्यत्पूर्वमुक्तम् ।

**फाल्गुनशुक्लद्वादशी गोविन्दद्वादशी ।**

फाल्गुनस्यापरे पक्षे कुम्भस्थे दिवसाधिपे ।
जीवे धनुषि योगे च शोभने रविवासरे ॥
पुष्यर्क्षे यदि सम्पूर्णा गोविन्दद्वादशी मता ।

इति ब्राह्मोक्तेः ।

जीवे चापगते रवौ कलशगे चन्द्रे कुलीरस्थिते
मासे फाल्गुनसंज्ञके सिततरे पक्षे यदा द्वादशी ।
पुष्यर्क्षेण च शोभनेन च तथा युक्ता कथंचिद्भवेत्
क्षेत्रे श्रीपुरुषोत्तमे सुविमले गोविन्दनामा हि सा ॥

इति पाद्मोत्तरखण्डाच्च ।

**फाल्गुनपौर्णमासी होलिका ।**

सा च प्रदोषव्यापिनी ग्राह्या ।

प्रतिपद्भूतभद्रासु याऽर्चिता होलिका दिवा ।
संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥
प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥

इति ज्योतिर्निबन्धे नारदवचनात् । "सायाह्ने होलिकां कुर्यात्" इति त्वेतदेकवाक्यतया सायाह्नेऽतीते इत्यर्थकम् ।

अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे ।
गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे ॥

इति भविष्ये प्रदोष एव तत्पूजनादिविधानाच्च। यदा तु द्वितीयदिने प्रदोषव्याप्तिर्नास्ति तदेयं पूर्वविद्धा ग्राह्या,

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति बृहद्यमवचनात्। दिनद्वये प्रदोषव्याप्तौ परैव, पूर्वदिने भद्रासत्त्वात्तत्र च होलिकानिषेधात्।

भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै।

इति पुराणसमुच्चयात्।

यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी तदुत्तरं पूर्णिमा प्रवृत्ता, परदिने च क्षयवशात्सायाह्नात्प्रागेव पूर्णिमा समाप्यते, तदा पूर्वदिने सम्पूर्णरात्रौ भद्रासत्त्वात्तत्र च होलिकानिषेधात्परेऽहनि प्रतिपद्येव होलिकां कुर्यात्।

सार्धयामत्रयं वा स्याद् द्वितीयदिवसे यदा।
प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता ॥

इति भविष्यवचनादिति मदनरत्नादावुक्तम्।

अन्ये तु—

तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे।
प्रदोषव्यापिनी चेत्स्याद्यदा पूर्वदिने तदा ॥
भद्रामुखं वर्जयित्वा होलिकायाः प्रदीपनम्।

इत्यादिवचनेषु भद्रामुखमात्रस्य वर्ज्यत्वबोधनाद्भद्रामुखं विहाय पूर्वदिन एव होलिका कार्येत्याहुः। भद्रामुखं तु षष्टिघटीमितायां पूर्णिमायां पूर्णिमाप्रवृत्त्युत्तरं सार्धद्वाविंशतिघटिकोत्तरं घटीपञ्चकम्। भद्रामुखमात्रपरित्यागो न युक्तः, किन्तु पूर्वेद्युर्विष्टिपुच्छे होलिका कार्या।

पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः।

इति लल्लवचनात् । विष्टिपुच्छं तु पूर्णिमाप्रवृत्त्युत्तरं सार्धैकोनविंशतिघटिकोत्तरं घटीत्रयमिति कृष्णभट्टः । यदा तु—

पञ्चपञ्च उषःकालः सप्तपञ्चारुणोदयः ।
अष्टपञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृतः ॥

इति परिभाषितसूर्योदयात्पूर्वं पूर्वरात्रौ भद्राऽवसानं लभ्यते, परदिने चास्तात्प्रागेव पूर्णिमा समाप्यते तदा प्रदोषमतिक्रम्यापि भद्रावसानकाले होलादीपनं कार्यम् , तथैव शिष्टाचारात् ।

अत्र चेच्चन्द्रग्रहणं तदाऽर्वाङ्निशि भद्रावर्जपौर्णिमास्यां होलिकादीपनम् । परेऽह्नि ग्रस्तोदयश्चेत्प्रदोषे पौर्णमासीसत्त्वे कर्मकालं परित्यज्य पूर्वदिने चतुर्थयामादिगौणकालग्रहणे मानाभावात् भद्राभावाच्च द्वितीयादिने ग्रहणकाल एव होला कार्या । न च--

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।

इति वचनाद् ग्रहणकाले स्मार्तकर्मानधिकार इति वाच्यम् ,

स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ।

इत्युत्तरार्धेन स्नानोत्तरं ग्रहणकालेऽपि नित्यनैमित्तकयोरधिकारबोधनात् ।

मीनसंक्रान्तौ पराः षोडश घटिकाः पुण्याः । रात्रौ निशीथात्पूर्वं संक्रमे इत्यादि पूर्ववत् ।

चैत्रकृष्णप्रतिपदि वसन्तोत्सवः । सा चौदयिकी ग्राह्या ।

प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।
कृत्वा चावश्यकार्याणि सन्तर्प्य पितृदेवताः ॥
वन्दयेद्धोलिकाभूमिं सर्वदुःखोपशान्तये ।

इति भविष्यवचनात् । दिनद्वयेत्वौदयिकत्वे पूर्वा ।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ॥

इति वृद्धवासिष्ठवचनात् ।

चैत्रकृष्णत्रयोदश्यां वारुणी महावारुणी महा-महावारुणीति त्रयो योगाः स्कान्दे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥ इति ।

चैत्रामावास्या मन्वादिः ।

अथैकादशी निर्णीयते—'तत्रैकादश्युपवासो द्वेधा—भोजननिषेधपरिपालनात्मको व्रतात्मकश्च । तत्राद्यः—

न शङ्खेन पिबेत्तोयं न खादेत्कूर्मसूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इति देवलादिभिरुक्तः। कणगे इति महाराष्ट्रभाषायां प्रसिद्धः कन्दः कूर्मः । कोन्द इति प्रसिद्धः कन्दः सूकरः । निषेधस्वरूपं च--

विधेर्यत्राप्रधानत्वं प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ॥

इति कृष्णंभट्टेनोक्तम् । भोजनानिषेधश्च सकलादनीयनिषेधो न त्वन्नभोजनमात्रनिषेधः । 'न पचेदन्नमात्मनः' इत्यादाविव भुजधातोः सकलादनीयभोजनपरत्वात् । अन्यथा कृष्णायामेकादश्यां गृहस्थादीनां व्रतरूपोपवासनिषेधेऽन्नभोजननिषेधेऽपि फलादिभक्षणप्राप्तेः

उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत्।

इति फलादिभक्षणविधिवैयर्थ्यापत्तिः।

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

इत्यग्निपुराणे निषेधपरिपालने सर्वेषामधिकार उक्तः। व्रतरूपस्तु—

प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि।
दशम्यामुपवासस्य प्रकुर्याद्वैष्णवव्रतम्॥

दशम्यामुपवासस्य नियमं विधायेत्यन्वयः। इदं च व्रतं शिवभक्तादिभिरपि कार्यम्,

वैष्णवो वाऽथ शैवो वा कुर्यादेकादशीव्रतम्।

इति शिवधर्मोक्तेः।

व्रतरूपोपवासश्च द्वेधा—नित्यः काम्यश्च।

पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम्।

इति नारदोक्तेर्नित्यत्वम्।

यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

इति कौर्मादिषु फलश्रुतेश्च काम्यता। उभयैकादशीव्रतं तु गृहस्थातिरिक्तानामेव नित्यम्। गृहस्थस्य तु शुक्लायामेव नित्यम्,

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही॥

इति देवलोक्तेः। एवञ्चेदं वचनं 'एकादश्यां न भुञ्जीत' इति पर्युदासाश्रयणेन भोजनाभावसंकल्पात्मकव्रतविधिपरम्। 'न भुञ्जीत' इति निषेधबोधने 'गृहस्थो ब्रह्मचारी च' इति पूर्वोक्ताग्निपुराणवचने निषेधपालने गृहस्थस्याप्यधिकारोक्त्या विरोधः

स्यात् । अभावस्य धर्मत्वाभावेन 'वनस्थयतिधर्मोऽयम्' इत्य-स्यानन्वयापत्तेश्च । तस्मादेकादशीव्रतविधायिनां सर्वेषां वाक्या-नां वनस्थयतिविषये 'एकादश्यां न भुञ्जीत' इत्यनेनोपसंहा-रान्न गृहस्थस्य कृष्णायां नित्यव्रतप्राप्तिः ।

संक्रान्त्यामुपवासं च कृष्णैकादशीवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृही ॥

इति नारदादिवचनैः पुत्रवतो गृहस्थस्य कृष्णानिषेधः ।

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

इति पाद्मवचनेन आषाढीकार्तिकीमध्यगतायाः कृष्णाया गृहस्थोपोष्यत्वेन विहितायाः प्राप्तत्वात् । निषेधपालनात्मकव्रतं काम्यव्रतं च सर्वकृष्णायां सर्वगृहिणां भवत्येव ।

पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च ।
उभयोः पक्षयोः काम्यव्रतं कुर्यात्तु वैष्णवम् ॥

इति नारदोक्तेरिति हेमाद्र्यादीनां मतम् ।

प्राच्यास्तु--वैष्णवगृहस्थानां कृष्णाऽपि नित्या ।

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ॥
सपुत्रश्च सभार्यश्च सजनो भक्तिसंयुतः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

इति नारदोक्तेरित्याहुः । उपवासनिषेधे विशेषो वायवीये--

उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥ इति ।

भक्ष्यं चोक्तं तत्रैव--

नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥

एकादशी द्वेधा-विद्धा, शुद्धा च। दशमीवेधवती विद्धा। तद्रहिता शुद्धा। तत्र दशमीवेधो द्वेधा-अरुणोदयवेधः, सूर्योदय-वेधश्च। आद्यो गारुडे—

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः।
नैवोपोष्यं वैष्णवेन तद्दिने नैकादशीव्रतम्॥ इति।

अरुणोदयस्वरूपं च स्कान्दे उक्तम्—

उदयात्प्राक् चतस्रस्तु घटिका अरुणोदयः। इति।

अन्त्यस्तु उदयवेधः। स च कण्वेनोक्तः-

उदयोपरि विद्धा तु दशम्येकादशी यदि।
दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः॥ इति।

तत्रारुणोदयवेधो वैष्णवविषयः। 'दशमीशेषसंयुक्तः' इत्या-दितद्वाक्येषु वैष्णवग्रहणात्। तत्स्वरूपं तु स्कान्दे-

परमापदमापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी॥ इति।

यद्यपि पित्रादेरागमदीक्षायां पित्रादेरेव वैष्णवत्वं न तु पुत्रादेरिति अनेन वचनेन लभ्यते तथापि स्वपारम्पर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च मन्यन्ते वृद्धाः। अरुणोदयवेधस्य वैष्णव-विषयत्वे स्थिते सूर्योदयवेधः परिशेषात्स्मार्तगोचरः। तदुक्तं माधवेन-

अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा।
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात्॥ इति।

"दिक्पञ्चदशभिस्तथा" इति पञ्चदशघटीवेधस्तु उपवासाति-रिक्तविषयः।

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः।
सार्धसप्तमुहूर्तस्तु योगोऽयं बाधते व्रतम्॥

इति निगमादिति माधवः। तत्र वैष्णवैररुणोदयविद्धा

त्याज्या। अरुणोदयवेधरहिता वैष्णवानां शुद्धा। सा चतुर्विधा—१एकादशीमात्राधिक्यवती, २द्वादशीमात्राधिक्यवती, ३उभयाधिक्यवती, ४अनुभयाधिक्यवती चेति। अत्राधिक्यं सूर्योदयोत्तरसत्त्वम्। तत्रोदाहरणं—शनिवासरे दशमी नाड्यः पञ्चपञ्चाशत्, रविवासरे एकादशी नाड्यः षष्टिः, सोमवासरे एकादशी नाडी एका, अनन्तरं द्वादशी अष्टपञ्चाशद्घटिकाः। इयमेकादशीमात्राधिक्यवती वैष्णवैः परोपोष्या।

सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम्॥

इति नारदोक्तेः। सम्पूर्णैकादशी त्वरुणोदयमारभ्य प्रवृत्ता ज्ञेया,

"उदयात्प्राग् यदा विप्र मुहूर्तद्वयसंयुता।
सम्पूर्णैकादशी नाम" इति कृष्णभट्टीये वचनात्। स्मार्तगृहस्थैस्तु एकादशीमात्राधिक्यवती पूर्वोपोष्या।

प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्रसंयुता।
द्वादश्यां च तथा तात दृश्यते पुनरेव च॥
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो॥

इति स्कान्दोक्तेः। अत्र यतिपदं वनस्थविधवावैष्णवानामुपलक्षणम्। निष्कामत्वेन तु सर्वेषां संग्रहः।

अथ द्वादशीमात्राधिक्यवती—शनिवासरे दशमी पञ्चपञ्चाशत्, रविवासरे एकादशी अष्टपञ्चाशत्, सोमवासरे द्वादशी षष्टिः, भौमे च द्वादशी तिस्रः। अत्र वैष्णवानां द्वादश्यामुपोषणम्।

सम्पूर्णैकादशी यत्र द्वादश्यां च परेऽहनि।
तत्रोपोष्या द्वादशी स्याद् द्वादश्यामेव पारणम्॥

इति हेमाद्रौ वचनात्। स्मार्तगृहस्थैस्तु पूर्वा।

नचेदेकादशी विष्णौ द्वादशी परतः स्थिता॥
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम्॥

इति नारदोक्तेः । विष्णौ द्वादश्यामेकादशी न चेद् द्वादशी च षष्टिघटिका अतिक्रम्य परतः स्थिता चेत्तत्रैकादशी स्मार्तगृहस्थैरुपोष्येति नारदवचनार्थः ।

अथोभयाधिक्यवती शुद्धा—शनिवासरे दशमी पञ्चपञ्चाशत्, रविवासरे एकादशी षष्टिः, सोमवासरे एकादशी एका, भौमे द्वादशी पञ्च । अत्र सर्वैर्वैष्णवैः स्मार्तैश्च परैवोपोष्या ।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

इति नारदोक्तेः ।

अथानुभयाधिक्यवती शुद्धा—दशमी शनिवासरे पञ्चपञ्चाशत्, रविवासरे एकादशी सप्तपञ्चाशत्, सोमवासरे द्वादशी अष्टपञ्चाशत् । इयं च वैष्णवैः स्मार्तश्चैं पूर्वैवोपोष्या, कुतोऽपि वेधलेशाभावेनासन्देहात् ।

अथ स्मार्तैकादशीनिर्णयः । तेषां सूर्योदये वेधवती विद्धा, तद्रहिता शुद्धा । द्विविधाऽपि प्रत्येकं चतुर्धा—एकादशीमात्राधिक्यवती, उभयाधिक्यवती, द्वादशीमात्राधिक्यवती, अनुभयाधिक्यवती चेति । शनिवासरे दशमी अष्टपञ्चाशत्, रविवासरे एकादशी षष्टिः, सोमवासरे एकादशी एका, अनन्तरं प्रवृत्ता द्वादशी क्षीणा, अर्थाद् भौमे नास्ति । इयमेकादशीमात्राधिक्यवती शुद्धा । अत्र स्मार्तानां गृहिणां पूर्वोपोष्या,

एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही ॥

इति प्रचेतसोक्तेः ।

अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु ।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥

इति ऋष्यशृङ्गोक्तेश्च। अत्र मुहूर्तपञ्चकमरुणोदयमारभ्य ज्ञेयम्। सूर्योदयमारभ्य मुहूर्तपञ्चकं दशमीसत्त्वे उत्तरेऽन्हि एकादश्यभावो न संभवति क्षयस्य षण्नाडीतोऽधिकस्यासम्भवात् 'बाणवृद्धी रसक्षयः' इति सांवत्सराणां परिभाषणात्।

दशमी शनिवासरे चतस्रः, रविवासरे एकादशी तिस्रः, अनन्तरं प्रवृत्ता द्वादशी क्षीणा सोमे नास्ति। इयं विद्धा एकादशीमात्राधिक्यवती। अत्र स्मार्तानां गृहिणां पूर्वा।

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन।
उपोष्यैकादशी तत्र दशमीमिश्रिताऽपि च॥

इति स्कान्दात्। निष्कामस्मार्तानां यतिविधवादीनां च परैवोपाष्या।

दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते।
शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः॥

इति व्यासोक्तेरिति परे।

उभयाधिक्यवती शुद्धा यथा--दशमी शनिवासरेऽष्टपञ्चाशत्, रविवासरे एकादशी षष्टिः, सोमवासरे एकादशी एका, भौमे द्वादशी चतस्रः। एवमुभयाधिक्यवती विद्धा यथा--शनिवासरे दशमी घटिकाद्वयं, रविवासरे एकादशी घटिकात्रयं, सोमवासरे द्वादशी घटिकाचतुष्टयम्। अत्रोभयत्रापि स्मार्तैर्वैष्णवैश्चाविशिष्टा परैवैकादशी उपोष्या "संपूर्णैकादशी यत्र" इति पूर्वोक्तवचनात्। द्वादशीमात्राधिक्यवती शुद्धा यथा--शनिवासरे दशमी अष्टपञ्चाशत्, रविवासरे एकादशी एकोनषष्टिः, सोमवासरे द्वादशी षष्टिः, भौमे पुनर्द्वादशी एका। अत्र शुद्धत्वात्स्मार्तानामेकादश्यामेवोपवासो न द्वादश्याम्।

न चेदेकादशी विष्णौ द्वादशी परतः स्थिता।
उपोष्यैकादशी तत्र यदीच्छेत् परमं पदम्॥

इति नारदोक्तेः। द्वादशीमात्राधिक्यवती विद्धा यथा--दशमी शनिवासरे घटिकापरिच्छिन्ना, एकादशी क्षयगामिनी अर्थात् रविवासरे नास्ति, द्वादशी रविवासरे षष्टिः, भौमवासरे एका। अत्रैकादश्या दशमीविद्धत्वाद् द्वादश्यामेव स्मार्तानामुपवासः।

एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी शुद्धा यदीच्छेत् परमां गतिम् ॥

इति व्यासोक्तेः। लोपो हि सूर्योदयास्पर्शित्वम्। एवञ्चोभयाधिक्ये एकादश्याः क्षये द्वादशीमात्राधिक्ये च स्मार्तानां विद्धायास्त्यागो नान्यत्र, वैष्णवानां तु षड्विधामप्याधिक्यवतीं त्यक्त्वा द्वादशी उपोष्या।

अनुभयाधिक्यवती शुद्धा यथा-शनिवासरे दशमी सप्तपञ्चाशत्, रविवासरे एकादशी अष्टपञ्चाशत्, सोमवासरे द्वादशी एकोनषष्टिः।अत्र स्मार्तानामेकादश्यामुपवासो,न द्वादश्यां, सूर्योदयवेधाभावात्। वैष्णवानां त्वरुणोदयविद्धत्वाद् द्वादश्यामेवोपवासः। अनुभयाधिक्यवती विद्धा यथा-शनिवासरे दशमी २, अनन्तरं प्रवृत्तैकादशी क्षीणा षट्पञ्चाशत्, रविवासरे द्वादशी पञ्चपञ्चाशत्। अत्रापि स्मार्तानामेकादश्यामुपवासः।

सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम् ॥

इति ऋष्यशृङ्गोक्तेः।

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन।
उपोष्यैकादशी तत्र दशमीमिश्रिताऽपि च ॥

इति स्कान्दाच्च। वैष्णवानां तु विद्धायाः सर्वथा त्याज्यत्वाद् द्वादश्यामेवोपवासः।

**अथामावास्यानिर्णयः**-अमावास्या निरग्निकादिभिरपराह्णव्याप्त्यलाभे कुतपकालव्यापिनी ग्राह्या,

भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ॥

इति हारीतोक्तेः । इदं च हारीतवचनं निरग्निकादिविषयम् ।

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथाचानग्निकैर्द्विजैः ॥

इति लौगाक्षिवचनात् । कुतपश्च दिवसस्याष्टमो मुहूर्तः । अयं चापराह्णव्याप्त्यलाभेऽनुकल्पो बोध्यः ।

अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥

इति जाबाल्युक्तेः । अतश्च साग्नीनां निरग्नीनां चापराह्णव्यापिन्येव मुख्या । तिथिसाम्यवृद्धिक्षयैः दिनद्वये समव्याप्तौ खर्ववाक्येन निर्णयः ।

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ, हिंसा स्यात्पूर्वकालिकी ॥

इति व्याघ्रवचनात् । खर्वस्तिथिसाम्यं, दर्पस्तिथिवृद्धिः, तयोः परा, हिंसा तिथिक्षयः तत्र पूर्वेति तदर्थः । दिनद्वये वैषम्येण व्याप्तौ अधिकव्याप्त्या निर्णयः । दिनद्वये पूर्णाऽपराह्णव्याप्त्यलाभेऽपराह्णस्पर्शमात्रे कुतपव्यापिनी ग्राह्येति माधवः । अपराह्णश्च त्रेधाविभक्तदिनतृतीयांशः,

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥

इति कात्यायनोक्तेः ।

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितॄणां च तत्र दानं प्रशस्यते ॥

इति शातातपोक्तेश्च । हेमाद्रिमते तु कुतपकालव्यापिन्येव

निरग्न्यादेर्मुख्या । पूर्वदिने परदिने वा तद्व्याप्तित्वे सैव ग्राह्या, अंशव्याप्तित्वे-वैषम्येऽधिककालव्यापिनी ग्राह्या, अंशतः समव्याप्तौ तिथिक्षये पूर्वा, वृद्धौ साम्ये च परा,

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥

इति प्रचेतोवचनात् । दिनद्वये संपूर्णकुतपव्याप्तिस्तु तिथिवृद्धावेव भवति, तत्राप्यनन्तरवचनात्परैव । कुतपस्तु दिवसस्याष्टमो मुहूर्तः ।

अह्नो मुहूर्ता विज्ञेया दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥

इति मात्स्योक्तेः । तुलादानपितृदेवप्रीत्यर्थोपवासादौ तु अमावास्या परा ग्राह्या दानादिकर्मकालपर्याप्ता त्रिमुहूर्ता मुहूर्तमात्राऽपि चेत्यलम् ।

इतिखण्डकालनिर्णयः ।



श्रीगुरुः शरणम् ।

# वर्षकृत्यदीपकोत्तरार्धे-

## व्रतविधिपूजाप्रकरणे ।

---

अथ रामनवम्यादिव्रतपूजाप्रयोगाः प्रदर्श्यन्ते । तत्रादौ तद्विधयः पूर्वं प्रदर्श्यन्ते । तत्र रामनवमीव्रतविधिर्हैमाद्रावगस्त्यसंहितायाम्—

अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत् ॥
प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम् ।
आचार्यं चैव संपूज्य वृणुयात्प्रार्थयेन्निशि ॥
श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम ।
भक्त्याचार्यो भव प्रीत श्रीरामोऽसि त्वमेव च ॥

तथा—

स्वगृहे चोत्तरे देशे दानस्योज्ज्वलमण्डपम् ।
शङ्खचक्रहनूमद्भिः प्राग्द्वारे समलंकृतम् ॥
गरुत्मच्छार्ङ्गबाणैश्च दक्षिणे समलंकृतम् ।
गदाखड्गाङ्गदैश्चैव पश्चिमे सुविभूषितम् ॥
पद्मस्वस्तिकनीलैश्च कौबेरे समलंकृतम् ।
मध्ये हस्तचतुष्काढ्यं वेदिकायुक्तमायतम् ॥
ततः संकल्पयेद्देवं राममेव स्मरन्मुने ।
अस्यां रामनवम्यां च रामाराधनतत्परः ॥

उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ।
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ॥
श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ।
प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे ॥
अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ।
विलिखेत्सर्वतोभद्रं वेदिकोपरि सुन्दरम् ॥
मध्ये तीर्थोदकैर्युक्तं पात्रं संस्थाप्य चर्चितम् ।
सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत् ॥
ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः ।
निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम् ॥
बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने ।
वामेनाधःकरेणाराद्देवीमालिङ्ग्य संस्थिताम् ॥
सिंहासने राजतेऽत्र पलद्वयविनिर्मिते ।
अशक्तो यो महाभागः स तु वित्तानुसारतः ॥
पलेनाथ तदर्धेन तदर्धार्धेन वा मुने ।
सौवर्णं राजतं वाऽपि कारयेद्रघुनन्दनम् ॥
पार्श्वे भरतशत्रुघ्नौ धृतच्छत्रकरावुभौ ।
चापद्वयसमायुक्तं लक्ष्मणं चापि कारयेत् ॥
दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ।
मातुरङ्कगतं राममिन्द्रनीलसमप्रभम् ॥
पञ्चामृतस्नानपूर्वं सम्पूज्य विधिवत्ततः ।
मूलमन्त्रेण नियतो न्यासपूर्वमतन्द्रितः ॥
अशोककुसुमैर्युक्तमर्घ्यं दद्याद्विचक्षणः ।
दशाननवधार्थाय धर्मसंस्थापनाय च ॥
राक्षसानां विनाशाय दैत्यानां निधनाय च ।
परित्राणाय साधूनां जातो रामः स्वयं हरिः ॥

गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ।
पुष्पाञ्जलिं पुनर्दत्त्वा यामे यामे प्रपूजयेत् ॥
दिवैवं विधिवत्कृत्वा रात्रौ जागरणं ततः ।
ततः प्रातः समुत्थाय स्नानसंध्यादिकाः क्रियाः ॥
समाप्य विधिवद्रामं पूजयेद्विधिवन्मुने ।
ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ॥
पूर्वोक्तपद्मकुण्डे वा स्थण्डिले वा समाहितः ।
लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः ॥
आज्येन पायसेनैव स्मरन् राममनन्यधीः ।
ततो भक्त्याऽथ सन्तोष्य आचार्यं पूजयेन्मुने ॥
ततो रामं स्मरन्दद्यादेवं मन्त्रमुदीरयन् ।
इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् ॥
चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ।
श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥
इति दत्त्वा विधानेन दद्याद्वै दक्षिणां ध्रुवम् ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥ इति ।

**अथ रामपूजाप्रयोगः** । तत्र व्रतकर्ता निर्णीतायां श्रीरामनवम्यां प्रातःस्नानादि नित्यकृत्यं विधाय श्रीरामपूजार्थं स्वगृहोत्तरभागे यथासम्भवं यागमण्डपं पूजासामग्रीं च सम्पाद्य नद्यादौ मध्याह्नस्नानादि विधाय पूजास्थानमागत्य प्रयतः स्वासने उपविश्य प्रथमं तमःसञ्चारिभूतादिनिवारणार्थम् ईशानकोणे दीपं प्रज्वाल्य “नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः” इति तं संपूज्य आचम्य ( स्वस्तिवाचनं ) शान्तिपाठं कृत्वा सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिम्, ॐ नमोऽस्त्वनन्तायेति श्रीष्टदेवतायै पुष्पाञ्जलिं च समर्प्य सा-

मान्यार्घ्यं संस्थाप्य सूर्यायार्घ्यं दत्त्वा भूतोत्सादनमासनविधिं च कृत्वा गुरुं गणेशं च ध्यात्वा नत्वा द्वारपूजां कुर्यात् । पूर्वस्यां-ॐ हनुमते नमः, दक्षिणस्यां-ॐ गरुत्मते नमः, पश्चिमायां-ॐ अङ्गदाय नमः, उत्तरस्यां-ॐ नीलाय नमः । ततो विशेषार्घ्यं संस्थाप्य तज्जलेन आत्मानं सर्वां पूजासामग्रीं च त्रिः प्रोक्ष्य प्राणानायम्य(१)संकल्पं कुर्यात् । ॐ विष्णुः ३ अद्येहेत्यादि श्रीरामनवम्यां शुभपुण्यतिथौ सकलपापक्षयकामः अमुकगोत्रः अमुकशर्माऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीरामचन्द्रप्रीत्यर्थं श्रीरामनवमीव्रतं करिष्ये । तदङ्गत्वेन सुवर्णनिर्मितप्रतिमायां शालग्रामशिलादौ वा सपरिवारस्य श्रीरामचन्द्रस्य षोडशोपचारैः पूजनं करिष्ये इति ।

निराहारपक्षे तु—

उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव ।
तेन प्रीतो भव त्वं भो संसारात् त्राहि मां हरे ॥
अस्यां रामनवम्यां तु रामाराधनतत्परः ।
उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ॥
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ।
श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ॥
प्रीतो रामो हरत्वाशु पापानि सुबहूनि च ॥

---

(१) नवीनव्रतग्रहणे त्वयं विशेषः— ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीरामप्रीत्यर्थमद्यारभ्य यावज्जीवं रामनवमीव्रतं करिष्ये ।

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
निर्विघ्नं सिद्धिमायातु त्वत्प्रसादात्सुरेश्वर ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे मृतो ह्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥
इति व्रतं स्वीकुर्यात्

अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्त्यपि ।

इति भूमौ जलमुत्सृजेत् । ततः पीठपूजां कुर्यात् । ॐ विमलायै नमः ॐ उत्कर्षिण्यै नमः ॐ ज्ञानायै नमः ॐ क्रियायै नमः ॐ योगायै नमः ॐ सत्यायै नमः ॐ प्रसिद्ध्यै नमः ॐ प्रकृत्यै नमः ॐ अनुग्रहायै नमः मध्ये ॐ नमो भगवते सकलशक्तियुक्ताय अनन्ताय संयोगपीठात्मने नमः इति पीठं संपूज्य शक्त्यनुसारेण निर्मापितां सौवर्णीं राजतीं वा प्रतिमां कृत्वाऽग्न्युत्तारणपूर्वकं "एतन्ते" 'मनोजूतिः' इति मन्त्राभ्यां संस्थाप्य कपोलौ स्पृष्ट्वा मूलमन्त्रं प्रणवादिचतुर्थ्यन्तं 'ॐ रामाय नमः' इति 'रामनामाय देव त्वं संख्यायै स्वाहा' इति च मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात् ।

ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि जगत्सृष्टिः प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं प्राणप्रतिष्ठापने विनियोगः । प्रतिमायाः शिरसि हृदये च दक्षिणं करं दत्त्वा जपेत्—ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं श्रीरामदेवस्य प्राणाः जीवः सर्वेन्द्रियाणि च इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति(१) । ततो ध्यानम्—

कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् ।
दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ॥
पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् ।

(१) अयं प्राणप्रतिष्ठाप्रकारो विशेषमूर्त्यादिनिर्माणे बोध्यः । अन्यत्र "एतन्ते" "मनोजूतिः" इतिसूर्यारुणसंवादोक्तमन्त्राभ्यां प्राणप्रतिष्ठासमाचारः पर्वतीयेषु दृश्यते । दाक्षिणात्यकातीयेषु तु मनोजूतिरित्येक एव मन्त्रः प्राणप्रतिष्ठायां विनियुक्तो दृश्यते । जलाग्न्यादौ तु प्राणप्रतिष्ठां विनापि सर्वेषां देवानां पूजनं भवतीत्यन्यत्र स्पष्टम् । एवं शालग्रामशिलादावपि बोध्यम् ।

पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् ।

शालग्रामपक्षे शिलां तत्र पीठे निधाय ध्यायेत् । नात्र प्राणप्रतिष्ठाद्युपयोगः । ॐ अतसीपुष्पनीलं पीतवाससं सौदामिनीनिभजानकीवीक्षणपरम् । सौमित्र्यङ्गदादिसेवितपादमग्रेस्थितवायुसूनुं सुग्रीवविभीषणादिभिर्गीयमानशतं धनुर्बाणपाणिं मुकुटाङ्गदधरं मुक्तादामविभूषितं श्रीरामं शान्ताकारमिति च ध्यायेत् । आवाहनम्(१)—ॐ सहस्रशीर्षा०

आवाहयामि विश्वेशं जानकीवल्लभं विभुम् ।
कौसल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम् ॥

ततः संनिधापनम्—

श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम ।
जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा ॥
रामभद्र महेष्वास रावणान्तक राघव ।
यावत्पूजां समाप्येऽहं तावत्त्वं सन्निधौ भव ॥

संमुखीकरणम्—

रघुनायक राजर्षे नमो राजीवलोचन ।
रघुनन्दन मे देव श्रीरामाभिमुखो भव ॥

आसनम्—ॐ पुरुष एवेदँ०

राजाधिराज राजेन्द्र रामचन्द्र महीपते ।
रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ॥

पाद्यम्--ॐ एतावानस्य०

---

(१) शालग्रामादौ सर्वदा देवसान्निध्येऽपि स्वोन्मुखीकरणार्थमावाहनर्चः पाठः कर्त्तव्यः । एवं पूजासम्पूर्त्यर्थमुद्वासनर्चः पाठः कर्तव्य इति बोध्यम् ।

त्रैलोक्यपावनानन्त नमस्ते रघुनायक।
पाद्यं गृहाण राजर्षे नमो राजीवलोचन॥

अर्घ्यम्—ॐ त्रिपादूर्ध्व०

परिपूर्णपरानन्द नमो रामाय वेधसे।
गृहाणार्घं मया दत्तं कृष्ण विष्णो जनार्दन॥

आचमनम्—ॐ ततो विराड०

नमः सत्याय शुद्धाय नित्याय ज्ञानरूपिणे।
गृहाणाचमनं नाथ सर्वलोकैकनायक॥

मधुपर्कः—

ॐ नमः श्रीवासुदेवाय तत्त्वज्ञानस्वरूपिणे।
मधुपर्कं गृहाणेमं जानकीपतये नमः॥

ततः पञ्चामृतस्नानम्। तत्र प्रथमं पयःस्नानम्—ॐ पयः पृथिव्यां०—

कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम्।
पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम्॥

दधिस्नानं—ॐ दधिक्राव्णो०

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्।
दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्॥

घृतस्नानं—ॐ घृतवती०

नवनीतसमुत्पन्नं सर्वसन्तोषकारकम्।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्॥

मधुस्नानं—ॐ मधुवाता०

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु।
तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥

शर्करास्नानं—ॐ आप्यायस्व०

इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका।

मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥
उद्वर्तनस्नानम्--ॐ गन्धस्ते सोम०
नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ।
उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥
गन्धोदकस्नानम्—ॐ गन्धद्वारां०
मलयाचलसंभूतं चन्दनागरुसम्भवम् ।
चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥
शुद्धोदकस्नानम्--ॐ तस्माद्यज्ञात्सर्वहुतः सं०
ब्रह्माण्डोदरमध्यस्थैस्तीर्थतोयै रघूत्तम ।
त्वां स्नापयाम्यहं भक्त्या तद् गृहाण जनार्दन ॥

ततः पञ्चोपचारपूजाम् 'ॐ रामाय नमः' इति कृत्वाऽभिषेकार्थं निर्माल्यं विसृज्य स्नापनधारापात्रे गन्धयवाक्षतपुष्पाणि समर्प्याभिषेकं कुर्यात् । देवे आसनार्थे पूजनार्थे च तुलसीदलं समर्पयेत् । ॐ सहस्रशीर्षा० १६ ॐ पयः पृथिव्यां० ॐ विष्णो रराटमसि० ॐ इदं विष्णु० ॐ द्यौः शान्तिरन्त० ॐ सर्वेषां वाऽएष वेदाना ँ रसो० ॐ अमृताभिषेकोऽस्तु । तदन्ते ॐ केशवाय नमः स्वाहा ॐ नारायणाय नमः स्वाहा ॐ माधवाय नमः स्वाहा इति आचमनं दद्यात् ।
वस्त्रम्--ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः०
तप्तकाञ्चनसंकाशं पीताम्बरमिदं हरे ।
संगृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते ॥
वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतम्—ॐ तस्मादश्वाऽअजायन्त०
श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनन्दन ॥
यज्ञोपवीताङ्गमाचमनीयं० ।

चन्दनम्—ॐ तं यज्ञं बर्हिषि०

कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा।
तुभ्यं दास्यामि राजेन्द्र श्रीराम स्वीकुरु प्रभो॥

यवाक्षतान—ॐ अक्षन्नमी०

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः।
मया निवेदिता भक्त्या गृहाण परमेश्वर॥

पुष्पाणि—ॐ यत्पुरुषं व्यदधुः०

तुलसीकुन्दमन्दारजातीपुन्नागचम्पकैः।
कदम्बकरवीरैश्च कुसुमैः शतपत्रकैः॥
नीलाम्बुजैर्बिल्वपत्रैरर्चयेद्राघवं विभुम्।
पूजयिष्याम्यहं भक्त्या संगृहाण जनार्दन॥

अथाङ्गपूजा—श्रीरामचन्द्राय नमः पादौ पूजयामि। राजीवलोचनाय नमः गुल्फौ०। रावणान्तकाय नमः जानुनी०। वाचस्पतये नमः ऊरू०। विश्वरूपाय नमः जङ्घे०। लक्ष्मणाग्रजाय नमः कटिं०। विश्वमूर्तये नमः मेढ्रं०। विश्वामित्रप्रियाय नमः नाभिं०। परमात्मने नमः हृदयं०। श्रीकण्ठाय नमः कण्ठं०। सर्वास्त्रधारिणे नमः बाहू०। रघूद्वहाय नमः मुखं०। पद्मनाभाय नमः जिह्वां०। दामोदराय नमः दन्तान्०। सीतापतये नमः ललाटं०। ज्ञानगम्याय नमः शिरः०। सर्वात्मने नमः सर्वाङ्गं पूजयामि।

अथावरणपूजा—ॐ हनुमते नमः। ॐ सुग्रीवाय नमः ॐ भरताय नमः ॐ विभीषणाय नमः। ॐ लक्ष्मणाय नमः ॐ अङ्गदाय नमः ॐ शत्रुघ्नाय नमः ॐ जाम्बवते नमः ॐ धृष्टये नमःॐ जयन्ताय नमः ॐ विजयाय नमः ॐ सुराष्ट्राय नमः ॐ राष्ट्रवर्धनाय नमः ॐ अकोपाय नमः ॐ धर्मपालाय नमः ॐ सुमन्त्राय नमः ॐ इन्द्राय नमः ॐ अग्नये नमः ॐ यमाय

नमः ॐ निर्ऋतये नमः ॐ वरुणाय नमः ॐ वायवे नमः ॐ कुबेराय नमः ॐ ईशानाय नमः ॐ ब्रह्मणे नमः ॐ अनन्ताय नमः ॐ वज्राय नमः ॐ शक्तये नमः ॐ कालदण्डाय नमः ॐ खड्गाय नमः ॐ पाशाय नमः ॐ अङ्कुशाय नमः ॐ गदायै नमः ॐ त्रिशूलाय नमः ॐ चक्राय नमः सर्वावरणपूजां समर्पयामि । धूपः-ॐ **ब्राह्मणोऽस्य मुख०**

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
रामचन्द्र महीपाल धूपोऽयं प्रतिगृह्यताम् ॥

दीपः-ॐ **चन्द्रमा मनसो जात०**

ज्योतिषां पतये तुभ्यं नमो रामाय वेधसे ।
गृहाण दीपकं चैव त्रैलोक्यतिमिरापहम् ॥

नैवेद्यं सम्प्रोक्ष्य तदुपरि तुलसीदलं दत्त्वा ॐ **नाभ्या आसीद०**

इदं दिव्यान्नममृतं रसैः षड्भिः समन्वितम् ।
रामचन्द्रेश नैवेद्यं सीतेश प्रतिगृह्यताम् ॥

ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा ।

मध्येपानीयम्—

नमस्ते देव देवेश सर्वतृप्तिकरं परम् ।
अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥

ततः क्षणं ध्यात्वा जपं विधाय 'गुह्याति' इति समर्प्य नैवेद्यपात्राण्युत्थाप्य मध्ये किञ्चित्पार्षदेभ्यो दद्यात्—

विष्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः ।
महाविष्णुप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥

उत्तरापोशानं० हस्तप्रक्षालनं० मुखप्रक्षालनं० करोद्वर्तनार्थे

चन्दनं०। ताम्बूलम्—ॐ यत्पुरुषेण हविषा०

नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम्।
ताम्बूलं गृह्यतां राम कर्पूरादिसमन्वितम्॥

फलानि—ॐ याः फलिनीर्या ऽअफला०

इदं फलं मया देव स्थापितं पुरतस्तव।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥

दक्षिणा—ॐ हिरण्यगर्भः समवर्त्तताग्रे०

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥

नीराजनम्—ॐ अग्निर्ज्योतिः०

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।
आरार्तिकमिदं देव गृहाण मम सिद्धये॥
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च।
त्वमेव सर्वज्योतींषि आरार्तिः प्रतिगृह्यताम्॥

ॐ इदं हविः प्रजननम्मे ऽ अस्तु दशवीरꣳ सर्व्वगणꣳ स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्न्यभयसनि। अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्त॥ (य० सं० १९-४८)

कर्पूरारार्तिकम्—

कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम्।
आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव॥

प्रदक्षिणा—ॐ सप्तास्यासन्परिधयः०

यानि कानि च पापानि जन्मान्तरकृतानि वै।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे॥

अत्र चतस्रः प्रदक्षिणाः कार्याः। मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त०

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥

प्रतिमापक्षे—ॐ विष्णुः३ अद्येह अमुकोऽहं कृतसंकल्पसिद्ध्यर्थं रामनवमीव्रताङ्गसपरिवारश्रीरामचन्द्रपूजायाः साङ्गतासिद्ध्यर्थमिमां सुपूजितां सौवर्णी राजतीं वा श्रीरामप्रतिमामाचार्याय अमुकगोत्राय अमुकशर्मणे दास्ये इति संकल्प्य आचार्यं संपूज्य—

इमां स्वर्णमयीं रामप्रतिमां समलङ्कृताम् ।
चित्रवस्त्रयुगच्छन्नां रामाहं राघवाय ते ॥
श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥

इति मन्त्रेण आचार्याय प्रतिमां दद्यात् ।

ततः श्रीरामचन्द्रस्य पूजायाः कथाश्रवणस्य च साङ्गतासिद्ध्यर्थं सिद्धान्नेनामान्नेन वा यथाशक्ति अमुकसंख्याकान् ब्राह्मणान् भोजयिष्ये । तथा इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्योऽन्येभ्यश्च विभज्य दास्ये ।

यस्य स्मृत्या च नामोक्त्या व्रतपूजाक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

इति संक्षिप्तश्रीरामनवमीव्रतपूजाप्रयोगः । विशेषस्तु व्रतोद्यापनप्रयोगावसरे प्रदर्शयिष्यते ।

**अथ मेषसंक्रमणशान्तिः ।** यजमानः प्रातर्नित्यकर्म समाप्य शुभासने उपविश्य दीपं प्रज्वलय्य आचम्य शान्तिपाठं कृत्वा यथाविधि गणेशं संपूज्य प्रधानसंकल्पं कुर्यात् । अद्येह अमुकोऽहं मम जन्मनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितसर्वानिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं रुद्रया-

मलोक्तप्रकारेण मेषसंक्रमणशान्तिं करिष्ये इति संकल्प्य तत्पूर्वाङ्गत्वेन आचार्यब्रह्मणोः पूजनपूर्वकं वरणं करिष्ये इति संकल्प्य आचार्यं गन्धादिभिः संपूज्य करिष्यमाणमेषसंक्रमणशान्तिकर्मणि आचार्यत्वेन त्वामहं वृणे । वृतोऽस्मि इति प्रत्युक्तिः। 'आचार्यस्तु यथा स्वर्गे' इति प्रार्थयेत्। ततो ब्रह्माणं पूर्ववद् वृत्वा 'यथा चतुर्मुख' इति प्रार्थयेत्। तत आचार्यः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य ईशाने कलशविधिना कलशं संस्थाप्य तत्र यथाविधि ग्रहानावाह्य संपूज्य रक्षां विधाय कलशे धृत्वा ग्रहोत्तरतो दध्यक्षतचन्दनचर्चितं कलशं प्रधानदेवतास्थापनार्थं संस्थाप्य तदुपरि एकं ताम्रादिपात्रं निधाय तत्र 'हिमस्य त्वा' इत्यग्न्युत्तारणपूर्वकं पञ्चामृतस्नापितां सौवर्णीं राजतीं वा माधवप्रतिमां संस्थाप्य 'एतन्ते' 'मनोजूतिः' इति प्रतिष्ठाप्य अद्य यजमानस्य जन्मनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितसर्वारिष्टनिवृत्त्यर्थं सुवर्णप्रतिमायां माधवस्य यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य 'अग्निर्मूर्धा' इति मन्त्रेण 'माधवाय नमः' इति च श्वेतगन्धपुष्पाक्षतैः पूजयेत् । इत्थं नीराजनान्तं संपूज्य

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धित नमस्तेऽस्तु त्राहि मां शरणागतम् ॥

इति प्रार्थयेत्। ततो यजमानः अद्येह० अमुकोऽहं निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितसर्वारिष्टनिवृत्त्यर्थं शुभफलप्राप्त्यर्थं मध्वाज्यशर्कराद्रव्यैर्यक्ष्ये। तत्र प्रजापतिम् इन्द्रम् अग्निं सोममाज्येन माधवमष्टोत्तरशतसंख्ययाऽष्टाविंशतिसंख्यया वा मध्वाज्यशर्कराद्रव्यैरग्निं स्विष्टकृतं मध्वादिद्रव्यैरग्निं वायुं सूर्यमग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतस्स्वर्कान् वरुणं प्रजापतिं च

प्रत्येकमाज्येनाहं यक्ष्ये। एतद्धोमद्रव्यम् आघाराज्यभागदेवताभ्यो माधवाय अग्नये स्विष्टकृते सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये च मया परित्यक्तम् ॐ तत्सत् यथादैवतमस्तु न मम इति द्रव्यत्यागं कुर्यात्। तत आचार्यः तारणनामानमग्निम् 'एतन्ते' 'मनोजूतिः' इति प्रतिष्ठाप्य 'चत्वारि शृङ्गा' इति ध्यात्वा 'अग्ने नय' इति संपूज्य जिव्हापूजनं रेखापूजनं च कृत्वा मनसा प्रजापतिं ध्यात्वा ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम। ॐ इन्द्राय स्वाहा, इदमिन्द्राय०। ॐ अग्नये स्वाहा, इदमग्नये०। ॐ सोमाय स्वाहा, इदं सोमाय०। ततो मध्वाज्यशर्कराभिरष्टोत्तरशतसंख्यया ऽष्टाविंशतिसंख्यया वा प्रधानहोमं कुर्यात्। 'महाँ इन्द्र' इति परमेष्ठी ऋषिः, जगती छन्दः, इन्द्रो देवता, होमे विनियोगः-

"ॐ महाँ इन्द्रो वज्रहस्तः षोडशी शर्म यच्छतु। हन्तु पाप्मानं यो ऽस्मान् द्वेष्टि उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा स्वाहा"

इदं माधवाय इति जुहुयात्।

ततः ॐ अग्नये स्विष्टकृते स्वाहा०। ॐ अग्नये स्वाहा० ॐ वायवे स्वाहा० ॐ सूर्याय स्वाहा० 'त्वन्नो अग्ने वरुणस्य विद्वान्०' 'स त्वन्नो अग्ने वमो भवो०' 'अयाश्चाग्ने०' 'ये ते शतं०' 'उदुत्तमं वरुण०' ॐ प्रजापतये स्वाहा० इति नवाहुतीर्हुत्वा संस्रवप्राशनादि कुर्यात्। ततो यजमानोऽमुकोऽहं मेषसंक्रमणशान्तिकर्मणः अपूर्णपूरणार्थमिदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं संप्रददे। 'अक्रन् कर्म' इति मन्त्रपाठः। शताधिकहोमे पूर्णाहुतिं च कुर्यात्। ततो यजमान उत्तराङ्गपूजनं कृत्वाऽमुकोऽहं निजनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितसर्वारिष्टनिवृत्त्यर्थं शुभफलावाप्तये रुद्रयामलोक्तप्रकारेण कृतस्य मेषसंक्रमणशान्तिकर्मणः साङ्गतासिद्ध्यर्थम् इदं

सुवर्णम् इमां सौवर्णीं माधवप्रतिमां च माधवप्रीतये आचार्याय तुभ्यं संप्रददे । ॐ तत्सत् न मम । ततो भूयसीं कुर्यात् । रक्षाबन्धनादि च कारयेत् ।

अथ नृसिंहजयन्तीव्रतम् । तद्विधिर्हेमाद्रौ नृसिंहपुराणे--

ततो मध्याह्नवेलायां नद्यादौ विमले जले ।
गृहे वा देवखाते वा तडागे विमले जले ॥
वैदिकेन च मन्त्रेण स्नानं कृत्वा विचक्षणः ।
मृत्तिकागोमयेनैव तथा धात्रीफलेन च ॥
तिलैश्च सर्वपापघ्नैः स्नानं कृत्वा महात्मभिः ।
परिधाय शुचिर्वासो नित्यकर्म समाचरेत् ॥
ततो गृहे समागत्य स्मरन् मां भक्तियोगतः ।
गोमयेन प्रलिप्याथ कुर्यादष्टदलं शुभम् ॥
कलशं तत्र संस्थाप्य ताम्रं रत्नसमान्वितम् ।
तस्योपरि न्यसेत्पात्रं वंशजं व्रीहिपूरितम् ॥
हैमी तत्र च मन्मूर्तिः स्थाप्या लक्ष्म्यास्तथैव च ।
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
यथाशक्ति तथा कार्या वित्तशाठ्यविवर्जितः ।
पञ्चामृतेन संस्नाप्य पूजनं तु समाचरेत् ॥
ततो ब्राह्मणमाहूय तमाचार्यमलोलुपम् ।
सदाचारसमायुक्तं शान्तं दान्तं जितेन्द्रियम् ॥
तेनैव कारयेत्पूजां दृष्ट्वा शास्त्रानुसारतः ।
आचार्यवचनाद्धीमान् पूजां कुर्याद् यथाविधि ॥
मण्डपं कारयेत्तत्र पुष्पस्तबकशोभितम् ।
ऋतुकालोद्भवैः पुष्पैः पूजयेत्स्वस्थमानसः ॥
उपचारैः षोडशभिर्मन्त्रैर्वेदोद्भवैस्तथा ।
ततः पौराणिकैर्मन्त्रैः पूजनीयो यथाविधि ॥

रात्रौ जागरणं कुर्याद्गीतवादित्रनिःस्वनैः ।
पुराणश्रवणाद्यैश्च श्रोतव्याश्च शुभाः कथाः ॥
ततः प्रभातसमये स्नानं कृत्वा जितेन्द्रियः ।
पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः ॥
वैष्णवान् प्रजपेन्मन्त्रान्मदग्रे स्वस्थमानसः ।
ततो दानानि देयानि वक्ष्यमाणानि वाऽनघ ॥
पात्रेभ्यस्तु द्विजेभ्यो हि लोकदर्पजिगीषया ।
सिंहः स्वर्णमयो देयो मम सन्तोषकारकः ॥
ब्राह्मणान् भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ।
मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे ।
तांस्त्वमुद्धर देवेश दुस्तराद्भवसागरात् ॥
पातकार्णवमग्नस्य व्याधिदुःखाम्बुवासिनः ।
तीव्रैस्तु परिभूतस्य मोहदुःखगतस्य मे ॥
करावलम्बनं देहि शेषशायिन् जगत्पते ।
श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ॥
क्षीराम्बुनिधिवासिंस्त्वं चक्रपाणे जनार्दन ।
व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥
एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि ।
उपहारादिकं सर्वमाचार्याय निवेदयेत् ॥
दक्षिणाभिः सुसंतोष्य ब्राह्मणांस्तु विसर्जयेत् ।
मध्याह्ने तु समायुक्तो भुञ्जीत सह बन्धुभिः ॥ इति ।

**अथ नृसिंहपूजाप्रयोगः**—तत्र व्रतकर्ता निर्णीतायां श्रीनृसिंहचतुर्दश्यां प्रातः स्नानादि नित्यकृत्यं विधाय गोमयाद्युपलिप्तायां भूमौ दुकूलमालादिभिः सुशोभितं यागमण्डपं पूजासामग्रीं च संपाद्य नद्यादौ मध्याह्नस्नानादि विधाय स्वासने उपविश्य आचम्य जलपूर्णताम्रपात्रं करयोः कृत्वा श्रीनृ-

सिंहं ध्यायन् व्रतं संकल्पयेत्—ॐ विष्णुः ३ अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीनृसिंहदेवप्रीतये श्रीनृसिंहजयन्तीव्रतं करिष्ये(१) इति संकल्प्य

ॐ नृसिंह देवदेवेश तव जन्मदिने शुभे ।
उपवासं करिष्यामि सर्वभोगविवर्जितः ॥
उपोष्येऽहं नारसिंह भुक्तिमुक्तिफलप्रद ।
शरणं त्वां प्रपन्नोऽस्मि भक्तिं मे नृहरे दिश ॥
श्रीनृसिंह महोग्रस्त्वं दयां कृत्वा ममोपरि ।
अद्याहं ते विधास्यामि व्रतं निर्विघ्नतां नय ॥

इति पात्रस्थं जलं भूमौ क्षिपेत् । ततः (२)प्रदोषे स्नातः शुचिर्यागमण्डपसमीपमागत्य स्वासने उपविश्य पूर्ववद्दीपं प्रज्वाल्य आचम्य प्राणानायम्य अर्घ्यं संस्थाप्य द्वारपूजां कुर्यात् ॐ गङ्गायै नमः इति द्वारदक्षिणशाखायाम्, ॐ यमुनायै नमः द्वारवामशाखायाम्, ॐ देहल्यै नमः मध्ये, ॐ द्वारश्रियै नमः उपरि, ॐ रत्नमण्डपाय नमः मण्डपोपरि, ॐ वास्तु-

(१) नवीनव्रतग्रहणे त्वयं विशेषः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं सकलपापक्षयपूर्वकश्रुतिस्मृतिपुराणोक्तफलावाप्तये अद्यारभ्य शरीरावसानपर्यन्तं श्रीनृसिंहप्रीत्यर्थं नृसिंहचतुर्दशीव्रतं करिष्ये ।

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
निर्विघ्नं सिद्धिमायातु श्रीनृसिंह नमोऽस्तु ते ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे मृतो ह्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥
इति व्रतं स्वीकुर्यात् ।

(२)वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।
अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ॥

इति टोडरानन्दे स्कान्दवचनात्प्रदोषसमये नृसिंहावतारोक्तेः प्रदोषपूजनमुक्तम् ।

पुरुषाय नमः मध्ये, ॐ विष्णवे नमः सर्वादिक्षु। ततः स्वस्तिवाचनं शान्तिपाठं कृत्वा सूर्यायार्घ्यं दत्त्वा प्रणवादिनमोन्तैर्नाममन्त्रैः पूर्वाद्यष्टदिक्षु इन्द्रादिलोकपालान् पुष्पादिभिः सम्पूज्य ॐ वेदिकायै नमः इति वेदिकामध्यं सम्पूज्य दक्षिणे—ॐ गणपतये नमः, वामे—ॐ गुरुभ्यो नमः, मध्ये—ॐ श्रीनृसिंहाय नमः इति प्रणमेत्। ततो यथाशक्ति भूतोत्सादनमासनविधिं च कृत्वा विशेषार्घ्यं संस्थाप्य तज्जलेन पूजासामग्रीमात्मानं च संप्रोक्ष्य पूजासङ्कल्पं कुर्यात्। ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे उत्तरायणे वसन्ततौ वैशाखमासे शुक्लपक्षे श्रीनृसिंहचतुर्दश्यां तिथौ अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीनृसिंहचतुर्दशीव्रताङ्गत्वेन सुवर्णप्रतिमायां शालग्रामशिलायां वा श्रीनृसिंहरूपिणो विष्णोः षोडशोपचारैः पूजनं करिष्ये। प्रतिमापक्षे 'एतन्ते' 'मनोजूतिः' इति मन्त्रान्ते—ॐ भूर्भुवःस्वःलक्ष्मीसहितनृसिंह इहागच्छ इह तिष्ठ इति प्रतिमां प्रतिष्ठाप्य शालग्रामपक्षे तां शिलां पीठे संस्थाप्य ध्यायेत्—

ॐ स्मृत्वेत्थं नारसिंहं भ्रुकुटितमुखं रक्तनेत्राधरोष्ठं
तेजोभिः प्रज्वलन्तं हुतवहसदृशं दुर्निरीक्ष्यं सुराद्यैः।
भिन्नो येनोग्रनखाग्रैर्गजमदगणितैर्दानवेन्द्रो हिरण्यः
सोऽयं नः पातु नित्यं त्रिभुवनविजयी सिंहरूपेण विष्णुः॥

आवाहनम्-ॐ सहस्रशीर्षा०—

आगच्छागच्छ देवेश तेजोराशे जगत्पते।
क्रियमाणामिमां पूजां गृहाण सुरसत्तम॥

आसनम्-ॐ पुरुष एवेद१०—

नानारत्नसमायुक्तं कार्तस्वरविभूषितम्।
आसनं देवदेवेश गृहाण पुरुषोत्तम॥

पाद्यम्-ॐ एतावानस्य०—

गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थयता हृतम्।

तोयमेतत्सुदुःस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥

अर्घ्यम्–ॐ त्रिपादूर्ध्व०—

नमस्ते देवदेवेश नमस्ते नृहरे विभो ।
नमस्ते कमलाकान्त गृहाणार्घ्यं नमोऽस्तु ते ॥

आचमनीयम्–ॐ ततो विराडजा०—

कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यतां हृषीकेश मया दत्तं हि भक्तितः ॥

स्नानम्–ॐ तस्माद्यज्ञात् सर्वहुतः सं०—

गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थयता हृतम् ।
तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥

पञ्चामृतस्नानम्–ॐ पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥
( य० सं० ३४-११ )

पयो दधि घृतं चैव मधु शर्करयाऽन्वितम् ।
पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥

ततः स्नानं० । स्नानाङ्गमाचमनीयं० । ॐ वस्त्रम्–तस्माद्यज्ञात्सर्वहुत ऋचः०—

सर्वभूषादिके सौम्ये लोकलज्जानिवारके ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥

वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतम्–ॐ तस्मादश्वा०—

नारसिंह नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥

यज्ञोपवीताङ्गमाचमनीयं० ।

चन्दनम्–ॐ तं यज्ञं०—

चन्दनं शीतलं दिव्यं कस्तुरीकुङ्कुमान्वितम् ।
ददामि तव तुष्टयर्थं नृसिंह परमेश्वर ॥

यवाक्षतान्० । पुष्पाणि–ॐ यत्पुरुषं०—

कालोद्भवैः सुपुष्पैस्तु तुलस्यादिभिरेव च ।
पूजयामि नृसिंह त्वां लक्ष्म्या सह नमोऽस्तु ते ॥

ततो गन्धयवाक्षतपुष्पैः प्रत्येकं द्वादशनामभिः पूजयेत्–ॐ केशवाय नमः १, ॐ नारायणाय० २, ॐ माधवाय० ३, ॐ गोविन्दाय० ४, ॐ विष्णवे० ५, ॐ मधुसूदनाय० ६, ॐ त्रिविक्रमाय० ७, ॐ वामनाय० ८, ॐ श्रीधराय० ९, ॐ हृषीकेशाय १०, ॐ पद्मनाभाय० ११, ॐ दामोदराय० १२ । अथावरण० पूजा—तत्र मध्ये कर्णिकायां—ॐ ह्रौं

तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥

ह्रौं ॐ पुष्पाञ्जलिं समर्पयेत् । ततः ॐ इन्द्राय नमः, ॐ अग्नये० ॐ यमाय० ॐ निर्ऋतये० ॐ वरुणाय० ॐ वायवे० ॐ कुबेराय० ॐ ईशानाय० ॐ ब्रह्मणे० ॐ अनन्ताय० ॐ सपरिच्छदायै वेदिकायै० ॐ कमलाय० ॐ सत्यादिपीठशक्तिभ्यो० ॐ वनमालायै० ॐ श्रीवत्साय० ॐ गरुत्मते० ॐ सरस्वत्यै० ॐ तुष्ट्यै० ॐ पुष्ट्यै ॐ प्रह्लादाय० ॐ साङ्गाय सायुधाय द्वात्रिंशद्व्यूहपरिवारसहिताय श्रीमहानारसिंहाय नमः सर्वावरणपूजां० । धूपः–ॐ ब्राह्मणोऽस्य०—

कालागुरुमयं धूपं सर्वदेवसुदुर्लभम् ।
निवेदये महाविष्णो सर्वकामसमृद्धये ॥

दीपः–ॐ चन्द्रमा मनसो०—

दीपः पापहरः प्रोक्तस्तमसो राशिनाशनः ।
दीपेन लभते तेजस्तस्माद्दीपं ददामि ते ॥

नैवेद्यम्–ॐ नाभ्या आसीद०—

नैवेद्यं सौख्यदं चारु भक्ष्यभोज्यसमन्वितम् ।

ददामि ते रमाकान्त सर्वपापक्षयंकर ॥

प्राणादिमुद्राः प्रदर्श्य नैवेद्यमध्येपानीयं० क्षणं ध्यात्वा गृह्णातीति समर्प्य नैवेद्यपात्रमुत्थाप्य मध्ये किञ्चिद् विश्वक्सेनाय नमः इत्युत्तरतो निवेदयेत् । ततः नैवेद्यान्तमाचनीयं० । फलानि–ॐ इदं फलं० ताम्बूलम्–ॐ यत्पुरुषेण०--

पूगीफलसमायुक्तं नागवल्लीदलं शुभम्।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

दक्षिणा–ॐ हिरण्यगर्भः समवर्तताग्रे० हिरण्य-गर्भगर्भस्थं० । ॐ भूर्भुवः स्वः साङ्गाय सपरिवाराय सवाहनाय सशक्तिकाय श्रीमते लक्ष्मीनृसिंहाय नमः सर्वोपचारान् समर्पयामि । आरार्तिकं–ॐ अन्तस्तेज० । प्रदक्षिणाः—ॐ सप्तास्यासन्०--यानि कानि च० । मन्त्र-पुष्पाञ्जलिः–ॐ यज्ञेन यज्ञमयजन्त०--

नानासुगन्धिपुष्पैश्च देशकालोद्भवैस्तथा ।
पुष्पाञ्जलिं मया दत्तं गृहाण नृहरे विभो ॥
ॐ राजाधिराजाय० ।
नमस्कारान्—
तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥

अथ विशेषार्घ्यदानम्–

फलपुष्पाम्बुसम्पूर्णं गृहीत्वा शङ्खमुत्तमम्।
जानुभ्यामवनीं गत्वा विशेषार्घ्यं निवेदयेत् ॥
"परित्राणाय साधूनां जातो विष्णुर्नृकेसरी ।
गृहाणत्वर्घ्यं मया दत्तं सलक्ष्मीर्नृहरिः स्वयम् ॥"

त्रीन् पञ्च वा अर्घ्यान् दद्यात् ।

प्रतिमापक्षे इमां सुपूजितां सौवर्णीं राजतीं वा श्रीलक्ष्मीनृसिं-हप्रतिमामाचार्याय अमुकशर्मणे दास्ये इति संकल्प्य आचार्य

सम्पूज्य—

ॐ नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते
अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः ॥

इति मन्त्रेणाचार्याय प्रतिमां दद्यात् ।

प्रार्थना-अनेनार्चाविधानेन सफलाः स्युर्मनोरथाः ॥

नारसिंह महाबाहो प्रह्लादभयनाशन ।
यथाभूतार्चनात्तत्र यथोक्तफलदो भव ॥
मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे ।
ते सर्वे पापनिर्मुक्ताः सन्तु नित्यं हि त्वत्पराः ॥

आवाहनं न जानामि० अन्यथा शरणं नास्ति० मन्त्रहीनं० ।
यस्य स्मृत्या० । प्रमादात्कुर्वतां० । ततो भूयसीसंकल्पः ।

अथ वटसावित्रीव्रतम्—तद्विधिः स्कन्दपुराणे—

अमायां च तथा ज्येष्ठे वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥
अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया ।
अयाचितं चतुर्दश्याममायां समुपोषणम् ॥
ज्येष्ठे मासि त्रयोदश्यां दन्तधावनपूर्वकम् ।
दन्तकाष्ठं समं शुभ्रं जातीयं चतुरङ्गुलम् ॥
तस्यापराह्णसमये नद्यादौ विमले जले ।
तिलामलककल्केन केशान् संशोध्य यत्नतः ॥
स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्चेद्धटूदकैः ।
सधवा विधवा वाऽपि सपुत्रा पुत्रवर्जिता ॥
भर्तुरायुर्विवृद्ध्यर्थं कुर्याद्व्रतमिदं शुभम् ।
ज्येष्ठे मासेऽसिते पक्षे त्रयोदश्यां पतिव्रता ॥
स्नात्वा चैव शुचिर्भूत्वा नियमं कारयेत्ततः ॥
त्रिरात्रं लङ्घयित्वा तु चतुर्थे दिवसे ग्रहम् ।

समर्प्यार्घ्यमरुन्धत्यै पूजयित्वा सुवासिनीः ॥
मिष्टान्नेन यथाशक्ति भोजयित्वा द्विजोत्तमान् ।
भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे ॥

तथा--

प्रत्यहं तु द्विजश्रेष्ठ कुर्यान्न्यग्रोधसेचनम् ।
कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च ।
प्रस्थकं सप्तधान्यं च तत्र संस्थापयेद् द्विज ॥
कारयेन्मुनिशार्दूल वस्त्रयुग्मेन वेष्टयेत् ।
तस्योपरि न्यसेद्देवीं सावित्रीं ब्रह्मणा सह ॥
सौवर्णीं मृन्मयीं वाऽपि स्वशक्त्या रौप्यनिर्मिताम् ।
यथोक्तलक्षणयुतां सत्यवद्ब्रह्मसंयुताम् ॥
पिठरं च कुठारं च कृत्वा रौप्यमयौ शुभौ ।
फलैः कालोद्भवैर्देवीं पूजयेद् ब्रह्मणः प्रियाम् ॥
हरिद्राकुङ्कुमाक्तैश्च कण्ठसूत्रैः समर्चयेत् ।
सतीनां कण्ठसूत्राणि त्रिदिनानि प्रदापयेत् ॥
पक्वान्नानि च देयानि द्विजेभ्यो नित्यमेव तु ।
माहात्म्यं चैव सावित्र्याः श्रोतव्यं मुनिसत्तम ॥
पुराणश्रवणं कार्यं सतीनां चरितं शुभम् ।
प्रार्थयेत्प्रार्थनामन्त्रैर्नित्यं सम्पूज्य तां सतीम् ॥
एवं दिनत्रयं नीत्वा चतुर्थेऽहनि सत्तम ।
मिथुनानि च संभोज्य षोडशानि द्विजोत्तम ॥
अर्चयित्वा तथाचार्यं सपत्नीकं सुगन्धतम् ।
तस्मै सङ्कल्पितं सर्वं हेमसावित्रिसंयुतम् ॥
दानमन्त्रेण दातव्यं द्विजमुख्याय सुव्रत ।
नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् ॥ इति ।

**अथवटसावित्रीपूजाप्रयोगः**—तत्र त्रयोदश्यां दन्तधा-

वनपूर्वकं विमले जले स्नात्वा नित्यकर्म समाप्य स्वासने उपविश्य आचम्य अर्घ्यं संस्थाप्य सङ्कल्पं(१) कुर्यात् । ॐ विष्णुः ३ अमुकदेवी अहं मम जन्मजन्मनि अवैधव्यप्राप्तये भर्तुश्चिरायुरारोग्यसम्पदादिप्राप्तिकामनया त्रिदिनात्मकं सावित्रीव्रतं करिष्ये इति संकल्प्य ताम्रपात्रस्थं जलं करयोः कृत्वा—

त्रिरात्रं लङ्घयित्वा तु चतुर्थदिवसे ह्यहम् ।
समर्प्यार्घ्यमरुन्धत्यै पूजयित्वा सुवासिनीः ॥
मिष्टान्नेन यथाशक्ति भोजयित्वा द्विजोत्तमान् ।
भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे ॥

इति मन्त्रेण भूमौ क्षिपेत् । ततो मध्याह्ने तिलामलकस्नानवटसेचननक्तव्रतादिनियमान्विता सावित्रीं ध्यायन्ती अहोरात्रं निनयेत् । चतुर्दश्यामयाचितं कृत्वा अमायामुपवसेत् ।

अत्र सर्वदेशेषु एकदिनोपवासात्मकं व्रतं स्त्रियोऽनुतिष्ठन्ति, समाचारात् । तत्रामायामेव प्रातर्दन्तधावनपूर्वकं प्रातःस्नानादि नित्यकृत्यं विधाय स्वासने उपविश्य आचम्य अर्घ्यं संस्थाप्य संकल्पं(१) कुर्यात् । ॐ विष्णुः ३ अमुकदेवी०……कामनया एकदिनोपवासात्मकं सावित्रीव्रतं करिष्ये इति ताम्रपात्रस्थं जलं करयोः कृत्वा—

अद्य स्थित्वा निराहारा(२) श्वोभूते परमेश्वरि ।
भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मेऽनघे ॥

इति मन्त्रेण भूमौ क्षिपेत् । ततस्तिलामलककल्कोदकेन मध्याह्नस्नानं विधाय स्वदेशस्थितविशेषवटवृक्षसमीपमागत्य पूर्वाभिमुखी उत्तराभिमुखी वा स्वासने उपविश्य आचम्य सङ्कल्पं कुर्यात् । ॐ विष्णुः ३ अमुकी देव्यहं मम

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।
(२) फलाहारपक्षे तु—'निराहारा'पदस्य स्थाने फलाहारापदमूह्यम् ।

भर्तुर्दीर्घायुरारोग्याद्यवाप्तये मम जन्मजन्मन्यवैधव्यप्राप्तये च सावित्रीव्रताङ्गं वटसेचनं पूजनं च करिष्ये इति सङ्कल्प्य वटमूलं बहूदकैः सिञ्चेत् ।

वटमूले स्थितो ब्रह्मा वटमध्ये जनार्दनः ।
वटाग्रे तु शिवं विद्यात्सावित्री व्रतसंयुता ॥
वट सिञ्चामि ते मूलं सलिलैरमृतोपमैः । इति ।

ततः पञ्चवारं सप्तवारं वा प्रदक्षिणं सूत्रेण वटवृक्षमावेष्टयेत् । ततः—

मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय वृक्षराज नमोऽस्तु ते ॥

इति प्रणमेत् ।

ततो गृहमागत्य गोमयोपलिप्तायां भूमौ लिखितपूजामण्डलोपरि चन्दनेन पीतपिष्टेन वा पद्मं विलिख्य तत्समीपे भित्तौ वा वटवृक्षं ब्रह्माणं सावित्रीं सत्यवन्तं सकुठारं काष्ठभारं धर्मराजं नारदं च विलिखेत् । प्रतिमापक्षे तु तत्स्थापनार्थं वस्त्रद्वययुतं वंशपात्रं समादाय तत्र प्रस्थमात्रां शुद्धां वालुकां प्रस्थमात्रं सप्तधान्यं च निधाय तत्र सौवर्णीं राजतीं वा ब्रह्मणा सह कारितां सावित्रीप्रतिमामग्न्युत्तारणपूर्वकम् "एतन्ते" "मनोजूतिः" इति मन्त्राभ्यां प्रतिष्ठाप्य पूजयेत् ।

एकदिनात्मकव्रतपक्षे तु साक्षाद्वटवृक्षमेव पूजयेत् । तथा च पूजास्थले उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेत्यादिगणेशाय पुष्पाञ्जलिं समर्प्य अर्घ्यं संस्थाप्य सूर्यायार्घ्यं दत्त्वा आत्मानं पूजासामग्रीं च सम्प्रोक्ष्य सङ्कल्पं कुर्यात् । ॐ विष्णुः ३ अद्येह अमुकनामसंवत्सरे उत्तरायणे ग्रीष्मर्तौ ज्येष्ठमासे कृष्णपक्षे वटसावित्र्यमावास्यायां शुभपुण्यतिथौ अमुकवासरे अमुकगोत्रा अमुकराशिः अमुकदेव्यहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये मम भर्तुरायुरारोग्याद्यभिवृद्धये आत्मनश्च जन्मजन्मन्य-

वैधव्यसिद्धये पुत्रपौत्राद्यभिवृद्धये च वटसाविसहितब्रह्मणा सह सावित्रीदेव्याः षोडशोपचारैः पूजनमहं करिष्ये । 'एतन्ते' 'मनोजूतिः' इति मन्त्रान्ते ॐ भूर्भुवःस्वः वटसावित्रि इहागच्छ इह तिष्ठ, ॐ भूर्भुवःस्वः ब्रह्मन् इहागच्छ इह तिष्ठ, सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ध्यायेत्—

पद्मपत्रासनस्थश्च ब्रह्मा ध्येयश्चतुर्मुखः ।
सावित्री तस्य ध्यातव्या वामाङ्गसङ्गता सती ॥
आदित्यवर्णा धर्मज्ञा साक्षमालाकरा तथा ।

आवाहनम्—

ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् ।
सत्यव्रतं धर्मराजं वटं चावाहयाम्यहम् ॥
ॐकारपूर्विके देवि वीणापुस्तकधारिणि ।
वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे ॥

आसनम्—

ब्रह्मणा सह सावित्रि सत्यवत्सहितेऽनघे ।
गृहाणासनकं हैमं धर्मराज सुरेश्वर ॥

ॐकारपूर्विके० । पाद्यम्—

गङ्गाजलं समानीतं पाद्यार्थं ब्रह्मणः प्रिये ।
भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यताम् ॥

ॐकारपूर्विके० । अर्घ्यम्—

गाङ्गं समाहृतं तोयं फलपुष्पसमन्वितम् ।
अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये ॥

ॐकारपूर्विके० । आचमनीयम्—

सलिलं सहकर्पूरं सुरभि स्वादु शीतलम् ।
ब्रह्मणा सह सावित्रि कुरुष्वाचमनीयकम् ॥

ॐकार० । पञ्चामृतस्नानम्—

पयो दधि घृतं चैव शर्करामधुसंयुतम् ।

पञ्चामृतेन स्नपनं क्रियतां परमेश्वरि ॥

ॐकार० । शुद्धोदकस्नानम्—

मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् ।

परिवारयुते देवि स्नानार्थं प्रतिगृह्यताम् ॥

ॐकार० । वस्त्रम्—

सूक्ष्मतन्तुमयं वस्त्रयुग्मं कार्पाससम्भवम् ।

सावित्रि सत्यवत्कान्ते भक्त्या दत्तं प्रगृह्यताम् ॥

ॐकार० । यज्ञोपवीतम्—

सावित्रि सत्यवत्कान्ते धर्मराज सुरेश्वर ।

वटेन ब्रह्मणा सार्धमुपवीतं प्रगृह्यताम् ॥

ॐकार० । मङ्गलाभरणानि—

भूषणानि च दिव्यानि मुक्ताहारयुतानि च ।

त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने ॥

ॐकार० । चन्दनम्—

कुङ्कुमागरुकर्पूरकस्तूरीरोचनायुतम् ।

चन्दनं ते मया दत्तं सावित्रि प्रतिगृह्यताम् ॥

ॐकार० । अक्षतान्—

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः ।

मया निवेदिता भक्त्या गृहाण परमेश्वरि ॥

ॐकार० । सौभाग्यद्रव्यम्—

हरिद्रा कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।

सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् ॥

ॐकार० । पुष्पाणि—

माल्यादीनि सुगन्धीनि मालत्यादिशुभानि च ।

मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥

ॐकार० ।

अथाङ्गपूजा—सावित्र्यै नमः पादौ पूजयामि । वट-

प्रियायै० जङ्घे० । कमलपत्राक्ष्यै० कटिं० । भूतधारिण्यै० उदरम्० । गायत्र्यै० कण्ठम्० । ब्रह्मणः प्रियायै० मुखं० । सौभाग्यदात्र्यै० शिरः० । अथ ब्रह्मसत्यव्रताङ्गपूजा-धात्रे० पादौ० । विधात्रे० जङ्घे० । स्रष्ट्रे० ऊरू० । प्रजापतये० मेढ्रं० । परमेष्ठिने० कटिं० । अग्निरूपाय० नाभिं० । पद्मनाभाय० हृदयम्० । वेधसे० बाहून्० । विधये० कण्ठं० । हिरण्यगर्भाय० मुखं० । ब्रह्मणे० शिरः० । विष्णवे० सर्वाङ्गम्० ।

धूपः—

देवद्रुमरसोद्भूतः कालागुरुसमन्वितः ।
आघ्रेयः सर्वदेवानां धूपः सावित्रि गृह्यताम् ॥

ॐकार० । दीपः—

चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ।
घृतवर्तिसमायुक्तं दीपं गृह्ण नमोऽस्तु ते ॥

ॐकार० । नैवेद्यम्—

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।
भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

ॐकार० । मध्येपानीयम्० । क्षणं ध्यात्वा गृह्णातीति समर्प्य नैवेद्यमुद्रास्य उत्तरापोशानम्० । हस्तप्रक्षालनम्० । मुखप्रक्षालनम्० । करोद्वर्तनार्थे चन्दनं० । पूगीफलं० । मुखवासार्थे ताम्बूलम्० । फलम्० इदं फलं० । दक्षिणाम्—हिरण्यगर्भ० ।

नीराजनम्—

नमो ब्रह्मण्यदेवी त्वं सततं ब्रह्मणः प्रिया ।
पञ्चार्तिक्यं मया दत्तं गृहाण सुरपूजिते ॥

ॐकार० । नमस्कारान्—

सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिया ।

पूजिता सिद्धिदैः सर्वैस्त्रिभिर्मुनिगणैस्तथा ॥
त्रिसन्ध्यं देवि भूतानां वन्दनीया सुशोभने ।
मया दत्ता च पूजेयं त्वं गृहाण नमोऽस्तु ते ॥

ॐकार० । प्रदक्षिणां-यानि कानि च० ॐकार० ।

मन्त्रपुष्पाञ्जलिः—

ॐकारपूर्विके देवि वीणापुस्तकधारिणि ।
वेदमातर्नमस्तुभ्यं सौभाग्यश्च प्रयच्छ मे ॥

अथार्घ्यदानम्—

ॐकारपूर्विके देवि सर्वदुःखनिवारिणि ।
वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे ॥

द्वितीयार्घ्यम्—

पतिव्रते महाभागे वह्नियाने शुचिस्मिते ।
दृढव्रते दृढमते भर्तुश्च प्रियवादिनि ॥

तृतीयार्घ्यं०—

अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते ।
पुत्रान् पौत्रांश्च सौख्यश्च गृहाणार्घ्यं नमोऽस्तु ते ॥

ततो ब्रह्मणे अर्घ्यं दद्यात्—

त्वया सृष्टं जगत्सर्वं सदेवासुरमानवम् ।
सत्यव्रतधरो देव ब्रह्मरूप नमोऽस्तु ते ॥

ततो यमाय०—

त्वं कर्मसाक्षी लोकानां शुभाशुभविवेचकः ।
गृहाणार्घ्यं धर्मराज वैवस्वत नमोऽस्तु ते ॥

प्रार्थना—

सावित्रि ब्रह्मगायत्री सर्वदा प्रियभाषिणी ।
तेन सत्येन मां पाहि दुःखसंसारसागरात् ॥
त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चन्द्रमण्डले ।

त्वमेव भूर्जगन्माता त्वमुद्धर वरानने ॥
सौभाग्यं कुलवृद्धिं च देहि त्वं मम सुव्रते ।
यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि ॥
भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ।
सावित्रि त्वं यथा देवि चतुर्वर्षशतायुनम् ॥
पतिं प्राप्ताऽसि गुणितं मम देवि तथा कुरु ।
अवियोगो यथा देव सावित्र्या सहितस्य ते ॥
अवियोगस्तथाऽस्माकं भूयाज्जन्मनि जन्मनि ।
कर्मसाक्षिन् जगत्पूज्य सर्वबन्धप्रशान्तये ॥
संवत्सरव्रतं सर्वं परिपूर्णं तदस्तु मे ॥

ततः ॐ विष्णुः ३ अमुकी देव्यहं श्रीवटसावित्री-व्रतपूजासाङ्गतासिद्ध्यर्थं वस्त्राद्युपेतं वंशपात्रनिहितं सौभाग्यद्रव्यं वायनत्वेन यथानामगोत्राय ब्राह्मणाय दास्ये ।

उपायनमिदं द्रव्यं व्रतसम्पूर्तिहेतवे ।
वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥

इति वायनदानम् । प्रतिमापक्षे— ॐ विष्णुः ३ अमुकी दे-व्यहं सर्वसौभाग्यसंपत्समृद्धये श्रीवटसावित्रीव्रतसाङ्गतासिद्ध-ये च इमां सुपूजितां सौवर्णीं प्रतिमां सोपस्करां ब्राह्मणाय दास्ये इति ब्राह्मणं सम्पूज्य दद्यात्—

सावित्रीयं मया दत्ता पूजिता विधिना सती ।
ब्रह्मणःप्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम् ॥

ब्राह्मणश्च—

मया गृहीता सावित्री त्वया दत्ता सुशोभना ।
यावच्चन्द्रश्च सूर्यश्च भर्त्रा त्वं सुखिनी भव ॥

इति वदेत् । ततः ब्राह्मणस्य सपत्नीकस्य प्रार्थनां कुर्यात्—

यन्मया कृतवैकल्पाद् व्रतेऽस्मिन दुराधिष्ठितम् ।

तत्सर्वं पूर्णतां यातु युवयोरर्चनेन तु ॥

दक्षिणासङ्कल्पं कृत्वा उपोषणेन अहोमात्रं निनयेत् । ततो नक्तमरुन्धत्यै अर्घ्यं दद्यात्--

अरुन्धति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे ।
अर्घ्यमेतन्मया दत्तं फलपुष्पसमन्वितम् ॥
पुत्रान्देहि सुखं देहि गृहाण प्रणतप्रिये । इति ।

निराहारव्रतवती तु नक्तकाले अरुन्धत्यै अर्घ्यं दत्त्वा सावित्रीमाहात्म्यश्रवणादिना रात्रिमतिवाह्य प्रातर्नित्यकृत्यान्ते वायनदानादिविधिमनुष्ठाय ब्राह्मणान् सुवासिनीश्च भोजयित्वा अच्छिद्रं वाचयित्वा स्वयं भुञ्जीत इति ।

अथ दशहराविधिर्भविष्ये काशीखण्डे च—

निशायां जागरं कृत्वा समुपोष्य च भक्तितः ।
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ॥
दशप्रसृतिकृष्णांश्च तिलान् सर्पिश्च वै जले ।
सक्तुपिण्डान् गुडपिण्डान् दद्याच्च दशसंख्यया ॥
ततो गङ्गातटे रम्ये हेम्ना रूप्येण वा तथा ।
गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ॥
संस्थाप्य पूजयेद्देवीं तदलाभे मृदाऽपि च ।
अथ तत्राप्यशक्तश्चेल्लिखेत् पिष्टेन वै भुवि ॥
वक्ष्यमाणेन मन्त्रेण कुर्यात्पूजां विशेषतः ।
पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दशसंख्यया ॥
तथा दीपैश्च ताम्बूलैः पूजयेच्छ्रद्धयाऽन्वितः ।
नारायणं महेशं च ब्रह्माणं भास्करं तथा ॥
भगीरथं च नृपतिं हिमवन्तं नगेश्वरम् ।
गन्धपुष्पादिभिः सम्यग्यथाशक्ति प्रपूजयेत् ॥
दशप्रस्थांस्तिलान्दद्याद्दशविप्रेभ्य एव च ।

दशप्रस्थान्यवान्दद्याद्दश दद्याच्च गास्तथा ॥
मत्स्यकच्छपमण्डूकमकरादिजलचरान् ।
हंसकारण्डवबकचक्राटिट्टिभसारसान् ॥
कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा ।
तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः ॥
गङ्गायां प्रक्षिपेदाज्यदीपांश्चैव प्रवाहयेत् ।
पुष्पाद्यैः पूजयेद्गङ्गां मन्त्रेणानेन भक्तितः ॥

ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै नमो नमः ।

इति मन्त्रं तु यो मर्त्यो दिने तस्मिन् दिवानिशम् ।
जपेत्पञ्चसहस्राणि दशधर्मफलं लभेत् ॥ इति ।

अथ दशहरापूजाप्रयोगः । तत्र कर्ता देशकालौ संकीर्त्य व्रतं(१) गृहीत्वा ॐ विष्णुः ३ अद्येहेत्यादि ममैतज्जन्मजन्मान्तरसंभूतदशविधपापनिरासत्रयस्त्रिंशच्छतपित्रुद्धारब्रह्मलोकावाप्त्यादिफलप्राप्त्यर्थं दशहरापर्वण्यस्यां महानद्यां स्नानं तीर्थपूजनं प्रतिमायां जाह्नवीपूजां तिलादिदानं मूलमन्त्रजपमाज्यहोमं च यथाशक्ति करिष्ये इति संकल्प्य यथाविधि स्नानं दशवारं कृत्वा वासःपरिधानादिपितृतर्पणान्तं नित्यकर्म विधाय सर्पिर्मिश्रान दशप्रसृतिकृष्णतिलान् तीर्थेऽञ्जलिना प्रक्षिप्य गुडमिश्रान् सक्तुपिण्डान् दश प्रक्षिपेत् । ततो गङ्गातटे ताम्रे मृन्मये वा स्थापितकलशे सुवर्णादिप्रतिमायां सपरिवारां गङ्गां पूजयेत् । तत्रादौ पूजासामग्रीं सम्पाद्य स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य गणेशाय गङ्गायै च पुष्पाञ्जलिं समर्प्य सूर्यायार्घ्यं दत्त्वा पुनरर्घ्यं संस्थाप्य संकल्पं कुर्यात् । ॐ विष्णुः ३ अमुकोऽहं कृतसङ्कल्पसिद्ध्यै दशपापहरायां दशम्यां पुण्यतिथौ सौवर्णप्रतिमायां रौप्यप्रतिमायां वा सपरि-

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।

धारायाः श्रीगङ्गादेव्याः षोडशोपचारैः पूजनं करिष्ये इति संकल्प्य "एतन्ते" "मनोजूतिः" इति प्रतिष्ठाप्य ध्यायेत्–

चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ।
पूर्णकुम्भासिताम्भोजवरदाभयसत्कराम् ॥
श्वेतपट्टपरीधानां मुक्तामणिविभूषिताम् ।
ततो ध्यायेत् सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां च वरदां करुणार्द्रहृदन्तराम् ॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यपूजितां गङ्गां पूजयेत्प्रयतः शुचिः ॥

ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै नमो नमः श्रीगङ्गामावाहयामि । ॐ नारायणाय नमः नारायणमावाहयामि । ॐ रुद्राय० रुद्रं० । ॐ ब्रह्मणे० ब्रह्माणं० । ॐ सूर्याय० सूर्यं० । ॐ भगीरथाय० भगीरथं० । ॐ हिमाचलाय० हिमाचलं० । एवमेव आसनादि पुष्पाञ्जल्यन्तं षोडशोपचारैः पूजयेत् । सर्वे उपचारा दशसंख्याका अपेक्षिताः । ततो मत्स्य कच्छपमण्डूकान् पूर्वं निर्मापितान् सम्पूज्य तीर्थे प्रवाहयेत् । दश दीपांश्च प्रवाहयेत् ।

जपहोमचिकीर्षायां पूर्वोक्तमूलमन्त्रस्य पञ्चसहस्रसंख्याकजपो दशांशेन होमश्च कार्यः, यथाशक्ति वा । तत्र दशहराव्रताङ्गत्वेन अमुकसंख्याकहोमं करिष्ये इति संकल्प्य स्थण्डिलेऽग्निं प्रतिष्ठाप्य ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कृत्वा द्रव्यदेवताभिध्यानं कुर्यात् । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन श्रीगङ्गाममुकसंख्ययाऽऽज्येन नारायणादिषड्देवताश्चैकैकया

आज्याहुत्या, शेषेण स्विष्टकृतमित्यादि ।

प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निधाय मनसा प्रजापतिं ध्यात्वा ॐ प्रजापतये स्वाहा इदं प्रजापतये नमम। ॐ इन्द्राय स्वाहा, इदं० । ॐ अग्नये स्वाहा, इदं० । ॐ सोमाय स्वाहा इदं० । ततः प्रधानगङ्गादिहोमं विधाय महाव्याहृत्यादिदशाहुतीर्जुहुयात्। होमसाङ्गतां च दद्यात् ।

ततो दश विप्रेभ्यः प्रत्येकं षोडशमुष्टितिलान् सदक्षिणान् दद्यात् । यवान यथाशक्ति गाश्च दद्यात् । अन्ते च दश ब्राह्मणान् दश सुवासिनीर्यथाशक्ति वा भोजयेत् । ततो देवतायतनेषु स्वगृहोदरे पत्रेषु वा मन्त्रान् विलिखेत्—

अगस्त्यश्च पुलस्त्यश्च वैशम्पायन एव च ।
जैमिनिश्च सुमन्तुश्च पञ्चैते वज्रवारकाः ॥
मुनेः कल्याणमित्रस्य जैमिनेश्चानुकीर्तनात् ।
विद्युदग्निभयं नास्ति लिखिते च गृहोदरे ॥
यत्रानपायी भगवान् हृद्यास्ते हरिरीश्वरः ।
भङ्गो भवति वज्रस्य तत्र शूलस्य का कथा ॥

अथ निर्जलैकादशीव्रतविधिः । मदनरत्ने स्कान्दे-

ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा ।
निर्जलं समुपोष्याऽत्र जलकुम्भान् सशर्करान् ॥
प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधौ ॥ इति ॥

निर्जलैकादशीव्रतपूजाप्रयोगः—तत्रैकादश्यां प्रातः कृतनित्यक्रियः जलपूर्णताम्रपात्रं करयोः कृत्वा—

करिष्याम्यद्य देवेश जलवर्जमुपोषणम् ।
भोक्ष्ये परेऽह्नि वैकुण्ठ ह्यन्नं वा तव वासरात् ॥

एकादश्यां निराहारो वर्जयिष्यामि वै जलम् ।
केशवप्रीणनार्थाय अन्यदाचमनादृते ॥

इति जलं भूमौ क्षिपेत्(१)। ततो विष्णुं षोडशोपचारैः पूजयेत् ।

**अथ चातुर्मास्यव्रतग्रहणविधिर्हेमाद्रौ भविष्ये—**

महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः ।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ॥
सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् ।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥
एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः ।
प्रभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तथा ॥
चतुरो वार्षिकान्मासान् देवस्योत्थापनावधि ।
इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ॥
गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ।
तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे मृतो ह्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥ इति ।

**अथ चातुर्मास्यव्रतग्रहणप्रयोगः—** शयन्येकादश्यामुपवासव्रती सामान्यैकादशीव्रतसर्वमनुष्ठाय सायं पूजायां कृतायां सोपस्करमञ्चके सुप्तां श्रीविष्णुप्रतिमां शालग्रामशिलां वा नानाविधोपचारैः सम्पूज्य प्रार्थयेत्—

त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत प्रसन्नो मे भवाच्युत ॥ इति ।

ततो देवस्याग्रे कृताञ्जलिःव्रतनियमनवाक्यं प्रभाषेत—

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।

चतुरो वार्षिकान् मासान्देवस्योत्थापनावधि ।
श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजे ॥

अथवा—

हविष्यान्नं भक्षयिष्ये देवाऽहं प्रीतये तव ।

अथवा--

वर्जयिष्ये गुडं देव मधुरस्वरसिद्धये ।

अथवा--

वर्जयिष्ये तैलमहं सुन्दराङ्गत्वसिद्धये ।

अथवा--

योगाभ्यासी भविष्यामि प्राप्तुं ब्रह्मपदं परम् ।

अथवा--

मौनव्रती भविष्यामि स्वाज्ञापालनसिद्धये ।

अथवा--

एकान्तरोपवासं च प्राप्तुं ब्रह्मपदं परम् ।

अथवा--

वृन्ताकादिनिषिद्धानि हरे सर्वाणि वर्जये ।

इत्येषां मध्ये यथारुचि प्रतिज्ञाय ततः—

इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते ॥
गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ।
तदा भवतु सम्पूर्णं प्रसादात्ते जनार्दन ॥

इति संप्रार्थ्य देवाय शङ्खेनार्घ्यं निवेदयेत् ।

अथ हरकालीव्रतपूजाविधिर्भविष्योत्तरपुराणे—

मिथुनान्ते कर्कटादौ सम्पूज्या शिववल्लभा ।

हरकाली जगन्माता पुष्पैर्घन्तूरकादिभिः॥
वीरभद्रमहाकालनन्दीश्वरविनायकाः।
मम प्रसादसुमुखा भवन्तु व्रतयोगतः॥
बीजाङ्कुरैः समभिपूज्य विरूढधान्यै-
र्देवीं हिमाद्रितनयां हरकालिकाख्याम्।
नैवेद्यजागरसमुद्धतगीतवाद्यैः
सम्प्राप्नुवन्ति मनुजाः सुचिरं सुखानि॥

अथ हरकालीपूजाप्रयोगः—तत्र मिथुनमासान्तदिवसात् प्राक् तारचन्द्राद्यानुकूल्यवशेन नवाह्निकं साप्ताहिकं वा यवादिबीजवापं मृत्तिकायुतवंशपात्रद्वयादौ विधाय विरूढसस्ये तत्र पात्रयुग्मे मासान्तदिवसे प्रातर्नित्यकृत्यं विधाय संकल्पं(१) कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि—श्रीहरकालीव्रतं करिष्ये। 'इदं व्रतम्' इति प्रार्थयेत्। ततः शुभे देशे सुनिर्मितां मृन्मयीं श्रीगौरीमहेश्वरप्रतिमां संस्थाप्य तदुपरि यथासम्भवं कदलीस्तम्भादिभिः पुष्पमण्डपिकां निर्माय पूजासामग्रीं च सम्पाद्यापराह्ने सायाह्ने वा पूजयेत्।

आसने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चैकेत्यादिना गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यं संस्थाप्य सूर्यायार्घ्यं दत्त्वा भूतानुत्सार्य विशेषार्घ्यं संस्थाप्य तज्जलेनात्मानं पूजासामग्रीं च सम्प्रोक्ष्य प्राणानायम्य सङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकगोत्रा अमुकराशिरमुकी देव्यहं पुत्रपौत्राद्यभिवृद्धिद्वारा सर्वसुखसौभाग्यसम्पत्समृद्धये श्रीहरकालीव्रतोत्सवे विरूढसस्यमध्यसंस्थापितायां मृन्मय्यां श्रीहरकालीप्रतिमायां श्रीहरकाल्याः षोडशोपचारैः पूजनं करिष्ये। "एतन्ते" "मनोजूतिः" इति प्रतिमां प्रतिष्ठाप्य ध्यायेत्—

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत्।

हरनामसमुत्पन्ने हरकालि हरप्रिये ।
सर्वदा सस्यमूर्तिस्थे प्रणतार्तिहरे नमः ॥

श्रीहरकाल्यै नमः आवाहनम्० आसनम्० पाद्यम्० अर्घ्यम्० आचमनीयम्० स्नानं० वस्त्रम्० उपवीतम्० गन्धम्० अक्षतान्० पुष्पाणि० धूपं० दीपं० नैवेद्यम्० फलं० ताम्बूलं० दक्षिणां० नीराजनम्० प्रदक्षिणाम्० नमस्कारं च तेनैव मन्त्रेण समर्प्य प्रार्थयेत्-

वीरभद्रमहाकालनन्दीश्वरविनायकाः ।
मम प्रसादसुमुखा भवन्तु व्रतयोगतः ॥

इति सम्प्रार्थ्य रात्रिं जागरणगीतवाद्याद्युत्सवेन नयेत् ।

परेद्युः प्रातःकाले कर्कसंक्रमादिने नित्यकृत्यं विधाय उत्तराङ्गत्वेन श्रीहरकालीं हरनामेत्यादि पूर्वोक्तेन मन्त्रेण पञ्चोपचारैः षोडशोपचारैर्वा सम्पूज्य वीरभद्रेत्यादिमन्त्रेण सम्प्रार्थ्य दक्षिणासङ्कल्पं कुर्यात्- ॐ विष्णुः ३ अद्येहेत्यादि अमुकयहं कृतसङ्कल्पासिद्धिद्वारा यथोक्तफलावाप्तये श्रीहरकालीप्रीतये कृतायाः पूजायाः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणाय दास्ये इति सङ्कल्प्य ब्राह्मणं सम्पूज्य दक्षिणां दत्त्वा तिलकाद्याशीर्ग्रहणान्ते 'हरनामसमुत्पन्ने' इति मन्त्रेण श्रीहरकालीं प्रणम्य विसर्जयेत्--

आर्चितासि मया भक्त्या गच्छ देवि सुरालयम् ।
मम दौर्भाग्यनाशाय पुनरागमनाय च ॥

इति विसृज्य ततो यथाचारमपेक्षितानि सस्यानि गृहीत्वा शेषं शुभजलाशये विसर्जयेत् ।

अथ नागपञ्चमीव्रतपूजाविधिः हेमाद्रौ भविष्ये—

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥
पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः ।

गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥

तथाऽन्यत्र—

शुक्लपक्षे श्रावणस्य पञ्चम्यां श्रद्धयाऽन्वितः ।
यस्त्वालिख्य नरो राजन् कृष्णपूर्वादिवर्णकैः ॥
पूजयेद्गन्धपुष्पैश्च सर्पिर्भिः फलपायसैः ।
पायसेन घृताक्तेन भोजयित्वा द्विजोत्तमान् ॥
नक्तं स्वयं समश्नीयाज्जितवाक् जितविग्रहः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आसप्तमात्कुलात्तस्य न भयं नागतो भवेत् ॥

अथ नागपूजाप्रयोगः—तत्र प्रातर्नित्यकृत्यान्ते पूर्ववद्व्रतं गृहीत्वा ॐ 'इदं व्रतं' इत्यादि पठित्वा जलं भूमौ(१) क्षिपेत् । ततो भित्त्यादौ द्वारमुभयतो वा यथाचारं गोमयेन हरिचन्दनादिवर्णैर्वाऽष्टनागान् विलिख्य सुलिप्तायां सुभूषितायां भूमौ दधिदूर्वाङ्कुरकुशसर्पिःफलपायसगन्धपुष्पाद्युपहारान् समाहृत्य स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सामान्यार्घ्यादिविशेषार्घ्यस्थापनान्ते सङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं यथोक्तफलावाप्तये मम कुले गृहे च नागभयशान्तयेऽनन्तादिनागानां प्रीतये नागपञ्चम्यां भित्तिलिखितनागानां षोडशोपचारैः पूजनं करिष्ये । ॐ 'एतन्ते' 'मनोजूतिः' इति ॐ भूर्भुवःस्वः अनन्तादयो नागाः इहागच्छत, इह तिष्ठत, सुप्रतिष्ठिता वरदा भवथ । अनन्ताद्यष्टनागेभ्यो नमः ध्यानं० आवाहनं० आसनं० पाद्यं० अर्घ्यं० आचमनं० स्नानं० वस्त्रं० यज्ञोपवीतं० गन्धं० अक्षतान्० पुष्पाणि० दधि० दूर्वाङ्कुरान्०

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।

सर्पिः० कुशान्० धूपं० दीपं० पायसादिनैवेद्यं० फलानि० ताम्बूलं० दक्षिणां० आरार्तिक्यं० प्रदक्षिणां० नमस्कारं च समर्प्य अनन्त १ वासुकि २ तक्षक ३ कर्कोटक ४ शङ्ख ५ कुलिक ६ पद्म ७ महापद्म ८ इत्यष्टमहानागकुलेभ्यो नमः पुष्पाञ्जलिं० । अन्ते ब्राह्मणेभ्यो भूयसीं दत्त्वा यथाशक्ति भोजयेत् ।

अथ सङ्कष्टचतुर्थीव्रतविधिः स्कान्दे—

चतुर्थ्यां प्रातरुत्थाय दन्तधावनपूर्वकम् ।
ग्राह्यं व्रतमिदं पुण्यं सङ्कष्टतरणं शुभम् ॥
कर्तव्यमिति सङ्कल्प्य व्रतेऽस्मिन् गणपं स्मरेत् ।
निराहारोऽस्मि देवेश यावच्चन्द्रोदयो भवेत् ॥
भोक्ष्यामि पूजयित्वा त्वां सङ्कष्टात्तारयस्व माम् ।
एवं सङ्कल्प्य भो मातः स्नात्वा कृष्णतिलैः शुभैः ॥
आह्निकं तु विधायैव पश्चात्पूज्यो गणाधिपः ।
त्रिभिर्माषैस्तदर्धेन तृतीयांशेन वा पुनः ॥
यथाशक्त्या तु वा हैमी प्रतिमा क्रियते मम ।
हेमाभावे तु रौप्यस्य ताम्रस्यापि यथासुखम् ॥
सर्वथैव दरिद्रेण कर्तव्या मृन्मयी शुभा ।
वित्तशाठ्यं न कर्तव्यं कृते कार्यं विनश्यति ॥
जलपूर्णं वस्त्रयुतं कुम्भं तस्याग्रतो न्यसेत् ।
पद्ममष्टदलं कार्यं गन्धपुष्पैः प्रपूजयेत् ॥
तत्र पूजा प्रकर्तव्या षोडशैरुपचारकैः ।
मोदकान् कारयेन्मातस्तिलजान् दश पार्वति ॥
देवाग्रे स्थापयेत्पञ्च पञ्च विप्राय कल्पयेत् ।
पूजयित्वा तु तं विप्रं भक्तिभावेन देववत् ॥
दक्षिणां च यथाशक्ति दद्यात् पञ्चैव मोदकान् ।
भक्षयेन्निशि चन्द्राय अर्घ्यं दत्त्वा यथाविधि ॥

क्षीरसागरसम्भूत सुधारूप निशाकर।
गृहाणार्घ्यं शशाङ्केदं गणेशप्रीतिवर्धनम् ॥
ब्राह्मणान् भोजयेच्छक्त्या यथान्नेन यथासुखम्।
स्वयं भुञ्जीत पञ्चैव मोदकान् फलसंयुतान् ॥
अशक्तश्चैकमन्नं च भुञ्जीत दधिसंयुतम्।
अथवा भोजनं कार्यमेकवारं त्वयाऽद्रिजे ॥
प्रतिमां गुरवे दद्यादाचार्याय सदक्षिणाम्।
वस्त्रकुम्भसमायुक्तामन्ते मन्त्रमिमं जपेत् ॥
गच्छ देव सुरश्रेष्ठ स्वस्थाने गणनायक।
व्रतेनानेन देवेश संकष्टं मे निवारय ॥
एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजे।
यावज्जीवं तु वर्षाण्येकविंशति पार्वति ॥
अशक्तावेकवर्षं वा प्रतिवर्षमथापि वा।
उद्यापनं तु कर्तव्यं चतुर्थ्यां श्रावणेऽसिते ॥ इति।

अथ संकष्टचतुर्थीव्रतपूजाप्रयोगः—तत्र व्रती प्रातर्नित्यकर्म विधाय(१) ॐ विष्णुः ३ अद्येहेत्यादि

(१) नवीनव्रतग्रहणे तु--ॐ विष्णुः ३ अद्येहेत्यादि अमुकोहं विद्यापुत्रधनारोग्यप्राप्तिद्वारा सर्वसङ्कटनिरासार्थं श्रीगणपतिप्रसाद-सिद्ध्यर्थं अद्यारभ्य यावज्जीवमेकविंशतिवर्षाणि वा प्रतिवर्षं भाद्र-कृष्णचतुर्थ्यां प्रतिमासीयकृष्णचतुर्थ्यां वा संकष्टचतुर्थीव्रतं करिष्ये इति सङ्कल्प्य फलजलादिपूर्णं ताम्रपात्रं करयोः कृत्वा--

ॐ इदं व्रतं मया देव गृहीतं पुरतस्तव।
निर्विघ्नं कुरु मे चात्र सर्वसिद्धिप्रदो भव ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे मृतो ह्यहम्।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥

इति जलं देवाग्रे भूमौ क्षिपेत्।

स्त्रियाः कर्तृत्वे अमुकी देव्यहमिह जन्मनि जन्मान्तरेषु च सुभर्तृप्राप्तिद्वारा सर्व इत्यादि वदेत्।

(१)अमुकोऽहं विद्यापुत्रधनारोग्यप्राप्तिद्वारा सपरिवारस्य मम सर्वसंकष्टनिरासार्थं सङ्कष्टहरचतुर्थीव्रतं करिष्ये ।

निराहारोऽस्मि देवेश यावच्चन्द्रोदयो भवेत् ।
भोक्ष्यामि पूजयित्वा त्वां सङ्कष्टात्तारयस्व माम् ॥

इति जलं देवाग्रे भूमौ क्षिपेत्। ततो मध्याह्ने शुभैः कृष्णतिलैः स्नात्वा आह्निकं विधाय पूजासामग्रीं सम्पादयेत् ।

प्रदोषे कृतनित्यक्रियः पुष्पमण्डपिकामध्ये तिलतण्डुलैरष्टदलं कमलं तन्मध्ये चन्दनेन षट्कोणं च निर्माय दीपं प्रज्वलय्य स्वासने उपविश्याचम्य स्वस्तिवाचनपूर्वकं गणेशपुष्पाञ्जल्यर्पणादिविशेषार्घ्यस्थापनप्राणायामान्तं विधाय संकल्पं कुर्यात् । ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं विद्यारोग्यपुत्रधनप्राप्तिद्वारा सपरिवारस्य मम सर्वसंकष्टनिराकरणार्थं श्रीगणपतिप्रसादसिद्धये संकष्टचतुर्थीव्रताङ्गत्वेन सुवर्णादिप्रतिमायां श्रीगणपतिदेवस्य षोडशोपचारद्रव्यैः पूजनं करिष्ये । तत्राष्टदलसमीपे कलशविधिना कलशं स्थापयित्वा सुवर्णादिप्रतिमामग्न्युत्तारणपूर्वकं पञ्चामृतेन प्रक्षाल्य कलशाग्रेऽष्टदलषट्कोणे पुष्पासने संस्थाप्य "ॐ एतन्ते" "मनोजूतिः" इत्यन्ते ॐ भूर्भुवःस्वः श्रीगणपतिदेव साङ्ग सायुध सपरिवार इहागच्छ इह तिष्ठ सुप्रतिष्ठितो वरदो भव । कलशे च ब्रह्मवरुणसहितादित्यादिनवग्रहाः साङ्गाः सुप्रतिष्ठिता वरदा भवन्तु । ततो ध्यानम्—

उद्यद्दिनेश्वररुचिं निजपद्महस्तैः
पाशाङ्कुशाभयवरान् दधतं गजास्यम् ।
रक्ताम्बरं सकलदुःखहरं गणेशं
ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥

(१) स्त्रीव्रते तु अमुकयहं सपरिवाराया ममेह जन्मनि जन्मान्तरेषु च सुभर्तृप्राप्तिद्वारा सर्व० इत्यादि ।

लम्बोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकम् ।
नानारत्नसुवेशाढ्यं प्रसन्नास्यं विचिन्तयेत् ॥
ध्यायेद्गजाननं देवं तप्तकाञ्चनसुप्रभम् ।
चतुर्भुजं महाकायं सूर्यकोटिसमप्रभम् ॥

आवाहनम्--

आगच्छ विघ्नराजेन्द्र स्थाने चात्र स्थिरो भव ।
यावद्व्रतं समाप्येत तावत्सन्निहितो भव ॥
आगच्छ त्वं जगन्नाथ सुरासुरनमस्कृत ।
अनाथनाथ सर्वज्ञ विघ्नराज कृपां कुरु ॥

ॐ नमो भगवते हेरम्बप्रमोदित मम संकष्टं निवारय निवारय स्वाहा गजास्याय नमः । आसनम्---

गोप्ता त्वं सर्वदेवानामिन्द्रादीनां विशेषतः ।
भक्तदारिद्र्यविच्छेत्ता एकदन्त नमोऽस्तु ते ॥

पाद्यम्--

मोदकानामर्पणेन भक्तानां वरदायक ।
देव देव नमस्तेऽस्तु भक्तानां फलदो भव ॥

ॐ नमो भगवते० लम्बोदराय० । अर्घ्यम्--

महाकाय महारूप अनन्तफलदायक ।
देव देव नमस्तुभ्यं सर्वेषां पापनाशन ॥

ॐ नमो भगवते० शङ्करसूनवे० । आचमनीयम्--

कुरुष्वाचमनं देव सुरवन्द्याखुवाहन ।
सर्वाघदलनस्वामिन्नीलकण्ठ नमोऽस्तु ते ॥

ॐ नमो भगवते० उमासुताय० । पञ्चामृतस्नानम्--

स्नानं पञ्चामृतैर्देव गृहाण गणनायक ।
अनाथनाथ सर्वज्ञ सङ्कष्टाद्वारयस्व माम् ॥

पयो दधि घृतं चैव मधुशर्करयाऽन्वितम् ।
पञ्चामृतेन स्नपनं प्रीयतां गणनायकः ॥

ॐ नमो भगवते० वक्रतुण्डाय० । गन्धोदकस्नानं० । ॐ नमो भगवते० हेरम्बाय० स्नानं० । वस्त्रम्—

रक्तवस्त्रयुगं देव देवाङ्गसदृशप्रभम् ।
गृहाण मङ्गलकरं लम्बोदर हरात्मज ॥

ॐ नमो० शूर्पकर्णाय० । वस्त्राङ्गमाचमनीयं० ।

यज्ञोपवीतम्—

ब्रह्मोत्तरं सोत्तरीयं गृहाण गणनायक ।
आरक्तं ब्रह्मसूत्रं च कनकस्योत्तरीयकम् ॥

ॐ नमो भगवते० शूर्पकर्णाय० । यज्ञोपवीताङ्गमाचमनीयं० । गन्धम्—

गृहाणेश्वर सर्वज्ञ दिव्यं चन्दनमुत्तमम् ।
करुणाकर अब्जाक्ष गौरीसुत नमोऽस्तु ते ॥

अक्षताः—

अक्षताः परमा दिव्याः कुङ्कुमाक्ताः सुशोभनाः ।
तान् स्वीकुरु गणाधीश सर्वसिद्धिं प्रयच्छ मे ॥

पुष्पाणि—

केतकादीनि दिव्यानि मालत्यादीनि वै प्रभो ।
मयानीतानि पूजार्थं पुष्पाणि स्वीकुरु प्रभो ॥
सुगन्धि दिव्यमाल्यं च गृहाण गणनायक ।
विनायक नमस्तुभ्यं शिवसूनो नमोऽस्तु ते ॥

ॐ नमो भगवते० गणेश्वराय० ।

अथाङ्गपूजा—ॐ गणेश्वराय नमः पादौ पूजयामि । ॐ विघ्नराजाय० जानुनी० । ॐ आखुवाहनाय० ऊरू० । ॐ हेरम्बाय० कटिं० । ॐ कामारिसूनवे० नाभिं० । ॐ

लम्बोदराय० उदरं०। ॐ गौरीसुताय० स्तनौ०। ॐ गणनायकाय० हृदयं०। ॐ स्थूलकण्ठाय० कण्ठं०। ॐ स्कन्दाग्रजाय० स्कन्धौ०। ॐ पाशहस्ताय० हस्तान्०। ॐ गजवक्त्राय० वक्त्रं। ॐ विघ्नहर्त्रे० ललाटं०। ॐ सर्वेश्वराय० शिरः०। ॐ गणाधिपाय० सर्वाङ्गं०।

अथ दूर्वाङ्कुरपूजा-गन्धपुष्पाक्षतयुतं दूर्वायुग्मं गृहीत्वा प्रत्येकमेकादशनामभिरर्चयेत्-ॐ गणाधिपाय नमः०दूर्वायुग्मं समर्पयामि ॐ उमापुत्राय० ॐ अघनाशनाय० ॐ एकदन्ताय० ॐ इभवक्त्राय० ॐ मूषकवाहनाय० ॐ विनायकाय० ॐईशपुत्राय० ॐसर्वसिद्धिप्रदाय० ॐकुमारगुरवे० ॐ सर्वसंकष्टनाशनाय० "ॐ काण्डात् काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्वे प्रतनु सहस्रेण शतेन च"। ॐ नमो भगवते० धूपः-

दशाङ्गं गुग्गुलं धूपमुत्तमं गणनायक।
गृहाण देवदेवेश उमासुत नमोऽस्तु ते॥

ॐ नमो० विघ्नविनाशिने०। दीपः--

सर्वज्ञं सर्वरत्नाढ्यं सर्वेश विबुधप्रिय।
गृहाण मङ्गलं दीपं घृतवर्तिसमन्वितम्॥

ॐ नमो भगवते० विकटाय० नैवेद्यम्। दशमोदकेषु पञ्च मोदकान्नानाविधनैवेद्यं च देवाग्रे संस्थाप्य प्राणादिमुद्राः प्रदर्श्य निवेदयेत्--

नैवेद्यं गृह्यतां देव नानामोदकसंयुतम्।
पक्वान्नफलसंयुक्तं सर्वभक्ष्यसमन्वितम्॥

ॐ नमो भगवते० वामनाय०। मध्ये पानीयं० देव षड्रसान् भुङ्क्ष्व इति भावयित्वा क्षणं ध्यात्वा मूलमन्त्रं जपित्वा गृह्णातीति समर्प्य उत्तरापोशनं दत्त्वा नैवेद्यमुद्रास्य किञ्चिद् उच्छिष्टभा-

गिने ॐ नमो भगवते० लम्बोदराय० इति दद्यात्। आचमनीयम्—

वामनाय नमस्तुभ्यं विकटाय नमो नमः।
आचम्यतां गणाध्यक्ष संकष्टं मे निवारय॥

सर्वसंकष्टनिवारणाय नमो नमः। करोद्वर्तनार्थे गन्धं०।
फलम्—

फलान्यमृतकल्पानि सुगन्धीन्यघनाशन।
आनीतानि यथाशक्ति गृहाण गणनायक॥

ॐ नमो भगवते० सर्वार्तिनाशिने०। ताम्बूलम्—

ताम्बूलं गृह्यतां देव नागवल्लीदलान्वितम्।
कर्पूरपूगसंयुक्तं सुगन्धं मुखभूषणम्॥

ॐ नमो भगवते० विघ्नहर्त्रे नमः। दक्षिणा—

सर्वदेवाधिदेवाय सर्वसिद्धिप्रदाय च।
दक्षिणेयं मया दत्ता गृहाण गणनायक॥

ॐ हिरण्यगर्भ० ॐ नमो भगवते० सर्वेशाय०। छत्र-चामरपादुकादर्पणादि समर्पयेत्। नीराजनम्—

पञ्चवर्तिसमायुक्तं वन्हिना योजितं मया।
गृहाण मङ्गलं दीपमारार्तिक्यमिदं प्रभो॥

ॐ नमो भगवते० विघ्नराजाय०। प्रदक्षिणाः—

महासंकष्टदग्धोऽहं गणेश शरणं गतः।
तस्मान्मनोरथं पूर्णं कुरु सर्वेश्वरेश्वर॥

यानि कानि च० ॐ नमो भगवते० सर्वाय० प्रदक्षिणात्रयम्।
नमस्काराः—

सर्वदेवाधिदेवाय सर्वसिद्धिप्रदाय च।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः॥

ॐ नमो भगवते० सर्वार्तिनाशिने०। मन्त्रपुष्पाञ्जलिः—

ॐ विघ्नराज नमस्तुभ्यं संकष्टं हर सर्वदा।

पुष्पाञ्जलिं प्रयच्छामि गृहाण सुरसत्तम ॥

ॐ नमो भगवते० विघ्नहर्त्रे०। प्रार्थना—

महासंकष्टदग्धेन शरणं त्वां गतेन च।
मया कृतामिमां पूजां गृहाणोमासुत प्रभो ॥

ॐ नमो भगवते० सर्वदेवाधिदेवाय०। अथ मोदकान् पञ्च सफलान् सदक्षिणान्पात्रे निधाय ॐ विष्णुः ३ अद्येहेत्यादि संकष्टहरचतुर्थीव्रतपूजासाद्गुण्यार्थं संकष्टहरश्रीविनायकप्रीतये इमान् पञ्च मोदकान् सफलान् सदक्षिणान् विघ्नेशरूपिणे ब्राह्मणाय वायनत्वेन दास्ये, ॐ तत्सत् न मम। ब्राह्मणमर्घ्यादिभिः संपूज्य दद्यात्—

विप्रवर्य नमस्तुभ्यं मोदकान् पञ्च ददाम्यहम्।
दक्षिणाभिः समायुक्तान् सफलान् सुष्ठु निर्मितान् ॥
आपदुद्धारणार्थाय गृहाण द्विजसत्तम ॥

ब्राह्मणश्च 'कोऽदात्' इति गृहीत्वा मन्त्राशिषं दद्यात्। यजमानः प्रार्थयेत्—

भक्त्या दक्षिणया हीनं यन्मया दत्तमर्पितम्।
तत्सर्वं पूर्णतां यातु विप्ररूप गणेश्वर ॥

अथ चन्द्रायार्घ्यदानम्—तत्र चन्द्रमसः पूजासामग्रीमर्घ्यसामग्रीं च गृहीत्वा चन्द्रसम्मुखः स्वासने उपविश्य आचम्य अर्घ्यं संस्थाप्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं संकष्टनाशनगणपतिपूजोत्तराङ्गत्वेन चन्द्रस्य पूजनमर्घ्यदानं च करिष्ये।

श्वेतः श्वेताम्बरधरः श्वेताश्वः श्वेतभूषणः।
गदापाणिर्द्विबाहुश्च ध्यातव्यो वरदः शशी ॥

इति चन्द्रमसं ध्यात्वा "इमं देवा" इति वैदिकमन्त्रेण ॐ रोहिणीसहिताय चन्द्रमसे नमः इति नाममन्त्रेण चावाहनादिनीराजनान्तं संपूज्य जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं सम-

वारं निवेदयेत्--

क्षीरसागरसंभूत सुधारूप निशाकर ।
गृहाणार्घ्यं शशाङ्केश गणेशप्रीतिवर्धन ॥
क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन ॥

ॐ रोहिणीसहिताय चन्द्रमसे नमः अर्घ्यं० । एवं सप्तवारं दद्यात् । अथ गणेशार्घ्यदानम्--

गणेशाय नमस्तुभ्यं सर्वसिद्धिप्रदायक ।
संकष्टं हर मे देव गृहाणार्घ्यं नमोऽस्तु ते ॥
कृष्णपक्षे चतुर्थ्यां तु पूजितोऽसि विधूदये ।
क्षिप्रप्रसाद देवेश गृहाणार्घ्यं नमोऽस्तु ते ॥

ॐ नमो भगवते संकष्टहरगणेशाय अर्घ्यं० । अथ चतुर्थ्यर्घ्यदानम्—

तिथीनामुत्तमे देवि गणेशप्रियवल्लभे ।
सर्वसंकष्टनाशाय चतुर्थ्यर्घ्यं नमोऽस्तु ते ॥

ॐ सर्वसंकष्टहरचतुर्थ्यै नमः । तदुत्तराङ्गत्वेन ॐ नमो भगवते संकष्टहरगणेशाय प्रसन्नपुष्पाञ्जलिं० । "ॐ नमो भगवते हेरम्बमदमोदित मम संकष्टं निवारय निवारय स्वाहा" इति मन्त्रमेकविंशतिवारं यथाशक्ति वा जपेत् । गुह्यातीति देवस्य दक्षिणाधोहस्ते समर्पयेत् । ततः प्रणम्य प्रार्थयेत्—

अबुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥
विघ्नराज नमस्तेऽस्तु उमापुत्राघनाशन ।
यदुद्दिश्य कृतं तेऽद्य यथाशक्ति प्रपूजनम् ॥
तेन तुष्टो मम विभो हृत्स्थान्कामान् प्रपूरय ।
विघ्नान् नाशय मे सर्वान् नाशायोपस्थितान् प्रभो ॥

त्वत्प्रसादेन कार्याणि सर्वाणीह करोम्यहम् ॥
शत्रूणां बुद्धिनाशं च मित्राणामुदयं कुरु ।
इति विज्ञापयेद्देवं प्रणिपत्य पुनः पुनः ॥
गच्छ देव सुरश्रेष्ठ स्वस्थाने त्वं गणेश्वर ।
व्रतेनानेन देवेश सङ्कष्टं मे निवारय ॥

ततः प्रतिमादानं-पार्थिवप्रतिमापक्षे दक्षिणादानमेव। दक्षिणां द्रव्यप्रतिमां च अर्घ्यपात्रे निधाय ॐ हिरण्यगर्भ० इत्यादि सम्पूज्य ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं सर्वसङ्कष्टनिवृत्तिद्वारा सङ्कष्टहरश्रीविनायकप्रीतये सङ्कष्टहरव्रतचतुर्थीपूजायाः साद्गुण्यपूर्वकसमग्रफलप्राप्तये इमां दक्षिणां ब्राह्मणाय दास्ये। तथा सुपूजितामिमां सौवर्णीं विनायकप्रतिमां सोपस्करामाचार्याय दास्ये । प्रतिमादानप्रतिष्ठासिद्धये इदं सुवर्णनिष्क्रयीभूतं द्रव्यं वा ब्राह्मणाय दातुमहमुत्सृजे ।

इमां स्वर्णमयीं देव प्रतिमां वस्त्रसंयुताम् ।
गणेशप्रीतये दास्ये सर्वसंपत्समृद्धये ॥

इति मन्त्रेण पूजनपूर्वकं ब्राह्मणाय दद्यात् । ब्राह्मणश्च "कोऽदात्" इत्यादि पठन् मन्त्राशिषं दद्यात् । यजमानस्य तिलकमाशीर्वचनं च कुर्यात् । ततो व्रती ब्राह्मणान् यथाशक्ति भोजयित्वा स्वयं पञ्च मोदकान् यथाशक्ति वा भुक्त्वा यथासुखं विहरेत् ।

अथ जन्माष्टमीव्रतविधिर्हेमाद्रौ भविष्ये—

सप्तम्यां लघुभुक् कुर्याद्दन्तधावनपूर्वकम् ।
उपवासस्य नियमं रात्रौ कृत्वा जितेन्द्रियः ॥
ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले ।
सुदेशे शोभनं कुर्याद्देवक्याः सूतिकागृहम् ॥
तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता ।
काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा ॥

वार्क्षी मणिमयी चैव वर्णकैर्लिखिताऽथवा ।
सर्वलक्षणसंपूर्णा पर्यङ्के च पराहृते ॥
देवकीं तत्र चैकस्मिन् प्रदेशे सूतिकागृहे ।
प्रस्नुतां च प्रसूतां च स्थापयेन्मञ्चकोपरि ॥
मां तत्र बालकं सुप्तं पर्यङ्के स्तनपायिनम् ।
यशोदां तत्र चैकास्मिन् प्रदेशे सूतिकागृहे ॥
तद्वच्च कल्पयेत्पार्थ प्रसूतवरकन्यकाम् ।
कश्यपो वसुदेवोऽयमदितिश्चैव देवकी ॥
शेषो वै बलभद्रोऽयं यशोदा क्षितिरन्वभूत् ।
नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः ॥
गौर्धेनुः कुञ्जरश्चैव दानवाः शस्त्रपाणयः ।
लेखनीयाश्च तत्रैव कालियो यमुनाह्रदे ॥
इत्येवमादि यत्किञ्चिच्छक्यते चरितं मम ।
लेखयित्वा प्रयत्नेन पूजयेद्भक्तितत्परः ॥
मन्त्रेणानेन कौन्तेय देवकीं पूजयेन्नरः ।
गायद्भिः ······ देवकी दिव्यरूपा ॥
पादौ संवाहयन्ती श्रीर्देवक्याश्चरणान्तिके ।
निषण्णा पङ्कजे पूज्या नमो देव्यै श्रियै इति ॥
अर्धरात्रे वसोर्धारां पातयेद्गुडसर्पिषा ।
नाडीवर्धापनं षष्ठी नामादेः करणं मम ॥
ततो मन्त्रेण वै दद्याच्चन्द्रायार्घ्यं समाहितः ।
शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् ॥
जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत्
क्षीरोद ······ प्रतिगृह्यताम् ॥
तथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिः परा ।
तामेव निर्वृतिं देहि सुपुत्रं दर्शयस्व मे ॥

ततः पुष्पाञ्जलिं दत्त्वा यामे यामे प्रपूजयेत् ।
प्रभाते ब्राह्मणान् शक्त्या भोजयेद्भक्तिमान्नरः ॥
ॐ 'नमो वासुदेवाय गोब्राह्मणहिताय च ।
शान्तिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत् । इति।

अथ जन्माष्टमीव्रतपूजाप्रयोगः—व्रतात् पूर्वेह्नि दन्तधावनपूर्वकं कृतैकभक्तो जितेन्द्रियो भूयात् ।व्रतदिने कृतनित्यक्रियोऽर्घस्थापनपूर्वकं सङ्कल्पं कुर्य्यात्–ॐ विष्णुः ३ अद्येहेत्यादि मासतिथ्याद्युल्लिख्यामुकोऽहं सकलैनसो मोक्षकामः श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीकृष्णदेवप्रीत्यर्थं(१) जन्माष्टमीव्रतं करिष्ये । इति सङ्कल्प्य प्रार्थयेत्—

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥

ततो देवताः प्रार्थयेत्—

सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा।
पवनो दिक्पतिर्भूमिराकाशं खचरा नराः ॥
ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिम् ।

निराहारपक्षे प्रार्थयेत्—

वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रं सरोहिणिम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद् गोविन्द त्वयोदितम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्म मरणं यावद् यन्मया दुष्कृतं कृतम् ।
तत्प्रणाशय गोविन्द प्रसीद पुरुषोत्तम ॥ ४ ॥

---

(१) नवीनव्रतग्रहणे तु 'अद्येहेत्यादि पूर्ववत् ।

यद्वा—

अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर ।
भोक्ष्यामि देवकीपुत्र अस्मिन् जन्माष्टमीव्रते ॥

इति प्रार्थयेत् । ततो देवकीप्रसूतिमण्डपं विचित्रवासोभिः सपुष्पजलैर्नवकलशैर्दीपावलिभिः पुष्पमालादिभिश्च रमणीयं चन्दनागरुधूपितं नृत्यगीतवादित्रवीणावेणुवाद्याकुलं दधि-हारिद्रामङ्गलद्रव्योपेतं रक्षामणिविभूषितमग्निखड्गकृष्णच्छागना-गमुशलयुतद्वारं षष्ठ्या देव्याऽधिष्ठितं विधाय तन्मध्ये सर्वतोभद्रोपरि श्वेतपटावृतमञ्चके प्रसुप्तदेवकीस्तनं पिबन्तीं श्रीकृष्णप्रतिमां निधाय देवकीचरणौ संवाहयन्तीं पद्म-जासनसंस्थितां श्रीप्रतिमां च स्थापयेत् । भित्तिषु खड्गचर्मधरं वासुदेवं नन्दगर्गगोपीगोपान् सकुसुमाञ्जलीन्देवगन्धर्वादीन् कंस-नियुक्तान् कुञ्जरादींश्च यमुनाह्रदस्थकालीयमपरमपि यथा-सम्भवं तत्कालीनं श्रीकृष्णचरितं लिखित्वा तत्रैव प्रदेशान्तरे मञ्चकोपरि प्रसूतकन्यया सह यशोदाप्रतिमाञ्च स्थापयेत् । तथा प्रदेशान्तरे पीठोपरि वसुदेवदेवकीनन्दयशोदाश्रीकृष्णच-ण्डिकाप्रतिमाः स्थापयेत् ।

अशक्तौ भित्तिस्थचित्रा एव पूज्याः । जन्माष्टमीव्रते जयन्ती-योगे सति विशेषः । जन्माष्टमीव्रते पर्यङ्कस्थितयोः देवकी-श्रीकृष्णयोः पूजनम् जयन्तीव्रते तु देवक्या तस्य उत्स-ङ्गस्थितस्य पूजनम् । जयन्तीयोगे संकल्पेऽपि विशेषः । तदित्थम्—जन्माष्टमीव्रतं जयन्तीव्रतं च तन्त्रेण करिष्ये इति ।

प्रतिमापक्षे—ॐ हिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि ॥ पावकोऽस्मभ्यꣳ शिवो भव ( य०सं०१७-५ ) इत्यग्न्युत्तारणं कृत्वा पञ्चामृतेन प्रतिमाः स्नापयेत्—

ॐ पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्त-

रिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् । (य० सं० १८-३६) इति पयसा संस्नाप्य तप्तोदकेन स्नापयेत्-

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ (य० सं० ९-३० अर्धम्)। ततः शीतोदकेन स्नापयेत्-

ॐ आपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन ॥ महे रणाय चक्षसे ॥ ( य०सं०३६-१४ ) इति। शीतोदकेन संस्नाप्य दध्ना स्नापयेत्-

ॐ दधि क्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत् प्रणऽआयूंषि तारिषत् ॥ (य० सं० २३-३२) इति दध्ना संस्नाप्य देवस्य त्वेति तप्तोदकेनापोहिष्ठेति शीतोदकेन च संस्नाप्य घृतेन स्नापयेत्—

ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ॥ द्यावापृथिवी वरुणस्य धर्म्मणा विष्कभितेऽअजरे भूरिरेतसा ॥ ( य० सं० ३४-४५ ) इति घृतेन संस्नाप्य तप्तोदकेन शीतोदकेन च संस्नाप्य मधुना स्नापयेत्—

ॐ मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्न्नः सन्त्वोषधीः ॥ (य० सं० १३-२७) इति मधुना संस्नाप्य तप्तोदकेन शीतोदकेन च संस्नाप्य शर्करया स्नापयेत्।

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य सङ्गथे। (य० सं० १२-११२) इति शर्करया संस्नाप्य तप्तोदकेन शीतोदकेन च संस्नाप्य पीठे संस्थाप्य पूजारम्भं कुर्य्यात्। रात्रौ प्राङ्मुखः शुद्धासने उपविश्य-दीपं प्रज्ज्वलय्य आचम्यसुमुखश्चेति गणेशं नत्वा शुक्-

काम्बरधरमिति विष्णुं च नत्वा अर्घं संस्थाप्य सूर्यायार्घन्दत्त्वा भूतोत्सादनं विधाय पुनरर्घं संस्थाप्य सङ्कल्पं कुर्यात्-ॐ विष्णुः ३ अद्येहेत्याद्यमुकनामसंवत्सरे दक्षिणायने वर्षर्त्तौ भाद्रपदमासे कृष्णपक्षेऽष्टम्यां तिथौ अमुकगोत्रोत्पन्नोऽमुकराशिरमुकशर्म्माहं सकलपापक्षयद्वारा श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीकृष्णदेवप्रीत्यर्थं मम सपरिवारस्य ज्ञाताज्ञातमनोवाक्कायसम्भूतकोटिपातकमहापातकक्षयपूर्वकं गर्भपतनमृत्युनिष्क्रान्त्यादि भयरोगशोकदारिद्र्यदौर्भाग्यदुःस्वप्नभूतोत्पातवैकृत्यबाधाल्पमृत्युवैधव्यपरिहारपूर्वकसकलमनोरथप्राप्तिपूर्वकाक्षयहरिलोकप्राप्तिकामो जन्माष्टमीव्रताङ्गत्वेन यथामिलितोपचारैः पट्टलिखितप्रतिमासु (सुवर्णप्रतिमासु वा) सपरिवारस्य श्रीकृष्णदेवस्य प्राणप्रतिष्ठापूर्वकं पूजनं करिष्ये। इति सङ्कल्प्य द्वारपूजां कुर्यात्। यवान् गृहीत्वा पूर्वे नन्दाय (१)नमः, सुनन्दाय नमः। दक्षिणे-चण्डाय नमः, प्रचण्डाय नमः। पश्चिमे-बलाय नमः, प्रबलाय नमः। उत्तरे-भद्रायनमः, सुभद्राय नमः। इति द्वारपूजां कृत्वाऽङ्गन्यास कुर्यात्। तत्र पूर्व जलं गृहीत्वा ॐ अस्य श्रीनारायणाष्टाक्षरमन्त्रस्य साध्यनारायणऋषिर्गायत्रीछन्दः श्रीकृष्णपरमात्मा देवता वंबीजं मायेति शक्तिर्नम इति कीलकं न्यासे विनियोगः। इति जलमुत्सृज्याङ्गेषु न्यसेत्। शिरसि-साध्यनारायणऋषये नमः। मुखे-गायत्रीच्छंदसे नमः। हृदि-परमात्मदेवतायै नमः। गुह्ये-वंबीजाय नमः। पादयोः-मायेतिशक्तये नमः। सर्वाङ्गे-नमः कीलकाय नमः। ॐ नं क्रुद्धोल्काय अङ्गुष्ठाभ्यां नमः। ॐ मों महोल्काय तर्जनीभ्यां नमः। ॐ नां वीरोल्काय मध्यमाभ्यां नमः। ॐ रां विद्युल्काय अनामिकाभ्यां नमः। ॐ यं सहस्रोल्काय कनिष्ठिकाभ्यां नमः। ॐ णायं करतलकरपृष्ठाभ्यां नमः। ॐ नं क्रुद्धोल्काय शुक्र-

(१) ओङ्कारस्सर्वत्रैव योज्यः।

वर्णाय स्वाहा हृदयाय नमः। ॐ मों महोल्काय हिरण्यवर्णाय शिरसे स्वाहा। ॐ नां वीरोल्काय कृष्णवर्णाय शिखायै वषट्। ॐ रां विद्युल्काय रक्तवर्णाय कवचायहुम्। ॐ यं सहस्रोल्काय कुङ्कुमवर्णाय नेत्रत्रयाय वौषट्। ॐ णायं अस्त्रायफट् इति न्यासं विधाय ॐ "एतन्ते" "मनोजूतिः" इति मन्त्रपाठान्ते ॐ भूर्भुवःस्वः भित्तिलिखित(१)मूर्तौ श्रीकृष्णदेव साङ्ग सपरिवार इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव। तथा पट्टलिखितान्यदेवताश्चेहागच्छन्त्विह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु। इति प्रतिष्ठाप्य पीठपूजनं कुर्यात्-(२) ॐ विमलायै नमः। ॐ उत्कर्षिण्यै नमः। ॐ ज्ञानायै नमः। ॐ क्रियायै नमः। ॐ योगायै नमः। ॐ प्रह्व्यै नमः। ॐ सत्यायै नमः। ॐ ईशानायै नमः। मध्ये ॐ अनुग्रहायै नमः। ॐ नमोभगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपीठात्मने नमः। ततो देवकीं ध्यायेत्—

गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः
शृङ्गारादर्शकुन्तप्रवरकृतकरैः किङ्करैः सेव्यमाना।
पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते
सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा॥

इति देवकीं ध्यात्वा श्रीकृष्णं ध्यायेत्-

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्केयूरं कौस्तुभेनोल्लसितरुचिरहारं च पीताम्बरं च।
नानारत्नांशुभिन्नाभरणशतयुतं श्रीधराश्लिष्टदेहं
वन्दे दोःसक्तनीलाम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम्॥१॥
नवनीलघनश्यामं नलिनायतलोचनम्।
शङ्खचक्रगदापद्मधरं पीताम्बरावृतम्॥ २॥

---

(१) प्रतिमापक्षे—सुवर्णनिर्मितमूर्त्तावित्यूहः कार्यः।
(२) केचिद्ध्यानान्तरं पीठपूजनं कुर्वन्ति।

कौस्तुभेन विराजन्तं वनमालाविभूषितम् ।
उल्लसत्कुण्डलज्योतिकपोलवदनाश्रियम् ॥ ३ ॥
किरीटेन विराजन्तं वलयाङ्गदनूपुरैः ।
प्रसन्नवदनाम्भोजं चतुर्बाहुं श्रियाऽन्वितम् ॥ ४ ॥
मां चापि बालकं ध्यात्वा पर्य्यङ्के स्तनपायिनम् ।
श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् ॥ ५ ॥

लक्ष्मीं च देवकीचरणान्तिके पङ्कजे निषण्णां तस्याश्चरणौ संवाहयन्तीं 'बालार्कद्युति०' 'लक्ष्म्यै नमः' इति ध्यायेत् । ॐ सहस्रशीर्षा० देवक्यै नमः इति देवकीमावाह्य श्रीकृष्णमावाहयेत्—

सदेवगणगन्धर्वैर्गोपैर्नागैश्च बन्धुभिः ।
आगच्छ देवदेवेश मातृपितृसमन्वित ॥

नमो दैव्ये श्रिये इति श्रियमावाह्य वसुदेवाय नमः । यशोदायै नमः । नन्दाय नमः । वासुदेवाय नमः । बलदेवाय नमः । चण्डिकायै नमः इति चावाह्य भित्तिस्थचित्रेषु समस्तपरिवारदेवताभ्यो नमः इतिसामान्येनावाह्यासनं दद्यात्— ॐ पुरुष एवेद२ं० देवक्यै नमः,

श्रीधराय भूधराय गोवर्धनधराय च ।
आसनं च तथा दद्यात् कृष्णाय च नमो नमः ॥

आवाहितेभ्यः सर्वेभ्यो देवेभ्यो नमः । पाद्यं—ॐ एतावानस्य० देवक्यै नमः,

सर्वभूतहितार्थाय जगदाधारहेतवे ।
सर्गस्थित्यन्तरूपाय कृष्णाय च नमो नमः ॥

आवाहितेभ्यो देवेभ्यो नमः । अर्घ्यम्—ॐ त्रिपादूर्ध्व० देवक्यै नमः,

देवकीगर्भसम्भूत दैत्यसैन्यविनाशन ।
गृहाणार्घ्यमिमं देव मातुरुत्सङ्गसंस्थित ॥

आवाहितेभ्यो देवेभ्यो नमः । आचमनं-ॐ ततो विराडजा० देवक्यै नमः,

सुरासुराणामीशाय क्षीराब्धिशयनाय च ।
दद्यादाचमनं तस्मै कृष्णाय च नमो नमः ॥

आवाहितेभ्यो देवेभ्यो नमः ।

स्नानं--ॐ तस्माद्यज्ञात्सर्वहुतः० देवक्यै नमः,

योगेश्वराय देवाय योगानां पतये नमः ।
योगोद्भवाय नित्याय गोविन्दाय नमो नमः ॥

आवाहितेभ्यो देवेभ्यो नमः । पञ्चामृतस्नानं—ॐ पञ्चनद्यः सरस्वती० पयो दधि घृतं० तत आचमनं समर्प्य—वस्त्रं—ॐ तस्माद् यज्ञात्सर्वहुत ऋचः० देवक्यै नमः,

नारायण नमस्तेऽस्तु नमो गरुडवाहन ।
त्रैलोक्यव्यापकं देव वस्त्रं मे प्रतिगृह्यताम् ॥

आवाहितेभ्यो देवेभ्यो नमः । आचमनं समर्प्य ततो यज्ञोपवीतं—ॐ तस्मादश्वा० देवक्यै नमः,

नारायण नमस्तेऽस्तु त्राहि मां भक्तवत्सल ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण परमेश्वर ॥

आवाहितेभ्यो देवेभ्यो नमः । ततः पुनराचमनं दत्त्वा गन्धं समर्पयेत्—ॐ तं यज्ञं० देवक्यै नमः,

योगेश्वराय देवाय योगानां पतये विभो ।
योगोद्भवाय नित्याय गोविन्दाय नमो नमः ॥

आवाहितेभ्यो देवेभ्यो नमः । 'ततः श्रीकृष्णाय नमः' इति यवान् समर्प्यावाहितेभ्यो देवेभ्यो नम इत्यक्षतान् समर्पयेत् । ततोऽलङ्कारं समर्पयेत्—देवक्यै नमः ।

सर्वेश्वराय सर्वाय विश्वरूपधराय च ।
दद्यात् सर्वमलङ्कारं कृष्णाय च नमो नमः ॥

आवाहितेभ्यो देवेभ्यो नमः। पुष्पाणि—ॐ यत्पुरुषं० देवक्यै नमः,

योगेश्वराय देवाय योगानां पतये नमः।
योगोद्भवाय नित्याय गोविन्दाय नमो नमः॥
सुगन्धीनि सुपुष्पाणि मालत्यादीनि वै प्रभो।
मयानीतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम्॥

आवाहितेभ्यो देवेभ्यो नमः। ततः आवरणपूजां कुर्यात्। पूर्वे—वक्रतुण्डाय नमः। दक्षिणे—श्रीगणेशाय नमः। पश्चिमे—लम्बोदराय नमः। उत्तरे—श्रीगुरवे नमः। आग्नेये—हृदयाय नमः। ईशाने शिरसे स्वाहा। नैर्ऋत्ये—शिखायै वषट्। वायव्ये—कवचाय हुम्। मध्ये-नेत्रत्रयाय वौषट्। पूर्वादिदिक्प्राधान्येनास्त्राय फट्। प्रथमतो-ऽष्टमन्त्रवर्णान् केसरेषु प्रागादि प्रादक्षिण्येन—ॐ नमः। ॐ नं नमः। ॐ मों नमः। ॐ नां नमः। ॐ रां नमः। ॐ यं नमः। ॐ णां नमः। ॐ यं नमः। पूर्वे—वासुदे-वाय नमः। दक्षिणे—सङ्कर्षणाय नमः। पश्चिमे—प्रद्युम्नाय नमः। उत्तरे—अनिरुद्धाय नमः। आग्नेये—शान्त्यै नमः। नैर्ऋत्ये-श्रियै नमः। वायव्ये—सरस्वत्यै नमः। ईशाने—रेवत्यै नमः। प्रागादिदलाग्रेषु—चक्राय नमः। शङ्खाय नमः। गदायै नमः। पद्माय नमः। कौस्तुभाय नमः। मुसलाय नमः। खड्गाय नमः। वनमालायै नमः। पूर्वे—गरुडाय नमः। दक्षिणे—शङ्खनि-धये नमः। उत्तरे—पद्मनिधये नमः। पश्चिमे—ध्वजाय नमः। आग्नेये—गणेशाय नमः। नैर्ऋत्ये—आर्यायै नमः। वायव्ये—दु-र्गायै नमः। ईशान्यां—स्कन्दाय नमः। ततः पूर्वादिक्रमेणेन्द्रादीन् वज्रादींश्च पूजयेत्। इन्द्राय नमः। अग्नये नमः। यमाय नमः। निर्ऋ-तये नमः। वरुणाय नमः। वायवे नमः। सोमाय नमः। ईशानाय नमः। अनन्ताय नमः। ब्रह्मणे नमः। वज्राय नमः। शक्तये

नमः। दण्डाय नमः। खड्गाय नमः। पाशाय नमः। अङ्कुशाय नमः। गदायै नमः। त्रिशूलाय नमः। चक्राय नमः। पद्माय नमः। इति सम्पूजयेत्।

अथाङ्गपूजा—गोविन्दाय नमः पादौ पूजयामि। माधवाय० जङ्घे०। मधुसूदनाय० कटिं०। पद्मनाभाय० नाभिं०। हृषीकेशाय० हृदयं०। सङ्कर्षणाय० स्तनौ०। वामनाय० बाहू०। दैत्यसूदनाय० हस्तौ०। श्रीकण्ठाय० कण्ठं०। सुमुखाय० मुखं०। त्रिविक्रमाय० नासिकां०। पुण्डरीकाक्षाय० नेत्रे०। नृसिंहाय० श्रोत्रे०। उपेन्द्राय० ललाटं०। हरये० शिरः०। श्रीकृष्णाय० सर्वाङ्गं पूजयामि।

धूपः—ॐ ब्राह्मणोऽस्य० देवक्यै नमः,

यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च।
विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः॥

आवाहितदेवेभ्यो नमः। दीपः—ॐ चन्द्रमा मनसो० देवक्यै नमः,

आज्यं सद्वर्तिसंयुक्तं वह्निना दीपितं मया।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम्॥

आवाहितदेवेभ्यो नमः। नैवेद्यम्—ॐ नाभ्या आसी० देवक्यै नमः,

विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च।
विश्वस्य पतये तुभ्यं गोविन्दाय नमो नमः॥

आवाहितेभ्यो देवेभ्यो नमः। ततो नैवेद्याङ्गमाचमनं दत्वा श्रीकृष्णाय नमः, आवाहितेभ्यो देवेभ्यो नम इति च जपं विधाय

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादात् सुरेश्वर॥

इति समर्पयेत्। ततो गन्धाक्षतपुष्पैः केवलं पुष्पैर्वा पृथक् पृथङ् नामभिः पूजयेत्–ओङ्कारस्सर्वत्र प्रयोक्तव्यः। ॐ अनघाय नमः १ ॐ वामनाय नमः २ ॐ शौरये नमः ३ वैकुण्ठाय नमः ४ पुरुषोत्तमाय नमः ५ वासुदेवाय नमः ६ हृषीकेशाय नमः ७ माधवा नमः ८ मधुसूदनाय नमः ९ वाराहाय नमः १० पुण्डरीकाक्षाय नमः ११ नृसिंहाय नमः १२ ब्राह्मणप्रियाय नमः १३ धरणी-धराय नमः १४ दैत्यसूदनाय नमः १५ दामोदराय नमः १६ पद्मनाभाय नमः १७ केशवाय नमः १८ गरुडध्वजाय नमः १९ गोविन्दाय नमः २० अच्युताय नमः २१ कृष्णाय नमः २२ अनन्ताय नमः २३ अपराजिताय नमः २४ अधोक्षजाय नमः २५ जगद्बीजाय नमः २६ सर्गस्थित्यन्तकारिणे नमः २७ अनादिनि-धनाय नमः २८ विष्णवे नमः २९ त्रैलोक्येशाय नमः ३० त्रिविक्रमाय नमः ३१ नारायणाय नमः ३२ चतुर्बाहवे नमः ३३ शङ्खचक्रगदाधराय नमः ३४ पीताम्बराय नमः ३५ नित्याय नमः ३६ वनमालाविभूषिताय नमः ३७ श्रीवत्साङ्काय नमः ३८ जगत्सेतवे नमः ३९ श्रीधराय नमः ४० श्रीपतये नमः ४१ हरये-नमः ४२ एवं श्रीकृष्णं सम्पूज्येतरदेवताश्च पूजयेत्–देवक्यै नमः। वसुदेवाय नमः। कश्यपाय नमः। गणेशाय नमः। बलभद्राय नमः। दुर्गायै नमः। यशोदायै नमः। शेषनागाय नमः। महादेवाय नमः। दित्यै नमः। नन्दाय नमः। प्रजापतये नमः। दक्षाय नमः। आदित्याय नमः। सोमाय नमः। दुर्गायै नमः। यमुनायै नमः। कालियाय नमः। चतुर्मुखाय नमः। कालने-मिने नमः। धन्वन्तरये नमः। ( ज्वराय नमः इत्यपि पाठः ) विश्वाय नमः। गजेभ्यो नमः। अश्वेभ्यो नमः। गङ्गायै नमः। यमुनायै नमः। दानवेभ्यो नमः। इन्द्राय नमः। शस्त्रपाणिभ्यो नमः। गन्धर्वेभ्यो नमः। यक्षेभ्यो नमः। किन्नरेभ्यो नमः।

कंसाय नमः। चित्रगुप्ताय नमः। स्वर्गाय नमः। ग्रहेभ्यो नमः। विद्याधरेभ्यो नमः। अप्सरोभ्यो नमः। नागेभ्यो नमः। पर्वतेभ्यो नमः। गोभ्यो नमः। पक्षिभ्यो नमः। नरनारीभ्यो नमः। सर्वेभ्यो गोकुलवासिभ्यो नमः। इति सम्पूज्य ताम्बूलं समर्पयेत्—
ॐ यत्पुरुषेण०

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥

फलम्—इदं फलं० सर्वेभ्यो गोकुलवासिभ्यो नम इति समर्पयेत्। द्रव्यम्—

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥

नीराजनं—

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।
आरार्त्तिकमिदं देव गृहाण मदनुग्रहात्॥
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च।
त्वमेव सर्वज्योतींषि ह्यारार्त्तिः प्रतिगृह्यताम्॥

ततः पुष्पाणि समर्पयेत्—

अवतारसहस्राणि करोषि मधुसूदन।
न ते संख्याऽवताराणां केऽपि जानन्ति वै प्रभो॥
देवा ब्रह्मादयो वापि स्वरूपं न विदुस्तव।
अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गसंस्थितम्॥

इति पुष्पाणि समर्प्य प्रार्थयेत्—

नमस्ते देवदेवेश नमस्ते धरणीधर।
नमस्ते सर्वनागेश नमस्ते पुरुषोत्तम॥
प्रसीद भगवन्मह्यमज्ञानात् कुण्ठितात्मने।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम्॥

अतः प्रसीद भगवन्नमितद्युतिपञ्जर ।
सुप्रसीद प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥
स्वसंवेद्य स्वरूपात्मन्नानन्दात्मन्ननामय ।
अचिन्त्यसार विश्वात्मन् प्रसीदेश निरञ्जन ॥
प्रसीद तुङ्गतुङ्गानाम्प्रसीद परमेश्वर ।
प्रसीद स्पष्टगम्भीर गम्भीराणां महाद्युते ॥
प्रसीद विश्वविस्तीर्ण विस्तीर्णानामणोरणे ।
प्रसीद त्वं द्विजातीनां प्रसीदान्त्यावसायिनाम् ॥
गुरोर्गरीयस्सर्वेषां प्रसीदानन्यदेहिनाम् ।
जय माधव मायात्मञ्जय केशव केशिहन् ॥
जय सुन्दर सौम्यात्मञ्जय शाश्वत शङ्खभृत् ।
जय शार्ङ्गधर श्रीमञ्जय नन्दकनन्दन ॥
जय चक्रगदापाणे जयाजेयजनार्दन ।
जय रत्नकराबद्ध किरीटाक्रान्तमस्तक ॥
जय पक्षिपतिच्छायानिरुद्धार्ककराकर ।
नमस्ते नरकाराते नमस्ते मधुसूदन ॥
नमस्ते नलिनापाङ्ग नमस्ते नयनाम्बुजन ।
नमः पापहरेशान नमस्सर्वभयापह ॥
नमस्सम्भृतसर्वात्मन्नमस्सम्भृतकौस्तुभ ।
नमस्ते नयनातीत नमोऽतिक्रान्तवाक्पथ ॥
विष्णवे त्रिदिवारातिं जिष्णवे त्रिदिवात्मने ।
चक्रभिन्नाय चक्राय चक्रिणे शक्रबन्धवे ॥
नमो विभिन्नज्ञेयाय नमः स्मृतिपथातिग ।
नमन्ति मूर्त्तिभेदेन सर्गस्थित्यन्तहेतवे ॥
विश्वाय विश्वनन्दाय विश्वभूतात्मने नमः ।
नमोऽस्तु योगज्ञेयाय नमोऽस्तु ध्यानरूपिणे ॥

भूतिप्रदाय भक्तानां नमस्ते मुक्तिदायिने।
नमो वाचाक्कायचेष्टाः स्युर्ध्यानस्तुतिनमस्क्रियाः॥
देवेश कर्म सर्वम्मे भवेदाराधनं तव॥ इति।

प्रदक्षिणाः-ॐ सप्तास्यासन्०

यानि कानि च पापानि जन्मान्तरकृतानि च।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे॥

इति प्रदक्षिणीकृत्य ॐ यज्ञेन यज्ञमय० राजाधिराजाय० इति मन्त्रपुष्पाञ्जलिं समर्प्य(१) स्थण्डिले रोहिणीसहितं शशाङ्कं पूजयेत्। तत्र संकल्पः-ॐविष्णुः ३ अद्येहेत्यादि मासतिथ्याद्युल्लिख्यामुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीकृष्णदेवस्य पूजनोत्तराङ्गत्वेन स्थण्डिले श्रीरोहिणीसहितचन्द्रदेवस्य पूजनं करिष्ये इति सङ्कल्प्य "एतन्ते०" "मनोजूति०" इति मन्त्रपाठान्ते ॐ भूर्भुवःस्वः चन्द्रदेव इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य 'चन्द्रमसे नमः' इति ध्यात्वाऽनेनैव नाममन्त्रेण पाद्यादि नीराजनान्तं सम्पूज्य शङ्खे तोयं समादाय तस्मिश्चन्दनपुष्पादिकं प्रक्षिप्य जानुभ्यां धरणीं गत्वा अर्घ्यं दद्यात्--

क्षीरोदार्णवसम्भूत आत्रिनेत्रसमुद्भव।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहित प्रभो॥
ज्योत्स्नापते नमस्तुभ्यं ज्योतिषां पतये नमः।
नमस्ते रोहिणीकान्त ह्यर्घ्यन्नः प्रतिगृह्यताम्॥

इत्यर्घ्यं दत्त्वा चन्द्रम्प्रणमेत्-

ज्योत्स्नापते नमस्तुभ्यं ज्योतिषाम्पतये नमः।

---

(१) कालाद्यनुरोधेनार्धरात्रात्पूर्वमेव श्रीकृष्णपूजापकर्षे चन्द्रोदयाभावात्स्थण्डिले एव चन्द्रमसः पूजनमावश्यकं भवति। तदनुसारेण स्थण्डिले रोहिणीसहितं शशाङ्कं पूजयेदिति प्राचीनपद्धतिकाराणां योजना। अर्धरात्रपूजनपक्षे तु प्रत्यक्षचन्द्रस्यैव पूजनम्।

नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥
नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः ।
कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारुणे ॥

इति चन्द्रं प्रणम्य श्रीकृष्णं प्रणमेत्--

अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥
वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥
गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारिणम् ॥
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ॥
पीताम्बरधरं नित्यं वनमालाविभूषितम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ॥
प्रपद्येऽहं सदा देव सर्वकामप्रसिद्धये ।
प्रणमामि सदा देवं वासुदेवं जगत्पतिम् ॥

इति श्रीकृष्णं प्रार्थ्य कृष्णायार्घ्यन्दद्यात् । तत्र मन्त्रः-

जातः कंसवधार्थाय भूभारोत्तारणाय च ।
देवतानां हितार्थाय धर्मसंस्थापनाय च ॥
पाण्डवानां हितार्थाय दैत्यानां निधनाय च ।
गृहाणार्घ्यम्मया दत्तं देवक्या सहितो हरे ॥

इत्यर्घ्यन्दत्त्वा भगवन्तं प्रार्थयेत्--

त्राहि मां सर्वलोकेश हरे संसारसागरात् ।
त्राहि मां सर्वपापघ्न दुःखशोकार्णवाद्धरे ॥
दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत् ।
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ॥

पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे।
त्राहि मां देवदेवेश त्वत्तो नान्योऽस्ति रक्षिता॥
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके।
तत्पुण्यं वृद्धिमायातु पापं हर हलायुध॥

इति सम्प्रार्थ्य संक्षिप्तप्रकारेण जातकर्मषष्ठीमहोत्सवनामकर्म्माणि कुर्यात् (१)। तत्र पूर्वं सङ्कल्पं कुर्यात्—ॐविष्णुः ३ अद्येहेत्याद्युलिख्यामुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वकश्रीकृष्णदेवस्य प्रीतये श्रीकृष्णदेवस्य जातकर्मषष्ठीमहोत्सवनामकर्माणि संक्षिप्तप्रकारेण करिष्ये। तथा षष्ठीमहोत्सवाङ्गत्वेन षट्कृत्तिकानां स्कन्दप्रद्युम्नयोस्तथा षष्ठीदेव्याश्च पूजनं करिष्ये (२)। तथोत्तराङ्गत्वेन जीवमातॄणाम्पूजनञ्च करिष्ये इति संकल्प्य संक्षिप्तप्रकारेण पूर्वं जातकर्म्माख्यं संस्कारं कुर्य्यात्। तत्र घृतमादाय सुवर्णान्तर्हितयाऽनामिकया श्रीकृष्णं सकृत्प्राशयेत्। तद्यथा ॐ भूस्त्वयि दधामि। ॐ भुवस्त्वयि दधामि ॐ स्वस्त्वयि दधामि। ॐ भूर्भुवःस्वः सर्वन्त्वयि दधामि। इति घृतं प्राश्य नालच्छेदनं कुर्य्यात्।

अथ षष्ठीपूजा—तत्र "एतन्ते०" "मनोजूति०" इति मन्त्रौ पाठित्वा ॐ भूर्भुवःस्वः षट्कृत्तिका इहागच्छन्त्विह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु। तथा भूर्भुवःस्वः स्कन्दप्रद्युम्नौ सुप्रतिष्ठितौ वरदौ भवतम्। तथा षष्ठीदेवि साङ्गे सपरिवारे सायुधे सवाहने भगवति इहागच्छेह तिष्ठ सुप्रतिष्ठिता वरदा भव इति प्रतिष्ठाप्य ध्यायेत्—षट्कृत्तिकाभ्यो नमः इति ध्यात्वा प्रद्युम्नं ध्यायेत्—

प्रद्युम्नस्तु चतुर्बाहुश्शङ्खचक्रगदाधरः।

(१) केषुचित् पुस्तकेष्वन्नप्राशनमप्यास्ति।
(२) अन्नप्राशनपक्षे—अन्नप्राशनञ्च करिष्ये।

चक्रं दक्षिणहस्ते स्याद्वामहस्ते धनुस्तथा ॥
शङ्खं च दक्षिणे दद्याद्गदां वामे प्रदापयेत् ।
प्रद्युम्नं कारयेद्देवं सर्वलक्षणसंयुतम् ॥

ततः स्कन्दं--

मयूरवरमारूढो द्विभुजो बालरूपधृक् ।
मुद्गरं वामहस्ते तु शार्ङ्गं दक्षिणतो न्यसेत् ॥

ततः षष्ठीं—

चतुर्भुजां महादेवीं तुङ्गपीनस्तनीं शिवाम् ।
मयूरवाहनारूढां रक्तवस्त्रधरां शुभाम् ॥
शूलशक्तिवराभीतिहस्तां ध्यायेन्महेश्वरीम् ।

इति ध्यात्वा षट्कृत्तिकाभ्यो नमः प्रद्युम्नस्कन्दाभ्यां नमः षष्ठीदेव्यै नमः इति नाममन्त्रैरावाहनं कृत्वा तैरेव पाद्यार्घ्य-स्नानाचमनवस्त्राचमनगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलभूषणानि दत्त्वा क्षणं ध्यात्वा नीराजयेत्—

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।
आरार्तिकमिमन्देव गृहाण मदनुग्रहात् ॥
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि ह्यारार्तिः प्रतिगृह्यताम् ॥

इति नीराज्य प्रार्थयेत्—

नमः कुमाराय महाप्रभाय स्कन्दाय ते स्कन्दितदानवाय ।
नवार्कबिम्बद्युतये नमोऽस्तु नमोऽस्त्वमोघोद्यतशक्तिपाणये ॥

अथ प्रद्युम्नप्रार्थना—

भोः प्रद्युम्न महाबाहो लक्ष्मीहृदयनन्दन ।
कुमारं रक्ष मे भीतेः प्रद्युम्नाय नमो नमः ॥

ततः कृत्तिकाः प्रार्थयेत्—

शिवायै नमः । सम्भूत्यै नमः । प्रीत्यै नमः । रत्यै नमः । अनु-

सुधायै नमः। क्षमायै नमः।

जगन्मातर्जगद्धात्रि जगदानन्दकारिणि।
नमस्ते देवि कल्याणि प्रसीद मम कृत्तिके॥

ततः कार्तिकेयं—

कार्तिकेय महाबाहो गौरीहृदयनन्दन।
रक्ष भीतेस्त्वमेवैनं कार्तिकेय नमोऽस्तु ते॥

ततः षष्ठीम्—

जय देवि जगन्मातर्जगदानन्दकारिणि।
प्रसीद मम कल्याणि महाषष्ठि नमोऽस्तु ते॥
पुरा देवैः पूजिताऽसि ब्रह्मविष्णुशिवादिभिः।
आवाभ्यामपि देवि त्वं पूज्यसे भक्तिपूर्वकम्॥
देह्यस्य बालकस्यायुर्दीर्घं तुभ्यन्नमो नमः।

इति षष्ठीं प्रार्थ्य संक्षिप्तप्रकारेण नामकर्माख्यसंस्कारं कुर्यात्। तत्र श्वेतपटे श्रीकृष्णस्य नामाक्षराणि विलिख्य प्रतिष्ठापयेत्। "एतन्ते" "मनोजूति" इति मन्त्रपाठान्ते ॐ भूर्भुवःस्वः श्रीकृष्ण-देवस्य नामानि सुप्रतिष्ठितानि भवन्तु इति प्रतिष्ठाप्य स्वस्तिवा-चनम्पठित्वा श्रीकृष्णनाम दीर्घायुर्भूयादिति शङ्खेन श्रावयेत्। केषाञ्चित्पुस्तके हन्तहन्तेत्यन्नप्राशनमप्यस्ति।

अथ जीवमातॄणाम्पूजनङ्कुर्यात्। तत्र "एतन्ते" "मनोजूति" इति मन्त्रपाठान्ते ॐ भूर्भुवस्वः कल्याण्यादिजीवमातर इहा-गच्छन्तिवह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठा-प्य ध्यायेत्-

कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा।
जया च विजया चैव सप्तैता जीवमातरः॥

कल्याण्यादिजीवमातृभ्यो नमः इति नाममन्त्रेण पाद्यादिभिः सम्पूज्य धूपदीपादिकञ्च समर्प्य क्षणं ध्यात्वा

जपं कृत्वा निवेद्य च वसोर्द्धारार्थं संकल्पं कुर्य्यात्-- ॐ विष्णुः ३ अद्येहेत्याद्युल्लिख्यामुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तिपूर्वककल्याण्यादिजीवमातॄणां प्रीतये सकलमङ्गलविवृद्ध्यर्थं जीवमातॄणामुपरि गुड़सर्पिषा वसोर्द्धाराः पातयिष्ये इति संकल्प्य केनाचित्पात्रेण विलीनं घृतमादाय जीवमातॄणामुपरि पञ्च सप्त धारा उत्तरवृद्ध्या पातयेत्। ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा (य०सं०१-३)इति वसोर्धाराः पातयित्वा नीराजनं कुर्य्यात्।

"अन्तस्तेज" इति नीराज्य पुष्पाञ्जलिं समर्पयेत्—

कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा।
जया च विजया चैव सप्तैता जीवमातरः॥

इति पुष्पाञ्जलिं समर्प्य दक्षिणासंकल्पं कुर्य्यात्-ॐविष्णुः ३ अद्येहेत्यादि मासतिथ्याद्युल्लिख्यामुकोऽहं जन्माष्टमीव्रताङ्गत्वेन सपरिवारस्य श्रीकृष्णदेवस्य पूजनकर्म्मणस्तथा श्रीकृष्णदेवस्य जातकर्मषष्ठीमहोत्सवनामकर्मणां(१) तथोत्तराङ्गत्वेन जीवमातॄणां पूजनकर्मणश्च साङ्गतासिद्ध्यर्थमिमां दक्षिणां ब्राह्मणाय दास्ये(२)। ॐतत्सन्न मम। इति सङ्कल्प्य ब्राह्मणं सम्पूज्य दक्षिणां दद्यात्। ब्राह्मणश्च दक्षिणां गृहीत्वा यजमानायाशिषं दद्यात्। स आशिषं गृहीत्वा कथाश्रवणपूर्वकं रात्रौ स्मरजागरणं कुर्य्यात्।

ततो नवमीदिने प्रातरुत्थाय नित्यकर्म्म समाप्य श्रीकृष्णमण्डपसमीपमागत्याचम्य गणेशं नत्वाऽर्घं संस्थाप्य सूर्य्यायार्घ्यं दत्त्वा पुनरर्घं संस्थाप्य सङ्कल्पं कुर्य्यात्--ॐ विष्णुः ३ अद्येहेत्यादि मासतिथ्याद्युल्लिख्यामुकोहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये

---

(१) तथान्नप्राशनकर्मणश्च।
(२) ब्राह्मणबहुत्वे--ब्राह्मणेभ्यो विभज्य दास्ये।

श्रीभगवत्याः पूजनं तथोत्तराङ्गत्वेन सपरिवारस्य श्रीकृष्णदेवस्य च पूजनं करिष्ये इति सङ्कल्प्य पूजनं कुर्य्यात्। 'श्रीभगवत्यै नमः' 'सपरिवाराय श्रीकृष्णदेवाय नमः' इति नाममन्त्राभ्यां पाद्यादिनीराजनान्तं सम्पूज्य देवकीम्प्रार्थयेत् । केचिदत्रात्रावेव जीवमातृप्रार्थनासमये देवकीञ्च प्रार्थयन्ति।

प्रणमे देवजननि त्वया जातस्तु वामनः।
वसुदेवात्तथा कृष्णो नमस्तुभ्यन्नमो नमः ॥
सपुत्रार्घ्यप्रदत्तं मे गृहाणेमन्नमोऽस्तु ते ।
अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः॥
अजीजनस्त्वमीड्येव वासुदेवं सनातनम्।

श्रीकृष्णाय नमः । सर्वेभ्यो गोकुलवासिभ्यो नमः। इति प्रार्थ्य दक्षिणासङ्कल्पं कुर्य्यात्–ॐविष्णुः ३ अद्येहेत्यादि मासतिथ्याद्युल्लिख्यामुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीकृष्णदेवप्रीतिपूर्वकजन्मजन्मान्तरीयानेकपापक्षयार्थं जन्माष्टमीव्रतकर्मणः साङ्गफलप्राप्त्यर्थं तथैहिकामुष्मिकसकलध्वान्तनिवृत्त्यर्थामिमां दक्षिणां ब्राह्मणाय (ब्राह्मणेभ्यो विभज्य) दास्ये ॐतत्सन्न मम(१)। तथा यथोपपन्नेनान्नेन ब्राह्मणञ्च (ब्राह्मणान्वा)भोजयिष्ये इति सङ्कल्प्य ब्राह्मणं (ब्राह्मणान्वा) सम्पूज्य दक्षिणां दत्त्वा तुलसीदलसहितं विष्णुपादोदकं ताम्रपात्रे कृत्वा हस्तौ संहतौ कृत्वाऽच्छिद्रमन्त्रान् पठेत्--

व्रतानां व्रतराजेन्द्रं व्रतानां व्रतमुत्तमम्।
व्रतच्छिद्रन्तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि।
सर्वम्भवतु मेऽच्छिद्रं ब्राह्मणा भवताङ्गिरा ॥
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः।
सर्वधर्ममयो विप्रो न तद्वचनमन्यथा ॥

---

(१) प्रतिमापक्षे--सौवर्णीं प्रतिमां।

उपवासो व्रतञ्चैव स्नानन्तीर्थं फलन्तपः ।
विप्रैस्सम्भाषितं यच्च सम्पूर्णम्भवतु व्रतम् ॥
ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥
अभक्ष्यअन्नपानेषु शय्यायां ताम्रभाजने ।
यच्च भुक्तमभुक्तं वा स्वप्नान्तरमथापि वा ॥
दन्तान्तरविलग्नं वा क्षम्यतां मधुसूदन ।
व्यासवाल्मीकिवचनात्पाराशरवसिष्ठयोः ॥
गर्गगौतमधौम्यात्रिकश्यपाङ्गिरसां तथा ।
वचनान्नारदादीनां सम्पूर्णम्भवतु व्रतम् ॥

कृतैतन्मया जन्माष्टमीनिराहारव्रतं विधिहीनं देशहीनं कालहीनं वाक्यहीनं श्रद्धाहीनं दक्षिणाहीनं यत्कृतं तत्सुकृतमस्तु । प्रमादाद्भयाल्लोभान्मोहाद्यन्न कृतं तच्छ्रीभगवद्विष्णोः प्रसादाद् ब्राह्मणवचनात्सर्वम्परिपूर्णमस्तु । अस्तु परिपूर्णम् इति प्रत्युक्तिः ।

**ॐव्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम् ।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥**
(य०सं०१९-३०)

**ॐअक्रन्कर्म कर्म्मकृतः सह व्वाचा मयोभुवा ।**
**देवेभ्यः कर्म्मकृत्वास्तम्प्रेत सचाभुवः ॥** (य०सं०३-४७)

इति पठित्वा ताम्रपात्रस्थितं पूर्वोक्तं विष्णुपादोदकं वक्ष्यमाणमन्त्रं पठित्वा पिबेत्--

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥

ततः प्रार्थयेत्-

अद्य वै नवमी पुण्या पवित्रा पापनाशिनी ।
पारणं च करिष्यामि प्रसीद गरुडध्वज ॥

अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोमि यद्यत्सकलं परस्मै-
नारायणायेति समर्पयामि ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।

इति प्रार्थ्यार्घं भ्रामयित्वा विसृज्य ब्राह्मणान् भोजयित्वा स्वयम्भुञ्जीत ।

इति जन्माष्टमीव्रतपूजाप्रयोगः ॥

अथ हरितालिकाव्रतविधिः भविष्योत्तरपुराणे—

शृणु देवि विधिं वक्ष्ये नार्या तु व्रतमुत्तमम् ।
कर्तव्यं हि प्रयत्नेन यदि सौभाग्यमिच्छति ॥
तोरणादि प्रकर्तव्यं कदलीस्तम्भमण्डितम् ।
आच्छाद्य पट्टवस्त्रैस्तु नानावर्णविचित्रितम् ॥
चन्दनेन सुगन्धेन लेपयेद् यागमण्डलम् ।
शङ्खभेरीमृदङ्गादिवादित्रनिनदैः सह ॥
नानामङ्गलगीतं च कर्तव्यं मम सद्मनि ।
संस्थाप्य वालुकालिङ्गं पार्वत्या सहितं मम ॥
पूजयेद्बहुभिः पुष्पैर्गन्धधूपादिभिर्वरैः ।
नानाप्रकारैर्नैवेद्यैर्भक्ष्यभोज्यसमन्वितैः ॥
उपोष्य पूजयेद् भक्त्या कुर्याज्जागरणं निशि ।
नालिकेरैश्च जम्बीरैरन्यैश्च विविधैः फलैः ॥
ऋतुदेशोद्भवैः सर्वैरनेकैः कुसुमैर्नवैः ।
वस्त्रालङ्कारदीपाद्यैर्मन्त्रेणानेन पूजयेत् ॥

नमः शिवाय ······ अम्ब पार्वति ॥
मन्त्रेणानेन देवि त्वां पूजयित्वा मया सह ।
कथां श्रुत्वा विधानेन दद्यादन्नं च भूरिशः ॥
ब्राह्मणेभ्यो यथाशक्ति देया वस्त्रहिरण्यगाः ।
अन्येषां भूयसी देया स्त्रीणां वा भूषणादिकम् ॥
भर्त्रा सह कथां श्रुत्वा भक्तियुक्तेन चेतसा ।
कृत्वा व्रतेश्वरं देवि सर्वपापैः प्रमुच्यते ॥
राजते काञ्चने ताम्रे वैणवे वाऽथ मृन्मये ।
भाजने विन्यसेदन्नं सवस्त्रफलदक्षिणम् ॥
वायनं द्विजवर्याय दद्यादन्ते च पारणम् । इति ।

अथ हरितालिकाव्रतपूजाप्रयोगः--व्रतदिने व्रतव नद्यादौ जलाशये तिलामलकैः स्नात्वा गृहमागत्य स्वासने उप विश्य आचम्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे दक्षि णायने वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे हरितालिकातृतीयाय शुभपुण्यतिथौ अमुकगोत्रा अमुकराशिः अमुकी देव्यहं मम सम स्तपापक्षयपूर्वकं सप्तजन्मसु अनवच्छिन्नसौभाग्यादिविवृद्धये श्री उमामहेश्वरप्रीतये हरितालिकाव्रतं करिष्ये इति सजलं ताम्र पात्रं करयोः कृत्वा—

अद्य स्थित्वा निराहारा श्वोभूते परमेश्वरि ।
करिष्ये पारणं गौरि व्रतं मे सफलं कुरु ॥

इति जलं भूमौ क्षिपेत्(१)। ततः शुभे देशे सुलिप्तायां भूमौ वर्तु मण्डले सर्वतोभद्रं विलिख्य पूजामण्डपं कदलीस्तम्भतोरणविता दिसुशोभितं पट्टवस्त्राच्छादितं पुष्पमालापञ्चपल्लवफलादिविभूषि विधाय यथासम्भवं पूजासामग्रीं देशकालोद्भवफलपुष्पाणि हरि द्राकुङ्कुमादिसर्वसौभाग्यवस्तुयुतं वैणवपात्रं च संपाद्य नद्यादौ मध्

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।

स्नानं कृत्वा मण्डपान्तः सर्वतोभद्रे ताम्रकलशोपरि लिखिताष्टदल-ताम्रपात्रे सौवर्णीं मृन्मयीं वा प्रतिमां संस्थापयेत् । ततः (१)सायं-काले स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेत्यादि गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यस्थापनमूर्घ्यादर्घ्यदानभूतो-त्सादनआसनविधिविशेषार्घ्यस्थापनान्तं विधाय संकल्पं कुर्या-त्-ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे दक्षिणायने व-र्षर्तौ भाद्रपदे मासे शुक्लपक्षे हरितालिकातृतीयायां शुभपुण्यति-थौ अमुकगोत्रा अमुकदेव्यहं मम समस्तपापक्षयपूर्वकसप्तजन्म-सु राज्याखण्डितसौभाग्यादिविवृद्धये श्रीउमामहेश्वरप्रीतये हरि-तालिकाव्रताङ्गत्वेनास्यां प्रतिमायां श्रीउमामहेश्वरस्य यथामिलितो-पचारैः पूजनं करिष्ये। "एतन्ते०" "मनोजूतिः०" इति भूर्भुवः-स्वः अस्यां मूर्तौ उमामहेश्वर इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ध्यायेत्—

पीतकौशेयवसनां हेमाभां कमलासनाम् ।
भक्तानां वरदां नित्यं पार्वतीं चिन्तयाम्यहम् ॥

मन्दारमालाकुलितालकायै
कपालमालाङ्कितशेखराय ।
दिव्याम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय ॥

आवाहनम्—मन्दारमाला०

देवदेवि समागच्छ प्रार्थयेऽहं जगन्मये ।
इमां मया कृतां पूजां गृहाण सुरसत्तमे ॥
देवदेव समागच्छ प्रार्थयेऽहं जगत्पते ।
तावत्त्वं प्रीतिभावेन मूर्तौ सन्निहितो भव ॥

( १ ) यद्यपि विधावपराण्हकाले पूजा विहिता तथापि पर्वती-योनां पूजानुष्ठानसम्प्रदायः सायंकाले दृश्यते ।

नमः शिवाय ..... अम्ब पार्वति ॥
मन्त्रेणानेन देवि त्वां पूजयित्वा मया सह ।
कथां श्रुत्वा विधानेन दद्यादन्नं च भूरिशः ॥
ब्राह्मणेभ्यो यथाशक्ति देया वस्त्रहिरण्यगाः ।
अन्येषां भूयसी देया स्त्रीणां वा भूषणादिकम् ॥
भर्त्रा सह कथां श्रुत्वा भक्तियुक्तेन चेतसा ।
कृत्वा व्रतेश्वरं देवि सर्वपापैः प्रमुच्यते ॥
राजते काञ्चने ताम्रे वैणवे वाऽथ मृन्मये ।
भाजने विन्यसेदन्नं सवस्त्रफलदक्षिणम् ॥
वायनं द्विजवर्याय दद्यादन्ते च पारणम् । इति ।

अथ हरितालिकाव्रतपूजाप्रयोगः--व्रतदिने व्रतवती नद्यादौ जलाशये तिलामलकैः स्नात्वा गृहमागत्य स्वासने उपविश्य आचम्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे दक्षिणायने वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे हरितालिकातृतीयायां शुभपुण्यतिथौ अमुकगोत्रा अमुकराशिः अमुकी देव्यहं मम समस्तपापक्षयपूर्वकं सप्तजन्मसु अनवच्छिन्नसौभाग्यादिविवृद्धये श्रीउमामहेश्वरप्रीतये हरितालिकाव्रतं करिष्ये इति सजलं ताम्रपात्रं करयोः कृत्वा—

अद्य स्थित्वा निराहारा श्वोभूते परमेश्वरि ।
करिष्ये पारणं गौरि व्रतं मे सफलं कुरु ॥

इति जलं भूमौ क्षिपेत्(१)। ततः शुभे देशे सुलिप्तायां भूमौ वर्तुले मण्डले सर्वतोभद्रं विलिख्य पूजामण्डपं कदलीस्तम्भतोरणवितानादिसुशोभितं पट्टवस्त्राच्छादितं पुष्पमालापत्रपल्लवफलादिविभूषितं विधाय यथासम्भवं पूजासामग्रीं देशकालोद्भवफलपुष्पाणि हरिद्राकुङ्कुमादिसर्वसौभाग्यवस्तुयुतं वैणवपात्रं च संपाद्य नद्यादौ मध्या-

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत् ।

स्नानं कृत्वा मण्डपान्तः सर्वतोभद्रे ताम्रकलशोपरि लिखिताष्टदलताम्रपात्रे सौवर्णीं मृन्मयीं वा प्रतिमां संस्थापयेत् । ततः (१) सायंकाले स्वासने उपविश्य दीपं प्रज्वाल्य आचम्य सुमुखश्चेत्यादि गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यस्थापनसूर्यार्घ्यदानभूतोत्सादनआसनविधिविशेषार्घ्यस्थापनान्तं विधाय संकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे दक्षिणायने वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे हरितालिकातृतीयायां शुभपुण्यतिथौ अमुकगोत्रा अमुकदेव्यहं मम समस्तपापक्षयपूर्वकसप्तजन्मसु राज्याखण्डितसौभाग्यादिवृद्धये श्रीउमामहेश्वरप्रीतये हरितालिकाव्रताङ्गत्वेनास्यां प्रतिमायां श्रीउमामहेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये। "एतन्ते०" "मनोजूतिः०" इति भूर्भुवःस्वः अस्यां मूर्तौ उमामहेश्वर इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ध्यायेत्—

पीतकौशेयवसनां हेमाभां कमलासनाम् ।
भक्तानां वरदां नित्यं पार्वतीं चिन्तयाम्यहम् ॥

मन्दारमालाकुलितालकायै
कपालमालाङ्कितशेखराय ।
दिव्याम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय ॥

आवाहनम्—मन्दारमाला०

देवदेवि समागच्छ प्रार्थयेऽहं जगन्मये ।
इमां मया कृतां पूजां गृहाण सुरसत्तमे ॥
देवदेव समागच्छ प्रार्थयेऽहं जगत्पते ।
तावत्त्वं प्रीतिभावेन मूर्तौ सन्निहितो भव ॥

(१) यद्यपि विधावपराह्णकाले पूजा विहिता तथापि पर्वतीयानां पूजानुष्ठानसम्प्रदायः सायंकाले दृश्यते ।

आसनम्—मन्दारमाला०

भवानि त्वं महादेवि सर्वसौभाग्यदायिके ।
अनेकरत्नसंपृक्तमासनं प्रतिगृह्यताम् ॥
देवदेव नमस्तुभ्यं सहस्रशिरसे नमः ।
नमस्ते कृत्तिवासाय स्वासनं प्रतिगृह्यताम् ॥

पाद्यम्—मन्दारमाला०

सुचारुशीतलं दिव्यं तोयं गन्धसमन्वितम् ।
पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते ॥
शम्भो गङ्गादितीर्थेभ्यो मया प्रार्थनया हृतम् ।
तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥

अर्घ्यम्—मन्दारमाला०

श्रीपार्वति महाभागे शङ्करप्रियवादिनि ।
अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥
वरेण्य यज्ञपुरुष प्रजापालनतत्पर ।
नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोऽस्तु ते ॥

आचमनीयम्—मन्दारमाला०

गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।
आचम्यतां महाभागे रुद्रेण सहितेऽनघे ।
पाटलोशीरकर्पूरसुरभिस्वादुशीतलम् ।
तोयमाचमनीयार्थं शङ्कर प्रतिगृह्यताम् ॥

स्नानम्—मन्दारमाला०

गङ्गासरस्वतीरेवाकावेरीनर्मदाजलैः ।
स्नापिताऽसि मया देवि तथा शान्तिं कुरुष्व मे ।
मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् ।
स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां प्रभो ॥

पञ्चामृतस्नानम्—मन्दारमाला०

पयो दधि घृतं चैव मधु शर्करयान्वितम् ।
पञ्चामृतेन स्नपनं प्रीत्यर्थं प्रतिगृह्यताम् ॥

ततः 'श्रीउमामहेश्वराभ्यां नमः' इति नाममन्त्रेण अङ्गोद्वर्तनम् । शुद्धोदकस्नानम्—मन्दारमाला०

किरणा धूतपापा च पुण्यतोया सरस्वती ।
मणिकर्णिजलं शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥

नाममन्त्रेण आचमनीयम् । वस्त्रम्—मन्दारमाला०

कञ्चुकीमुपवस्त्रं च नानारत्नसमन्वितम् ।
गृहाण त्वं मया दत्तं पार्वत्यै ते नमो नमः ॥
सर्वभूषाधिके रम्ये लोकलज्जानिवारिके ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥

यज्ञोपवीतम्--मन्दारमाला०

महादेव नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥

श्रीमहेश्वराय नमः आचमनीयम् । चन्दनम्--मन्दारमाला०

कुङ्कुमागरुकर्पूरकस्तुरीचन्दनान्वितम् ।
विलेपनं महादेवि गन्धं दास्यामि भक्तितः ॥
मलयाचलसंभूतं घनसारमनोहरम् ।
हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम् ॥

अक्षताः--मन्दारमाला०

रञ्जिताः कुसुमौघेन अक्षताश्चातिशोभनाः ।
ममैषां देवि दानेन प्रसन्ना भव पार्वति ॥
अखण्डानक्षतान् शुक्लान् शोभनान् शालितण्डुलान् ।
त्राहि मां सर्वपापेभ्यो गृहाण वृषभध्वज ॥

सौभाग्यद्रव्याणि--मन्दारमाला०

हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।

सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥

पुष्पाणि--मन्दारमाला०

सेवन्तिकाबकुलचम्पकपाटलाब्ज-
पुन्नागजातिकरवीररसालपुष्पैः ।
बिल्वप्रवालतुलसीदलमालतीभि-
स्त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥

अथाङ्गपूजा—उमायै नमः पादौ पूजयामि। गौर्यै० जङ्घे०। पार्वत्यै० जानुनी०। जगद्धात्र्यै० ऊरू०। जगत्प्रतिष्ठायै० कटिं०। शान्तिरूपिण्यै० नाभिं०।देव्यै० उदरं०।लोकवन्द्यायै स्तनौ०। काल्यै० कण्ठं०। शिवायै० मुखं०। भवान्यै० नेत्रे०। रुद्राण्यै० कर्णौ०। शर्वाण्यै० ललाटं०। मङ्गलदात्र्यै० शिरः०। भक्ताभीष्टप्रदायै० सर्वाङ्गं०। अर्धनारीश्वराय श्रीगौरीशङ्कराय० सर्वाङ्गं०। धूपः–मन्दारमाला०

देवद्रुमरसोद्भूतकृष्णागरुसमन्वितः ।
आनीतोऽयं मया धूपो भवानि प्रतिगृह्यताम् ॥
दशाङ्गं गुग्गुलं धूपं सुगन्धि सुमनोहरम् ।
अर्पयामि महादेव प्रसीद सुमुखो भव ॥

दीपः—मन्दारमाला०

त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् ।
आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥
स्वप्रकाशो महान् दीपः सर्वतस्तिमिरापहः ।
आत्मज्योतिः परं धाम महादेव प्रगृह्यताम् ॥

नैवेद्यम्—मन्दारमाला०

अन्नं च विविधं स्वादु रसैः षड्भिः समन्वितम् ।

भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥
सत्पात्रसिद्धं सुहविर्विविधानन्दलक्षणम् ।
निवेदयामि भवते सानुगाय जुषाण तत् ॥

क्षणं ध्यात्वा श्रीउमामहेश्वराभ्यां नमः इति यथाशक्ति जपं विधाय गृह्णातीति समर्प्य नैवेद्यमुद्वास्य नैवेद्यान्तमाचमनीयं नाममन्त्रेण दत्त्वा करोद्वर्तनं दद्यात्—

मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।
करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥

फलं—मन्दारमाला०

इदं फलं मया देवि स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

ताम्बूलं--मन्दारमाला०

कर्पूरैलालवङ्गादिताम्बूलीदलसंयुतम् ।
क्रमुकस्य फलं चैव ताम्बूलं प्रतिगृह्यताम् ॥

दक्षिणां--मन्दारमाला०

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

भूषणं--मन्दारमाला०

वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममण्डितम् ।
पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम् ॥

आरार्तिकं--मन्दारमाला० । अन्तस्तेजो०

उमायै नमः १ गौर्यै० २ पार्वत्यै० ३ जगद्धात्र्यै० ४ जगत्प्रतिष्ठायै० ५ शान्तिरूपिण्यै० ६ हराय० ७ महेश्वराय० ८ शम्भवे० ९ शूलपाणये० १० पिनाकधृषे० ११ शिवाय० १२ पशुपतये० १३ महादेवाय० १४ इति पुष्पाञ्जलिं समर्पयेत् । प्रदक्षिणाः--मन्दारमाला०

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥

नमस्कारा:—

शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ।
शिवायै सर्वमाङ्गल्यै शिवरूपे जगन्मये ॥
शिवे कल्याणदे नित्यं शिवरूपे नमोऽस्तु ते ।
शिवप्रिये नमस्तुभ्यं शिवायै सततं नमः ॥
नमस्ते ब्रह्मचारिण्यै जगद्धात्र्यै नमो नमः ।
संसारभयसन्तापात्त्राहि मां सिंहवाहिनि ॥

नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ।
नन्दिभृङ्गिमहाकालगणयुक्ताय शम्भवे ॥
नमस्ते सर्वदीपात्मन् निमेषत्रुटिसम्भव ।
जन्ममृत्युजराव्याधिसंसारभयनाशन ॥
नमस्ते देवदेवेश नमस्ते धरणीधर ।
नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम ॥
संसारार्णवमग्नं च त्राहि मां वृषभध्वज ।
हराय च नमस्तुभ्यं त्रैलोक्यव्यापिने नमः ॥
मन्दारमालाकुलितालकायै
कपालमालाङ्कितशेखराय ।
दिव्याम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय ॥

पुष्पाञ्जलिः—मन्दारमाला०

पुष्पाण्यनेकरूपाणि मालाश्चैव सुशोभनाः ।
गृहाण सह पार्वत्या छत्रचामरदर्पणान् ॥

अथ विशेषार्घ्यः—

गौरीहर महेशान व्रतसम्पूर्तिहेतवे ।

गृहाणार्घ्यं मया दत्तं फलपुष्पाम्बुसम्भृतम् ॥

प्रार्थना—

पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते ।
अन्यांश्च सर्वकामान् मे देहि देवि नमोऽस्तु ते ॥
येन कामेन देवि त्वं पूजितासि महेश्वरि ।
राज्यसौभाग्यसम्पत्तिं मह्यं देह्यम्ब पार्वति ॥

एवं गौरीं महेश्वरं च सम्पूज्य कथाश्रवणगायनकीर्तनादिभिर्निशामतिवाहयेत् । ततः प्रभाते स्नानादि विधाय नूतनोपचारैः पूजनोक्तविधिनोत्तराङ्गत्वेन देवीं देवं च सम्पूज्य प्रार्थनां कृत्वा वायनदानं कुर्यात् । सौभाग्यद्रव्यसहितानि वैणवपात्राणि संस्थाप्य हिरण्यगर्भेति गंधाक्षतपुष्पैः सम्पूज्य ॐ विष्णुः३ अमुकगोत्रा अमुकी देव्यहं सौभाग्यारोग्यकामा सर्वसम्पत्समृद्धये श्रीउमामहेश्वरप्रीतिद्वारा व्रतसम्पूर्तिहेतवे इदं यथाकल्पितसौभाग्यद्रव्यं वस्त्रान्नफलसुवर्णपुष्पोपेतं वैणवपात्रं ब्राह्मणाय दास्ये इति संकल्प्य ब्राह्मणं संपूज्य दद्यात्—

अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणम् ।
वायनं गौरि विप्राय ददामि प्रीतये तव ॥
सौभाग्यारोग्यकामाय सर्वसम्पत्समृद्धये ।
गौरीगौरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् ॥

ब्राह्मणाश्च देवस्य त्वेति अहं प्रतिगृह्णामि इति प्रतिगृह्याशिषो दद्यात् । ततो मन्दारमाला इति मन्त्रेण प्रणम्य विसर्जयेत्—

शंकरेण समायुक्ते गच्छ देवि यथासुखम् ।
मम दौर्भाग्यनाशाय पुनरागमनाय च ॥

इति विसज्य ॐ विष्णुः३ अमुकसम्वत्सरे दक्षिणायने

वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे अमुकगोत्रा अमुकी देव्यहं यथोक्तफलावाप्तये कृतैतत्सोपवासहरितालिकातृतीयाव्रतस्य साद्गुण्यपूर्वकसाङ्गफलप्राप्तये इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो दास्ये तथा सिद्धान्नेन यथासंख्याकान् ब्राह्मणान् सुवासिनीश्च भोजयिष्ये । ततोऽच्छिद्रं वाचयेत् । कृतमेतत्सोपवासहरितालिकाव्रतं सर्वं परिपूर्णमस्तु । अस्तु परिपूर्णमिति प्रत्युक्तिः । अकालमृत्युहरणमित्यादिना तीर्थोदकं सतुलसीदलं पीत्वा शिरसा च धारयित्वा ब्राह्मणान् सुवासिनीश्च भोजयित्वा तदनुज्ञया परिवारेण सह स्वयमपि भुक्त्वा यथासुखं विहरेत् ॥

अथ सिद्धिविनायकव्रतविधिर्भविष्ये—

शुक्लपक्षे चतुर्थ्यां तु मासि भाद्रपदे नृप ।
प्रातः शुक्लतिलैः स्नात्वा मध्यान्हे देवमर्चयेत् ॥
स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाऽऽकृतिः ।
अथवा मृन्मयी कार्या वित्तशाठ्यं न कारयेत् ॥
चन्दनेन लिखेत्पद्मं कर्णिकाकेसरान्वितम् ।
तत्र संस्थाप्य देवेशं ध्यायेत्सिद्धिविनायकम् ॥
चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितम् ।
दन्तमेककरे दत्त्वा द्वितीये चाक्षसूत्रकम् ॥
तृतीये परशुं दद्याच्चतुर्थे मोदकं स्मरेत् ।
एवं ध्यात्वा नृपश्रेष्ठ पूजयेच्च गणाधिपम् ॥
आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ।
पञ्चामृतेन स्नपनं शुद्धगन्धोदकेन च ॥
रक्तं देवप्रियं दद्याद्वस्त्रयुग्मं च भक्तितः ।
विनायकेति पुष्पाणि धूपं चोमासुताय च ।
दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने ॥
अथैकविंशतिं गृह्य मोदकान् घृतपाचितान् ।

स्थापयित्वा गणाध्यक्षसमीपे कुरुनन्दन ॥
एकं गणाधिपे दद्यात्सुनैवेद्यं नृपोत्तम ।
दश विप्राय दातव्याः स्वयं ग्राह्यास्तथा दश ॥

ततो दूर्वाङ्कुरान् गृह्य विंशतिं चैकमेव हि ।
पूजनीयः प्रयत्नेन दशभिर्नामभिः पृथक् ॥
तत्र दूर्वाङ्कुरयुगं गृहीत्वा गन्धसंयुतम् ।
नाम्नैकैकेन दद्यात्तु तथैकं सर्वनामभिः ॥
गणाधिप नमस्तेऽस्तु.............. ।

.............पूज्यो गजाननः ॥

प्रदक्षिणानमस्कारौ विधाय च विसर्जनम् ।
सदक्षिणं सवस्त्रं च गुरोर्दद्याद्विनायकम् ॥
ब्राह्मणान् भोजयेत्पश्चाद् भुञ्जीयात्तैलवर्जितम् ॥ इति ।

**अथ सिद्धिविनायकव्रतपूजाप्रयोगः।** तत्र व्रती प्रातस्तिलयुतजलैः स्नात्वा शुक्लाम्बरमिति विष्णुं प्रार्थ्य व्रतग्रहणं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं सकलमनोरथप्राप्तिपूर्वकश्रीसिद्धिविनायकप्रीत्यर्थमेतावत्कालपर्यन्तं सिद्धिविनायकव्रतं करिष्ये। इदं व्रतं० इति जलं देवाग्रे भूमौ क्षिपेत्(१)। ततो मध्याह्नस्नानादि कृत्वा सम्भृतपूजासम्भारः स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य प्राणानायम्य सुमुखश्चेत्यादि विशेषार्घ्यस्थापनान्तं विधाय सङ्कल्पयेत्-ॐ विष्णुः ३ अद्येहेत्यादि वर्षर्तौ भाद्रपदमासे शुक्लपक्षे सिद्धिविनायकचतुर्थ्यां शुभपुण्यतिथौ अमुकगोत्रोऽमुकराशिरमुकशर्माहं ममेह जन्मनि जन्मान्तरेषु च पुत्रपौत्रधनविद्याजययशःश्रीकामायुष्याभिवृद्ध्यर्थं विशेषतः श्रीसिद्धिविनायकप्रीतये

(१) नवीनव्रतग्रहणे तु—ॐ विष्णुः ३ अद्येहेत्यादि पूर्ववत्।

सिद्धिविनायकचतुर्थीव्रतं करिष्ये। तदङ्गत्वेनास्यां मूर्तौ सिद्धिविनायकस्य यथामिलितोपचारैः पूजनं करिष्ये । हेरम्बाय नमः शुद्धमृदाहरणम् । सुमुखाय नमः संघट्टनम् । गौरीसुताय नमः स्थापनम्(१) । इति सुलक्षणां प्रतिमां विधाय रौप्यादिपात्रे चन्दनेन कर्णिकाकेशरान्वितमष्टदलपद्मं विलिख्य तत्र मृन्मयीं प्रति(२)मां संस्थाप्य "एतन्ते" "मनोजूतिः" इति मन्त्रपाठान्ते ॐ भूर्भुवःस्वः सिद्धिविनायक इहागच्छ इह तिष्ठ सुप्रतिष्ठितो वरदो भव। इति प्राणप्रतिष्ठां कुर्यात् । ततः पीठपूजा—तीव्रायै नमः ज्वालिन्यै नमः नन्दायै० भोगदायै० कामरूपिण्यै० सत्यायै० उग्रायै० तेजोवत्यै० मध्ये विघ्नविनाशिन्यै० सर्वशक्तिकमलासनाय नमः । ध्यानम्—

एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् ।
पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम् ॥
ध्यायेद्देवं महाकायं तप्तकाञ्चनसन्निभम् ।
दन्ताक्षमालापरशुपूर्णमोदकहस्तकम् ॥

आवाहनम्-ॐ सहस्र०—

आवाहयामि विघ्नेश सुरराजार्चितेश्वर ।
अनाथनाथ सर्वज्ञ पूजार्थं गणनायक ॥

आसनम्-ॐ पुरुष एवेद ँ सर्वं०—

विचित्ररत्नरचितं दिव्यास्तरणसंयुतम् ।
स्वर्णसिंहासनं चारु गृहाण सुरपूजित ॥

पाद्यम्-ॐ एतावानस्य०—

सर्वतीर्थसमुद्भूतं पाद्यं गङ्गादिसंयुतम् ।

---

(१) सिद्धप्रतिमाहरणपक्षे केवलं मन्त्रावृत्तिः कर्तव्येति ।

(२) हेमरौप्यादिप्रतिमां तु हिमस्य त्वा इत्यग्न्युत्तारणपूर्वकं संस्थाप्येति विशेषः ।

विघ्नराज गृहाणेदं भगवन्भक्तवत्सल ॥

अर्घ्यं–ॐ त्रिपादूर्ध्व० —

अर्घ्यं च फलसंयुक्तं गन्धपुष्पाक्षतैर्युतम् ।

गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणानिधे ॥

मधुपर्कः—

ॐ दध्याज्यमधुसंयुक्तं मधुपर्कं मया हृतम् ।

गृहाण सर्वलोकेश गणनाथ नमोऽस्तु ते॥

आचमनीयं–ॐ ततो विराड० —

विनायक नमस्तुभ्यं त्रिदशैरभिवन्दित ।

गङ्गोदकेन शीतेन सुखमाचमनं कुरु ॥

पञ्चामृतस्नानम्—

पयो दधि घृतं चैव मधु शर्करया युतम् ।

पञ्चामृतेन स्नपनात्प्रीयतां गणनायकः ॥

'श्रीसिद्धिविनायकाय नमः' इति नाममन्त्रेण गन्धोदकस्नानम् । स्नानम्--ॐ तस्माद्यज्ञात्सर्वहुतः संभृ० —

गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् ।

भक्त्या समर्पितं तुभ्यं स्नानाय प्रतिगृह्यताम् ॥

नाममन्त्रेण स्नानाङ्गमाचमनीयम् । वस्त्रम्-ॐ तस्माद्यज्ञात्सर्वहुत ऋचः० —

रक्तवस्त्रयुगं देव देवाङ्गसदृशं प्रभो ।

सर्वप्रद गृहाणेदं लम्बोदर हरात्मज ॥

श्रीसिद्धिविनायकाय नमः वस्त्राङ्गमाचमनीयम् । यज्ञोपवीतम्- ॐ तस्मादश्वा०--

राजतं ब्रह्मसूत्रं च काञ्चनं चोत्तरीयकम् ।

गृहाण चारु सर्वज्ञ भक्तानां वरदायक ॥

नाममन्त्रेण यज्ञोपवीताङ्गमाचमनीयम् । गन्धः–ॐ तं यज्ञं०--

कस्तूरी चन्दनं चैव कुङ्कुमेन समन्वितम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥

श्रीगणाध्यक्षाय नमः । सिन्दूरम्—

उद्यद्भास्करसंकाशं सन्ध्यावदरुणं प्रभो ।
शृङ्गारकरणं दिव्यं सिन्दूरं प्रतिगृह्यताम् ॥

रक्ताक्षताः—

रक्ताक्षतांश्च देवेश गृहाण द्विरदानन ।
ललाटपटले चन्द्रस्तस्योपर्युपधार्यताम् ॥

भूषणानि—

नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च ।
भूषणानि गृहाणेश पार्वतीप्रियनन्दन ॥

पुष्पाणि—ॐ यत्पुरुषं०—

करवीरैर्जातिपुष्पैश्चम्पकैर्बकुलैः शुभैः ।
शतपत्रैश्च कल्हारैः पूजयामि विनायकम् ॥
सुगन्धीनि च पुष्पाणि जातीकुन्दमुखानि च ।
त्रिविधानि च पत्राणि गृहाण गणनायक ॥

अथाङ्गपूजा—गणेशाय नमः पादौ पूजयामि । विघ्नराजाय० जानुनी० । आखुवाहनाय० ऊरू० । हेरम्बाय० कटिं० । कामारिसूनवे० नाभिं० । लम्बोदराय० उदरं० । गौरीसुताय० स्तनौ० । गणनायकाय० हृदयं० । स्थूलकण्ठाय० कण्ठं० । स्कन्दाग्रजाय० स्कन्धौ० । पाशहस्ताय हस्तान्० । गजवक्त्राय० वक्त्रं० । विघ्नहर्त्रे० ललाटं० । सर्वेश्वराय० शिरः० ।

अथैकविंशतिपत्रपूजनम् । ॐ सुमुखाय नमः मालतीपत्रं समर्पयामि । ॐ गणाधिपाय० भृङ्गराजपत्रं० । ॐ उमापुत्राय० बिल्वपत्रं० । ॐ गजाननाय० श्वेतदूर्वापत्रं० । ॐ ल-

म्बोदराय० बदरीपत्रं०। ॐ हरसूनवे० धत्तूरपत्रं०। ॐ गजकर्णाय० तुलसीपत्रं०। ॐ वक्रतुण्डाय० शमीपत्रं०। ॐ गुहाग्रजाय० अपामार्गपत्रं०। ॐ एकदन्ताय० बृहतीपत्रं०। ॐ विकटाय० करवीरपत्रं०। ॐ विनायकाय० अश्मन्तकपत्रं०। ॐ कपिलाय० अर्कपत्रं०। ॐ गजदन्ताय० अर्जुनपत्रं०। ॐ विघ्नराजाय० विष्णुक्रान्तपत्रं०। ॐ बटवे० दाडिमीपत्रं०। ॐ सुराग्रजाय० देवदारुपत्रं० ॐ भालचन्द्राय० मरुबकपत्रं०। ॐ हेरम्बाय० सिन्दुवारपत्रं०। ॐ चतुर्भुजाय० जातीपत्रं०। ॐ सर्वेश्वराय० अगस्तिपत्रं०।

धूपः— ॐ ब्राह्मणोऽस्य०—

दशाङ्गं गुग्गुलं धूपं सुगन्धं च मनोहरम्।
गृहाण सर्वदेवेश उमासुत नमोऽस्तु ते॥

दीपः—ॐ चन्द्रमा मनसो०—

सर्वज्ञ सर्वलोकेश त्रैलोक्यतिमिरापह।
गृहाण मङ्गलं दीपं रुद्रप्रिय नमोऽस्तु ते॥

एकविंशतिमोदकनैवेद्यम्—ॐ नाभ्या आसी०—

शालितण्डुलचूर्णोत्थान् सगुडान् घृतपाचितान्।
मोदकान् दद्मि नैवेद्यं नमस्ते विघ्ननाशिने॥
नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु।
ईप्सितं च वरं देहि परत्र च परां गतिम्॥

मध्येपानीयम्—

एलोशीरलवङ्गादिकर्पूरपरिवासितम्।
प्राशनार्थं कृतं तोयं गृहाण गणनायक॥

प्राणादिमुद्राः प्रदर्श्य अमृतं भुज्यतां विभो इति नैवेद्यं निवेद्य क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रं प्रजप्य गुह्याती-

ति समर्प्य नैवेद्यपात्रमुत्थाप्य एकं मोदकम् ॐ उच्छिष्टभागिने लम्बोदराय नमः इति दत्त्वा उत्तरापोशानं० हस्तप्रक्षालनं० मुखप्रक्षालनं० । ततः करोद्वर्तनम्--

मलयाचलसम्भूतं कर्पूरेण समन्वितम् ।
करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥

फलम्—ॐ इदं फलं०--

बीजपूराम्रपनसखर्जूरीकदलीफलम् ।
नारिकेलफलं दिव्यं गृहाण गणनायक ॥

ताम्बूलम्—

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

दक्षिणा— ॐ हिरण्यगर्भ० ।

ततो नाममन्त्रेण छत्रचामरपादुकादर्पणं समर्प्य दूर्वाङ्कुरपूजां कुर्यात्—ॐ गणाधिप नमस्तेऽस्तु दूर्वायुग्मं समर्पयामि । ॐ उमापुत्र नमस्तेऽस्तु दूर्वा० । ॐ अघनाशन नमस्तेऽस्तु दूर्वा० । ॐ एकदन्त नमस्तेऽस्तु दूर्वा० । ॐ इभवक्त्र नमस्तेऽस्तु दूर्वा० । ॐ मूषकवाहन नमस्तेऽस्तु दूर्वा० । ॐ विनायक नमस्तेऽस्तु दूर्वा० । ॐ ईशपुत्र नमस्तेऽस्तु दूर्वा० । ॐ सर्वसिद्धिप्रदायक नमस्तेऽस्तु दूर्वा० । ॐ कुमारगुरो नमस्तेऽस्तु दूर्वा० । ततो गन्धपुष्पाक्षतयुतमेकं दूर्वाङ्कुरं सर्वनामभिरर्पयेत्—

गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन ।
एकदन्तेभवक्त्रेति तथा मूषकवाहन ॥
विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ।
कुमारगुरवे तुभ्यमिमां दूर्वां निवेदये ॥

नीराजनम्–

चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च।
त्वमेव सर्वज्योतींषि आरार्तिः प्रतिगृह्यताम्॥

प्रदक्षिणा०—ॐ यत्पुरुषेण०–

विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद।
प्रदक्षिणां करोमि त्वां सर्वान् कामान् प्रयच्छ मे॥

नमस्काराः—ॐ समास्या०––

गजाननं भूतगणाधिसेवितं
कपित्थजम्बूफलचारुभक्षणम्।
उमासुतं शोकविनाशकारणं
नमामि विघ्नेश्वरपादपङ्कजम्॥
नमस्ते विघ्नसंहर्त्रे नमस्तेऽभीप्सितप्रद।
नमस्ते देवदेवेश नमस्ते गणनायक॥

मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त०—

विनायकेशतनय गजराज सुरोत्तम।
देहि मे सकलान् कामान् सर्वसिद्धिप्रदायक॥

प्रार्थना—

विनायक गणेशान सर्वदेवनमस्कृत।
पार्वतीप्रिय विघ्नेश मम विघ्नान् निवारय॥
यन्मया चरितं देव व्रतमेतत्सुदुर्लभम्।
त्वत्प्रसादाद् गणेश त्वं सफलं कुरु सर्वदा॥

आवाहनं न जानामि० इति देवं विसृज्य वायनं दद्यात्–सफलान् सदक्षिणान् दश मोदकान् संस्थाप्य हिरण्यगर्भेति संपूज्य ॐ विष्णुः ३ अमुकोऽहं सिद्धिविनायकचतुर्थीव्रताङ्गत्वेन कृतायाः श्रीसिद्धिविनायकपूजायाः साद्गुण्यार्थं श्रीसिद्धिविनायकप्रीतये फलदक्षिणायुतानिमान् दश मोदकान् ब्राह्मणाय दास्ये

इति संकल्प्य ब्राह्मणं संपूज्य दद्यात्—

दशकं मोदकानां च फलदक्षिणया युतम् ।
वायनं देवतुष्ट्यर्थं विप्राय प्रददाम्यहम् ॥

ब्राह्मणश्च देवस्य त्वेति मन्त्रेण प्रतिगृह्य "कोऽदात्"इति कामश्रुतिं पठेत् आशिषं च दद्यात् । सुवर्णादिप्रतिमापक्षे पूर्वोक्तविधिना तां प्रदाय यथाशक्ति भूयसीं दत्त्वा "यस्य स्मृत्या०" इत्यादिना कर्मेश्वरार्पणं विधाय ब्राह्मणान भोजयेत्स्वयश्च दश मोदकान् भुञ्जीत ।

अथ ऋषिपञ्चमीव्रतविधिर्भविष्ये—

प्राप्ते भाद्रपदे मासे शुक्लपक्षे च पाण्डव ।
पञ्चम्यामृषयः पूज्या व्रतिन्या विधिपूर्वकम् ॥
तत्र प्रातर्नित्यकृत्यं दन्तधावनपूर्वकम् ।
कृत्वा मन्त्रेण नियमं गृह्णीयाच्छुचिमानसा ॥
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥
अथ मन्त्रेण संप्रार्थ्यापामार्गं च वनस्पतिम् ।
उत्पाट्य कुर्यात्समिधः शतमष्टोत्तरं तथा ॥
अथवा कारयेत्सप्त दन्तधावनहेतवे ।
चतुरङ्गुलमात्रं तु नारीणां दन्तधावनम् ॥
पञ्चगव्यं च साद्यस्कं गृहीत्वा कुशसंयुतम् ।
अथ मध्याह्नसमये नद्यादौ विमले जले ।
गत्वा संस्थाप्य सामग्रीं पाणिपादं च क्षालयेत् ॥
दन्तधावनमन्त्रेण दन्तान् संशोध्य यत्नतः ।
मुखं संशोध्य प्रक्षाल्य केशवाद्यैस्तु पञ्चभिः ॥
पञ्चगव्यं विधायाथ चतुर्थांशं हुनेज्जले ।
सप्तपत्राः शुभा दर्भा अक्षताश्च शुभत्विषः ॥

तैरेवोद्धृत्य होतव्यं षट्कायाग्न्यादयं ततः ।
शेषं सम्प्राश्य विधिवत्स्नायान्मृत्स्नानपूर्वकम् ॥
तिलामलककल्केन केशान् संशोध्य यत्नतः ।
परिधाय नवे शुद्धे वाससी च समाहिता ॥
जले देवान्नमस्कृत्य गच्छेच्च स्वगृहं पुनः ।
तत्र वेदीं प्रकुर्वीत गोमयेनोपलिप्य ताम् ॥
रङ्गवल्लीसमायुक्ते सर्वतोभद्रमण्डले ।
जलपूर्णं कुम्भमेकमव्रणं छिद्रवर्जितम् ॥
पञ्चरत्नसमोपेतं सहिरण्यं च कारयेत् ।
कण्ठदेशे वस्त्रयुक्तं फलगन्धाक्षतैर्युतम् ॥
स्थापयेच्च विधानेन ताम्रं वा मृन्मयं तथा ।
तस्योपरि न्यसेत्पात्रं रौप्यं वा ताम्रमेव वा ॥
वंशमृन्मयपात्रं वा यवपूर्णमृषिप्रियम् ।
आच्छादयेत्तं चैलेन तत्राष्टदलमालिखेत् ॥
तत्र सप्त ऋषीन् दिव्यान् स्थापयेत्सुसमाहिता ।
सारुन्धतीकान् सौवर्णान् राजतान्दर्भनिर्मितान् ।
अथवा पट्टलिखितान्पूजयेद्भक्तिसंयुता ।
कश्यपाद्येन मन्त्रेण दद्यात्सर्वोपचारकान् ॥
अथवा तु विधानोक्तैः पृथङ्मन्त्रैः प्रपूजयेत् ।
स्नापयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः ॥
समाच्छाद्य शुभैर्वस्त्रैः सोपवीतैर्यथाविधि ।
चन्दनागुरुकर्पूरैर्विलिप्य च सुगन्धिभिः ॥
पूजयेद्विविधैः पुष्पैर्धूपैर्दीपैस्तथैव च ।
नैवेद्यैश्च तथाऽनेकैरर्घ्यं दद्यात्फलैर्युतम् ॥
तेषामग्रे च श्रोतव्यं व्रतस्यास्य कथानकम् ।
ततः क्षमापयेद्भक्त्या ऋषींश्च प्रणता सती ॥

साक्षतं सहिरण्यं च कुम्भमृषिसमन्वितम् ।
विप्राय वेदविदुषे पुराणज्ञाय चार्पयेत् ॥
शाकाहारश्च कर्तव्यो नीवारैः श्यामकैस्तथा ।
कन्दं वाऽथ फलं मूलं हलकृष्टं न भक्षयेत् ॥
आचरेत्तु व्रतं चैवं सप्तवर्षं कुरूद्वह ।
ततश्चोद्यापनं कुर्यादुद्यापनविधानतः ॥ इति ।

**अथ ऋषिपञ्चमीव्रतपूजाप्रयोगः**—तत्र व्रतवती नारी भाद्रशुक्लपञ्चम्यां नित्यकर्म विधाय नद्यादौ व्रतं सङ्कल्पयेत्—ॐ विष्णुः ३ अद्येह अमुकसम्वत्सरे दक्षिणायने वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे ऋषिपञ्चम्यां पुण्यतिथौ अमुकगोत्रा अमुकराशिरमुकी देव्यहं प्रथमऋतुदर्शनादारभ्य शरीरावसानपर्यन्तमार्तवसंसर्गजनितदोषपरिहाराय शास्त्रोक्तफलावाप्तये ऋतुदर्शनपूर्वत आरभ्य यावज्जीवं सप्तवर्षं वा ऋषिपञ्चमीव्रतं करिष्ये । प्रमादादिना ऋतुदर्शनात्पूर्वं व्रताग्रहणे ऋतुदर्शननिवृत्त्यनन्तरं सप्तवर्षपर्यन्तमृषिपञ्चमीव्रतं करिष्ये इति संकल्पयेत् । जलपूर्णं ताम्रपात्रं करयोः कृत्वा—

अद्य वै ऋषिपञ्चम्यां करिष्येऽहं व्रतं शुभम् ।
ऋषीणां च प्रसादेन निर्विघ्नं जायतां मम ॥

इति शिरसा संयोज्य तज्जलं तीर्थजले क्षिपेत् । ऋषिभ्यो नमः इति नमस्कुर्याच्च । ततो गृहमागत्य मध्याह्नस्नानोपकरणानि सम्पादयेत् ।

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति अपामार्गमुद्धृत्याष्टोत्तरशतसंख्याकानि सप्तसंख्याकानि वा चतुरङ्गुलप्रमाणानि दन्तधावनानि निर्माय पवित्राणि पञ्चगव्यानि च समानीय मध्याह्ने नद्यादौ विमले जले गत्वा

प्राङ्मुखी दन्तधावनं कुर्यात्।

मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम्॥

इति दन्तान् संशोध्य मुखं प्रक्षाल्य आचम्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं मम कायवाङ्मनोदोषशुद्धये पञ्चगव्यं करिष्ये इति संकल्प्य ताम्रपात्रे केशवाय नमः गोमूत्रं, नारायणाय नमः गोमयं, माधवाय नमः दुग्धं, गोविन्दाय नमः दधि, विष्णवे नमः घृतं, मधुसूदनाय नमः कुशोदकं संस्थाप्य त्रिविक्रमाय नमः इति मन्थयेत्। ततः सिद्धस्य पञ्चगव्यस्य सप्तपर्णैः शुभैः साग्रैर्हरितकुशैरुद्धृत्य षडाहुतीर्जले जुहुयात्—अग्नये नमः, १ सोमाय० २ ब्रह्मणे० ३ विष्णवे० ४ रुद्राय० ५ सूर्याय० ६ शेषमश्नीयात्—

यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम्।
ब्रह्मकूर्चो दहेत्सर्वं तत्तदग्निरिवेन्धनम्॥

ततो मृत्स्नानम्—

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥

इति शिरःप्रभृतिअङ्गेषु मृत्तिकां विलिप्य ॐ विष्णुः ३ अद्येह शुभपुण्यतिथौ यथोक्तफलावाप्तये ऋषिपञ्चमीव्रताङ्गत्वेन ऋषिपूजनाद्यधिकारसिद्धये मध्याह्नस्नानं करिष्ये इति संकल्प्य तिलामलककल्केन केशान् संशोध्य गङ्गादितीर्थस्मरणपूर्वकं स्नात्वा शुद्धे नवे वाससी परिधाय आचम्य जले देवान्नमस्कृत्य गृहमागच्छेत्। ततो गृहस्य शुभे देशे वेदीं निर्माय गोमयेनोपलिप्य रङ्गवल्ल्यादिभिः सुशोभितां कृत्वा मध्ये सर्वतोभद्रं विलिख्य तत्र सुलक्षणं सुपूजितं ताम्रं मृन्मयं वा कुम्भं जलपूर्णं रत्नपञ्चरत्नहिरण्यपञ्चपल्लवाद्युपेतं कलशविधिना संस्थाप्य तदुपरि

यथासम्भवं रौप्यं ताम्रं मृन्मयं वा यवपूर्णं पात्रं संस्थाप्य वस्त्रेणाच्छादयेत्। तत्र चन्दनादिनाऽष्टदलमालिख्य तस्मिन सौवर्णान् राजतान् ब्रह्मग्रन्थियुतान् दर्भमयान्वा पट्टलिखितान्वा सारुन्धतीकान् सप्तर्षीन् संस्थाप्य पूजयेत्। प्राङ्मुखी उदङ्मुखी वा स्वासने उपविश्य दीपं प्रज्वाल्य आचम्य सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यादि विशेषार्घ्यान्तं सामान्यवद्विधाय पूजासंकल्पं कुर्यात्—विष्णुः ३ अद्येहेत्यादि अमुकसं० दक्षि० वर्षर्तौ भा० शु० ऋषि० पुण्यतिथौ अमुकगोत्रा अमुकराशिरमुकी देव्यहं मम प्रथमर्तुदर्शनादारभ्य शरीरावसानपर्यन्तं ज्ञानतोऽज्ञानतो वा रजस्वलावस्थाकृतसंपर्कजनितदोषपरिहारार्थं यथोक्तफलावाप्तये अरुन्धतीसहितकश्यपादिसप्तर्षिप्रीतये ऋषिपञ्चमीव्रताङ्गत्वेन यथामिलतोपचारैर्ऋषीणां पूजनं करिष्ये। सौवर्णादिप्रतिमासु अग्न्युत्तारणपूर्वकं प्रतिष्ठापनम्। कुशप्रतिमासु पट्टलिखितासु वा 'एतन्ते' 'मनोजूतिः' इत्यन्ते भूर्भुवःस्वः सारुन्धतीकाः सप्तर्षयः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ध्यायेत्—

**ॐ सप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम्। सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ (य० सं० ३४-५५)।**

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः।
जमदग्निर्वसिष्ठश्च अरुन्धत्या सहाष्टकाः॥
मूर्तिं ब्रह्मण्यदेवर्षेर्ब्रह्मण्यं तेज उत्तमम्।
सूर्यकोटिप्रतीकाशमृषिवृन्दं विचिन्तयेत्॥

आवाहनम्—ॐ सप्त ऋषयः० कश्यपोऽत्रि०

आवाहयाम्यहं सप्त मुनीन् ज्ञानविशारदान्।
पूज्यान सर्वस्य लोकस्य व्रतमाद्गुण्यकारणात्॥

आसनम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

ऋग्यजुःसामवेदानां स्वरूपेभ्यो नमो नमः।
पुराणपुरुषेभ्यो हि देवर्षिभ्योऽस्तु स्वासनम्॥

पाद्यम्—ॐ सप्तऋषयः० कश्यपोऽत्रि०

गन्धपुष्पाक्षतैर्युक्तं सुगन्धि विमलं जलम्।
पाद्यं तत्प्रतिगृह्णन्तु कश्यपाद्या महर्षयः॥

अर्घ्यम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

तापत्रयहरं दिव्यं गन्धपुष्पाक्षतैः सह।
सप्तर्षयः प्रगृह्णन्तु दत्तमर्घ्यं मया तु यत्॥

आचमनीयम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

कर्पूरवासितं तोयं सुवर्णकलशे स्थितम्।
ददाम्याचमनं भक्त्या ऋषीणां प्रीतये सदा॥

पञ्चामृतस्नानम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

पयो दधि घृतं चैव शर्करामधुसंयुतम्।
पञ्चामृतेन स्नपनं गृह्यतामृषिसत्तमाः॥

स्नानम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

गङ्गादिसर्वतीर्थेभ्य आनीतमृषिसत्तमाः।
शुद्धं गन्धोदकं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥

अरुन्धतीसहितकश्यपादिसप्तऋषिभ्यो नमः इति मन्त्रेण स्नानाङ्गमाचमनीयं०। वस्त्रम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च।
ऋषयः प्रतिगृह्णन्तु मुक्तिदाः सन्तु मे सदा॥

नाममन्त्रेण वस्त्राङ्गमाचमनीयं०। यज्ञोपवीतम्--ॐ सप्त ऋषयः० कश्यपोऽत्रि०

नानामन्त्रैः समुद्भूतं त्रिवृत्तं ब्रह्मसूत्रकम्।
प्रत्येकं च प्रयच्छामि ऋषीणां भावितात्मनाम्॥

नाममन्त्रेण यज्ञोपवीताङ्गमाचमनीयं० । गन्धः-ॐ सप्त ऋषयः० कश्यपोऽत्रि०

मलयोत्थं तापहरं सुगन्धि सुमनोहरम् ।
चन्दनं च प्रयच्छामि ऋषीणां भावितात्मनाम् ॥

अक्षताः--ॐ सप्तऋषयः० कश्यपोऽत्रि०

सुगन्धास्तण्डुलाः शुभ्राः प्रक्षाल्य च नियोजिताः ।
अक्षताश्च मया दत्तास्तान् गृह्णन्तु मुनीश्वराः ॥

पुष्पाणि--ॐ सप्तऋषयः० कश्यपोऽत्रि०

पुष्पाणि चम्पकादीनि मालत्यादीनि सर्वतः ।
मयाहृत्य कृता पूजा ऋषयः प्रतिगृह्यताम् ॥

ततः प्रत्येकं नामपूजा-कश्यपाय नमः १ अत्रये० २ भरद्वाजाय० ३ विश्वामित्राय० ४ गौतमाय० ५ जमदग्नये० ६ वसिष्ठाय० ७ अरुन्धत्यै० ८ ।

धूपः—ॐ सप्तऋषयः० कश्यपोऽत्रि०

कृष्णागुरुर्गुग्गुलुश्च सर्वसौगन्ध्यमिश्रितः ।
कश्यपादिमुनीनां च धूपार्थे दीयते मया ॥

दीपः--ॐ सप्तऋषयः० कश्यपोऽत्रि०

सुवर्तिघृतसंयुक्तमन्धकारविनाशनम् ।
नीराजनं कृतं सम्यगृषयस्तन्निरीक्ष्यताम् ॥

नैवेद्यम्--ॐ सप्तऋषयः० कश्यपोऽत्रि०

नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम् ।
गृह्णन्तु ऋषयः सर्वे नैवेद्यं सन्निवेदितम् ॥

मध्येपानीयं० । प्राणादिमुद्राभिर्निवेद्य क्षणं ध्यात्वा कश्यपाद्यष्टनामजपं विधाय गृह्णातीति समर्प्य नैवेद्यमुत्थाप्य नैवेद्याङ्गमाचमनीयं दत्त्वा करोद्वर्तनार्थे चन्दनं दद्यात्-ॐ सप्त ऋषयः० कश्यपोऽत्रि०

उष्णोदकं शुद्धिकरं शीतलं चन्दनान्वितम् ।
गृह्णन्तु मुनयः सर्वे हस्तोद्वर्तनकाङ्क्षिणः ॥

फलम्—ॐ सप्तऋषयः० कश्यपोऽत्रि०

नमो वेदविदां श्रेष्ठा ऋषयः सूर्यसन्निभाः ।
गृह्णन्त्विदं फलं तुष्टा मया दत्तं हि भक्तितः ॥

ताम्बूलम्—ॐ सप्तऋषयः० कश्यपोऽत्रि०

पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम् ।
त्रयोदशगुणोपेतं ताम्बूलं प्रतिगृह्यताम् ॥

दक्षिणा०—ॐ सप्तऋषयः० कश्यपोऽत्रि० हिरण्यगर्भ०

नीराजनम्-ॐ सप्तऋषयः० कश्यपोऽत्रि०

सुवर्तिघृतसंयुक्तमन्धकारविनाशनम् ।
नीराजनं कृतं सम्यगृषयस्तान्निरीक्ष्यताम् ॥

प्रदक्षिणाः—ॐ सप्तऋषयः० कश्यपोऽत्रि०

यानि यानि हि पापानि ब्रह्महत्यासमानि च ।
तानि तानि विनश्यन्तु प्रदक्षिणपदे पदे ॥

नमस्काराः—ॐ सप्तऋषयः० कश्यपोऽत्रि०

ब्रह्मर्षिभ्यो नमश्चास्तु देवर्षिभ्यो नमो नमः ।
सर्वपापहरेभ्यो हि वेदविद्भ्यो नमो नमः ॥

मन्त्रपुष्पाञ्जलिः—ॐ सप्तऋषयः०

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जगदग्निर्वसिष्ठश्च अरुन्धत्या सहाष्टकाः ॥
पूजां गृह्णीत मद्दत्तां तुष्टा भवत सर्वदा ।

अथ विशेषार्घ्यः-सुवर्णादिपात्रे फलगन्धपुष्पाक्षतयुताम्बुपूर्णमर्घ्यं संपाद्य जानुभ्यामवनीं गत्वा शिरसाऽभिप्रणम्य वक्ष्यमाणमन्त्राभ्यां द्विर्दद्यात्—कश्यपो०'''' सहाष्टकाः ॥ १ ॥

नभस्ये शुक्लपञ्चम्यामर्चिता ऋषिसत्तमाः ।

दहन्तु पापं मे सर्वं गृह्णन्त्वर्घ्यं नमो नमः ॥ २ ॥

प्रार्थना—

एते सप्तर्षयः सर्वे भक्त्या सम्पूजिता मया ।
सर्वं पापं व्यपोहन्तु ज्ञानतोऽज्ञानतः कृतम् ॥
इमे ते ऋषयः सप्त सर्वपापप्रणाशनाः ।
अस्माकं सन्तु सततं समीहितफलप्रदाः ॥

अथ वायनदानम्—घृतपक्वान्नफलपुष्पहिरण्यवस्त्रदक्षिणादि वैणवादिपात्रे निधाय हिरण्यगर्भ इत्यादिना सम्पूज्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकयहं यथोक्तफलावाप्तये ऋषिपञ्चमीव्रताङ्गत्वेन कृताया ऋषिपूजायाः साद्गुण्यार्थं सप्तर्षीणां प्रीतये ब्राह्मणाय वायनप्रदानं करिष्ये इति सङ्कल्प्य ब्राह्मणं सम्पूज्य दद्यात् । वायनं हस्ते गृहीत्वा—

वायनं फलसंयुक्तं सघृतं दक्षिणान्वितम् ।
द्विजवर्याय दास्यामि व्रतसम्पूर्तिहेतवे ॥
भवन्तः प्रतिगृह्णन्तु ज्योतीरूपास्तपोधनाः ।
उभयोस्तारकाः सन्तु वायनस्य प्रदानतः ॥

ब्राह्मणश्च 'कोऽदात्' इत्यादिना प्रतिगृह्याशिषो दद्यात् ।

क्षमापनम्—

न्यूनातिरिक्तकर्माणि मया यानि कृतानि च ।
क्षमध्वं तानि सर्वाणि यूयं सर्वे क्षमाधनाः ॥

ततो विसर्जनम्—

न्यूनातिरिक्तानि परिस्फुटानि
यानीह कर्माणि मया कृतानि ।
क्षम्याणि चैतानि मम क्षमध्वं
प्रयात तुष्टाः पुनरागमाय ॥
यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥

घटस्थापनप्रतिमापूजनपक्षे--सप्तर्षियुतघटदानसंकल्पः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकयहमृषिपञ्चमीव्रतस्य ऋषिपूजायाश्च साङ्गतासिद्ध्यर्थमृषिसहितं सहिरण्यवस्त्रकुम्भं ब्राह्मणाय दास्ये इति ब्राह्मणं सम्पूज्य दद्यात्--

साक्षतं सहिरण्यं च कुम्भमृषिसमन्वितम् ।
ऋषीणां प्रीतये दास्ये ब्राह्मणाय महात्मने ॥

यस्य स्मृत्या० अच्युताय नमः । विष्णवे नमः । कर्मेश्वरार्पणं कुर्यात् ।

**अथ अमुक्ताभरणसप्तमीव्रतविधिर्भविष्ये—**

लोमश उवाच --

भद्रे भाद्रपदे शुक्ले सप्तम्यां सलिलाशये ।
स्नात्वा शिवं मण्डलके लेखयित्वा सहाम्बिकम् ।
मध्याह्नेऽभ्यर्च्य समयं कुर्याद् बद्ध्वा करे गुणम् ।
यावज्जीवं मयात्मा तु शिवाय विनिवेदितः ।
इत्येवं समयं कृत्वा ततः प्रभृति डोरकम् ।
सौवर्णं राजतं वाऽपि सौत्रं वा धारयेत् करे ॥
सप्तग्रन्थियुतं तत्स्यात् सप्तसामोपबृंहितम् ।
शिवप्रसादजनकं शिवरूपं न संशयः ॥
मण्डकान् पैष्टकान् दद्यात् मासे मासेऽथवाऽब्दके ।
स्वयं तांश्चैव भुञ्जीत व्रतभङ्गभयाच्छुभे ।
प्रतिमासं तु सप्तम्यां शुक्लपक्षे विशेषतः ॥
कुर्यादेवं व्रतं भद्रे वर्षान्तेऽपि तु देवकि ।
पारणे मुद्रिकां हैमीं रौप्यां वाऽथ स्वशक्तितः ॥
ताम्रपात्रोपरि स्थाप्य ब्राह्मणाय निवेदयेत् ।
आचार्याय विशेषेण दातव्यं चाङ्गुलीयकम् ॥
पुष्पकुङ्कुमसिन्दूरताम्बूलाञ्जनसूत्रकैः ।

एवं तत्पारयित्वा तु व्रतं सन्ततिवर्धनम् ॥
सर्वपापविनिर्मुक्ता भुक्त्वा सौख्यमनामयम् ।
सन्तानं वर्धयित्वा च शिवलोके महीयते ॥
एतत्ते सर्वमाख्यानमाख्यातं व्रतमुत्तमम् ।
कुरु देवकि यत्नेन जीवत्पुत्रा भविष्यसि ॥

**अथ अमुक्ताभरणसप्तमीव्रतपूजाप्रयोगः**—तत्र व्रतवती प्रातर्नित्यकृत्यान्ते स्वासने उपविश्याचम्य सङ्कल्पं(१) कुर्यात्—ॐ विष्णुः ३ अद्येह देशकालकीर्तनान्ते अमुकदेव्यहं श्रीसाम्बसदाशिवप्रसादसिद्धिद्वारा इहामुत्र च सुखसन्ततिसौभाग्यसमृद्ध्यै अमुक्ताभरणसप्तमीव्रतं करिष्ये । सजलं ताम्रपात्रं करयोः कृत्वा नियममन्त्रं पठेत्—

नभस्यासितसप्तम्यां व्रतं गृह्णाम्यहं प्रभो ।
तव प्रसादसिद्ध्यर्थं सुखसन्ततिवृद्धये ॥
डोरकं धारयिष्यामि सप्तग्रन्थिसमन्वितम् ।
यावज्जीवं मयात्मा तु शिवाय विनिवेदितः ॥

इति जलं भूमौ क्षिपेत् ।

अथ व्रतवती स्त्री पूजामण्डलं सुभूषितं विधाय तत्र मण्डले अम्बिकासहितं शिवं पञ्चवर्णं विलिख्य सौवर्णं राजतं सौत्रं वा सप्तग्रन्थियुतं डोरकं विधाय पूजासामग्रीं सम्पाद्य मध्याह्नस्नानार्थं जलाशयं गच्छेत् । जलाशयं प्राप्य उदकं नत्वा हस्तौ पादौ प्रक्षाल्य आचम्य तिलामलककल्कैः स्नायात् । ॐ विष्णुः ३ अमुकदेव्यहं अमुक्ताभरणसप्तमीपूजाद्यधिकारसिद्धये मध्याह्नस्नानं करिष्ये । स्नात्वा शुद्धे वाससी परिधाय गृहमागत्य पूजां कुर्यात् । शुचिः समाहिता स्वा-

---

(१) नवीनव्रतग्रहणे तु ॐ विष्णुः ३ अद्येहेत्यादि ( १३२ पृ० ) पूर्ववत् ।

सने उपविश्य दीपं प्रज्वाल्याचम्य सुमुखश्चेत्यादि पुष्पाञ्जल्यर्पणादि विशेषार्घस्थापनान्ते पूजासङ्कल्पं कुर्यात्— ॐ विष्णुः ३ अद्येहामुकीदेव्यहं श्रीसाम्बसदाशिवप्रीतिपूर्वकमैहिकामुष्मिकसकलसुखसौभाग्यसन्ततिवृद्धये अमुक्ताभरणसप्तमीव्रतं करिष्ये। तदङ्गत्वेन पट्टालिखितयोः श्रीगौरीमहेश्वरयोः यथामिलितोपचारैः पूजनं करिष्ये। तत्पूर्वाङ्गत्वेन प्राणप्रतिष्ठां च करिष्ये। 'एतन्ते'० 'मनोजूतिः' इत्यादि पठित्वा भूर्भुवःस्वः श्रीगौरीमहेश्वरौ इहागच्छतम् इह तिष्ठतम् सुप्रतिष्ठितौ वरदौ भवतम्। भूर्भुवःस्वः दोरक सुप्रतिष्ठितो वरदो भव। ध्यानम्—

ध्यायेन्नित्यं महेशम्०।
कैलासशिखरासीनं वृषारूढं पिनाकिनम्।
कर्पूरस्फटिकाभासमुमया सह चिन्तयेत्॥
पञ्चाननं दशभुजं शरच्चन्द्रमहोज्ज्वलम्।
ध्यायेत्प्रसन्नमनसमम्बिकासहितं शिवम्॥

आवाहनम्—
देवदेवं महादेवं चन्द्रचूडं महाद्युतिम्।
गजचर्मपरीधानं सोममावाहयाम्यहम्॥

आसनम्—
शङ्कराय नमस्तुभ्यं नमस्त्रिपुरहारिणे।
नमस्तेऽस्तु महादेव स्वास्यतामासने प्रभो॥

पाद्यम्—
विश्वेश्वर नमस्तुभ्यं विश्वरूप नमोऽस्तु ते।
हिमाचलसुतानाथ पाद्यं मे प्रतिगृह्यताम्॥

अर्घ्यम्—
नीलकण्ठ महास्थाणो चन्द्रसूर्याग्निलोचन।
गृहाणार्घ्यं मया दत्तमुमया सह शङ्कर॥

आचमनम्—

पञ्चवक्त्र नमस्तुभ्यमन्धकासुरसूदन ।
गङ्गाधर महादेव शङ्कराचम्यतां प्रभो ॥

स्नानम्—

सितासितजलं पूर्णं गोदाजलसमन्वितम् ।
मया दत्तं जलं तुभ्यं स्नानार्थं शङ्कराय च ॥

श्रीगौरीमहेश्वराभ्यां नमः स्नानाङ्गमाचमनीयं० । वस्त्रम्-

वासो दश दिशो यस्य विश्वस्य परमात्मने ।
वस्त्रयुग्मं प्रयच्छामि तस्मै देवाय ते नमः ॥

नाममन्त्रेण वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतम्—

उपवीतं सोत्तरीयं नानाभूषणभूषितम् ।
गृहाण सोम विमलं मया दत्तमिदं शुभम् ॥

नाममन्त्रेण यज्ञोपवीताङ्गमाचमनीयं० । गन्धः—

गन्धं कर्पूरसंयुक्तं सुगन्धि सुमनोहरम् ।
विलेपनं प्रयच्छामि शिवायामिततेजसे ॥

नाममन्त्रेण अक्षतान् । पुष्पाणि—

माल्यादीनि सुगन्धीनि देशकालोद्भवानि च ।
पूजार्थं समुपात्तानि पुष्पाणि प्रतिगृह्यताम् ॥

धूपः—

त्रैलोक्यपावनानन्त परमात्मन् जगद्गुरो ।
चन्दनागुरुकर्पूरधूपं दास्यामि शङ्कर ॥

दीपः—

पुरत्रयं पुरा येन दीपितं विशिखाग्निना ।
तस्मै दीपं प्रयच्छामि शिवायामिततेजसे ॥

नैवेद्यम् —

यस्य कण्ठे कालकूटः अमृतादातिरिच्यते ।

दद्‌ामि तस्मै नैवेद्यं यथाशक्ति शिवाय च ॥

मध्येपानीयं० क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रजपं विधाय गुह्यातीति समर्प्य नैवेद्यमुत्थाप्य शेषं चण्डीश्वराय समर्प्य नाममन्त्रेण नैवेद्याङ्गमाचमनीयं दत्त्वा करोद्वर्तनं दद्यात्—

कस्तूरिकासमायुक्तं मलयाचलसंभवम् ।
गृहाण चन्दनं सोमं करोद्वर्तनके शुभम् ॥

फलम्—

नारिकेलफलं जम्बुफलं नारिङ्गमुत्तमम् ।
कूष्माण्डं पुरतो भक्त्या कल्पितं प्रतिगृह्यताम् ॥

पूगीफलम्—

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

दक्षिणा-हिरण्यगर्भ० । नीराजनम्-अन्तस्तेजो० । श्रीगौरीमहेश्वराभ्यां नमः इति सर्वोपचारार्थे पुष्पाञ्जलिं समर्प्य प्रदक्षिणा-यानि कानि च० । नमस्कारः-

यस्य शक्रादयो देवा नमन्ति चरणाम्बुजम् ।
तस्मै शिवाय शान्ताय नमस्कारं करोम्यहम् ॥

प्रार्थना—

महादेव महाराज प्रीत्या पापप्रणाशन ।
अस्माकं कुर्वतां पूजां साधु वाऽसाधु योजिताम् ॥
ज्ञानतोऽज्ञानतो वाऽपि भवतो विहितां च याम् ।
तां पूरय महादेव कृपया दीनवत्सल ॥

नवीनदोरकग्रहणम्—

देवदेव जगन्नाथ सर्वसौभाग्यदायक ।
गृह्णीयां दोररूपं त्वां पुत्रपौत्राविवर्धनम् ॥

इति दोरकं गृहीत्वा—

सप्तसामोपगीतं त्वां सप्तलोकमहेश्वरम् ।
सूत्रग्रन्थिस्थितं नित्यं धारयामि स्थिरो भव ॥

इति संधार्य गन्धपुष्पैः पूजयेत् । अथ जीर्णदोरकोत्तारणम्-

हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे ।
प्रसन्नः सन्नुमाकान्त दीर्घायुःपुत्रदो भव ॥ इति ।

अथ वायनदानम्—

मण्डकान् पैष्टकानाज्यपाचितान् दक्षिणायुतान् ।
एकादश शुभान् कृत्वा ब्राह्मणाय कुटुम्बिने ॥
वेदशास्त्रप्रवीणाय दद्यात्सोमस्य तुष्टये ॥

तत्र संकल्पः-ॐ विष्णुः ३ अद्येह अमुकी देव्यहममुक्ताभरणसप्तमीव्रते कृताया गौरीमहेश्वरपूजायाः साद्गुण्यार्थं साङ्गतासिद्धये इदं वायनं ब्राह्मणाय दास्ये । ब्राह्मणमर्घ्यादिभिः सम्पूज्य दद्यात् । तत्र मन्त्रः—

शङ्करः प्रतिगृह्णाति शङ्करो वै ददाति च ।
शङ्करस्तारकोभाभ्यां शङ्कराय नमो नमः ॥

इति वायनं दत्त्वा क्षमापनम्—

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥

विसर्जनम्--मन्त्रहीनमित्यादि ।

न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि ।
क्षम्याणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय ॥

अथ दूर्वाष्टमीव्रतविधिर्हेमाद्रौ भविष्ये--

प्राप्ते भाद्रपदे मासि शुक्लाष्टम्यां द्विजोत्तम ।
स्नात्वा शुचिः शुचौ देशे जातं चामृतसंभवम् ॥

दूर्वाप्रतानं सुश्वेतमुत्तराशाभिगामिनम् ।
पूजयेद् गृहमानीय गन्धमाल्यानुलेपनैः ॥
फलैर्मूलैश्च नैवेद्यैर्धूपदीपादिभिस्तथा ।
सर्वोपचारपूजां तु मन्त्राभ्यामर्पयेत्सदा ॥
त्वं दूर्वेऽ.........................
.........................................त्वमजरामरम् ।
अग्निपक्वं तथा सर्वं न निवेद्यं कथञ्चन ॥
भोक्तव्यं च तथा ब्रह्मन्नग्निपक्वविवर्जितम् ।
दद्यात्फलानि विप्रेभ्यः फलाहारी स्वयं भवेत् ॥
प्रणम्य शिरसा दूर्वां शिवां शिवमुपाश्नुते । इति ।

अथ दूर्वाष्टमीव्रतपूजाप्रयोगः--व्रतवती प्रातः स्नानादिनित्यकृत्यान्ते स्वासने उपविश्याचम्य संकल्पं(१) कुर्यात्-ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहमक्षयसौभाग्यसन्ततिप्राप्तये दूर्वाष्टमीव्रतं करिष्ये । सजलं ताम्रपात्रं करयोः कृत्वा—

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु त्वत्प्रसादात्सुरेश्वरि ॥

इति जलं देवाग्रे भूमौ क्षिपेत् । ततो गृहमण्डनमण्डलादि यथाचारं विधाय नद्यादौ मध्याह्नस्नानं कुर्यात् । तत्र संकल्पः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये दूर्वाष्टमीव्रताङ्गत्वेन दूर्वापूजाधिकारसिद्धये मध्याह्नस्नानं करिष्ये । ततः सुभूमिजं सुश्वेतमुत्तराशाभिगामिनं दूर्वाप्रतानं 'दूर्वायै नमः' 'शिवायै नमः' इति नत्वा उत्पाट्य गृहमानीय मण्डले स्थापयेत् । आचारात्कण्ठधार्याणि

(१) याभिरमुक्ताभरणसप्तमीव्रतं दूर्वाष्टमीव्रतं चोभयमनुष्ठीयते ताभिर्द्वितीयदिने व्रतग्रहणप्रकारो नानुष्ठेयः । पूर्वदिने एव व्रतग्रहणेन तत्सिद्धेः।

सौभाग्यसूत्राणि च तत्र संस्थाप्य शुचिः शुचौ देशे स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिं समर्पयेत् । ततः सामान्यार्घादिविशेषार्घस्थापनान्ते पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहमक्षयसौभाग्यसन्ततिप्राप्तये दूर्वाष्टमीव्रताङ्गत्वेन दूर्वाया यथामिलितोपचारैः पूजनं करिष्ये । प्रतिष्ठा—"एतन्ते०" "मनोजूतिः" भूर्भुवःस्वः दूर्वे सुप्रतिष्ठिता भव । सौभाग्यसूत्राणि च सुप्रतिष्ठितानि भवन्तु । ध्यानम्—

त्वं दूर्वेऽमृतजन्मासि वन्दिताऽसि सुरासुरैः ।
सौभाग्यं सन्ततिं दत्त्वा सर्वकार्यकरी भव ॥
यथा शाखाप्रशाखाभिर्विस्तृताऽसि महीतले ।
तथा ममापि सन्तानं देहि त्वमजरामरम् ॥

श्री दूर्वायै नमः । अनेनैव मन्त्रेण आवाहनं १ आसनं २ पाद्यं ३ अर्घ्यं ४ आचमनीयं ५ स्नानं ६ वस्त्रम् ७ यज्ञोपवीतं ८ गन्धं ९ पुष्पाणि १० धूपम् ११ दीपम् १२ नैवेद्यं १३ प्रदक्षिणां १४ नमस्कारं १५ मन्त्रपुष्पाञ्जलिं १६ नानाविधानि फलानि ताम्बूलं दक्षिणाम् आरार्तिक्यम् प्रार्थनां च समर्प्य अन्यथा शरणमिति क्षमाप्य दक्षिणासङ्कल्पं कुर्यात्—देयद्रव्यं सम्प्रोक्ष्य सम्पूज्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं यथोक्तफलावाप्तये दूर्वाष्टमीव्रताङ्गत्वेन कृतायाः श्रीदूर्वापूजायाः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणाय दास्ये । ब्राह्मणं सम्पूज्य अनेकफलसंयुतां दक्षिणां तस्मै दद्यात् । आशीर्ग्रहणान्ते ब्राह्मणाज्ञया कण्ठसूत्राणि सौभाग्यवतीभ्यः प्रतिपाद्य स्वयं च धारयेत् । तत आवाहनं न जानामीत्यादिना विसृज्य पुनर्दर्शनमस्तु इति संप्रार्थ्य विष्णवे नमः, कायेन वाचा मनसेत्यादिना कर्मेश्वरार्पणं कुर्यात् । अनग्निपक्कं फलाहारादिकं

कुर्यात् । इति दूर्वाष्टमीव्रतपूजाप्रयोगः ॥

अथ महालक्ष्मीव्रतविधिः—

भाद्रे मासि सिताष्टम्यां प्रारम्भोऽस्य विधीयते ।
प्रातः षोडशवारं तु प्रक्षाल्याङ्घ्रिकरौ मुखम् ॥
तन्तुषोडशसंसिद्धं ग्रन्थिषोडशसंयुतम् ।
मालतीपुष्पकर्पूरचन्दनागरुचर्चितम् ॥
लक्ष्म्यै नमोऽस्तु मन्त्रेण प्रतिग्रन्थ्यभिमन्त्रितम् ।
धनं धान्यं ..............................
..............................महालक्ष्मि प्रयच्छ मे ।
मन्त्रेणानेन बध्वाऽथ दोरकं दक्षिणे भुजे ॥
प्रार्थयीत व्रतादेशं मन्त्रेणानेन स व्रती ।
करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः ॥
तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः ।
एवं व्रतं गृहीत्वा तु नक्तकाले समाहितः ॥
स्नातः शुक्लाम्बरधरो व्रती पूजागृहं विशेत् ।
तत्रोपविश्य पूर्वास्यश्चारुधौतासनोपरि ॥
श्वेतपात्रे लिखेदष्टदलं कमलमुज्ज्वलम् ।
ऐन्द्र्यादिशक्तिसंयुक्तपार्श्वपत्रं सकेसरम् ॥
कर्णिकायां ततो लक्ष्मीं कर्पूरक्षोदपाण्डुराम् ।
ध्यायेत शुभ्रवस्त्रेति महालक्ष्मीति चाह्वयेत् ॥
आलयं तेऽतिसंवेश्य गङ्गेति सलिलेति च ।
पाद्यं दत्त्वा न मे जन्मेत्यर्घ्यं दद्याद्धि भक्तितः ॥
वेदमन्त्रेण संस्नाप्य वस्त्रं दद्याच्च तन्त्विति ।
स्नानादिकेत्याचमनं गन्धं तु मलयेति च ॥
अक्षतेत्यक्षतान् पुष्पं चञ्चत्परिमलेति च ।
काण्डानि षोडशादाय तत्संख्यानक्षतानथ ॥

श्रीसूक्तैरर्चयेद्देवि काण्डादक्षन्नमीति च ।
ततः पुष्पाणि संगृह्य पूजयेन्नामभिः पृथक् ॥
चञ्चलायै नमः ........ कुसुमं नमः ।
गन्धेति च तथा धूपं दीपं मार्तण्डमण्डला ॥
देवतालयेति नैवेद्यं पातालतलसम्भवम् ।
इति ताम्बूलकं दत्त्वा ततोऽन्तस्तेज इत्यथ ॥
कृत्वा नीराजनं त्वर्घ्यं न मे जन्मानि दापयेत् ।
विष्णोर्वक्षेति संप्रार्थ्य देवीं त्रिभुवनेश्वरीम् ॥
एवं सम्पूज्य विधिवद्वायनन्त्विन्दिरेति च ।
दद्यात्तु षोडशापूपान् गोधूमानां द्विजातये ॥
स्वयं तत्संख्यकान् भुक्त्वा रात्रौ नियमवान् भवेत् ।
काण्डानि षोडशादाय दूर्वाया अक्षतांस्तथा ॥
एकाचित्तः कथां श्रुत्वा पूजयेत्तं च दोरकम् ।
एवमेतां समारभ्य यावदेत्यसिताष्टमी ॥
कृत्वाऽन्वहं च शृणुयाद्भक्तियुक्तः कथां तथा । इति ।

अथ महालक्ष्मीव्रतपूजाप्रयोगः—तत्र व्रतकर्ता भाद्रपदशुक्लाष्टम्यां हस्तौ पादौ मुखं च षोडशवारं प्रक्षाल्य प्रातः स्नानादिनित्यकृत्यं यथावत्कृत्वा श्रीमहालक्ष्मीं ध्यायन् गृहस्यैशाने पूजास्थानं सम्भूष्य तत्र सुभूषितां मण्डपिकां विधाय सर्वतोभद्रे श्रीप्रतिमालेखनार्थं राजतं श्वेतपात्रं कर्पूरागुरुचन्दनानि च सर्वपूजासामग्रीं विशेषतः शङ्खार्घ्यं श्वेतवस्त्रं मालतीपुष्पादिश्वेतपुष्पाणि षोडशप्रकाराणि षोडशधा नैवेद्यं फलानि च पिष्टादिनिर्मितान् घृतवर्तिसमन्वितान् षोडशदीपान् यथाशक्ति अन्यत्सर्वं च सम्पाद्य षोडशतन्तुसंसिद्धं षोडशग्रन्थिसंयुतं दोरकं च निर्माय तत्र स्थापयेत् । ततो मध्यान्हस्नानादिकं विधाय शुचिः समाहितः पूजागृहं प्रविश्य पूर्वाभिमुखः स्वासने उपविश्य

व्रतस्वीकारसंकल्पं(१) कुर्यात्-ॐ विष्णुः ३ अद्येहेत्यादि वर्षेतौ भाद्रपदे मासे शुक्लपक्षेऽष्टम्यां तिथौ सपत्नीकोऽहं सकलपापक्षयपूर्वकं मम सकुटुम्बस्य स्थैर्यायुरारोग्यैश्वर्याभिवृद्धये श्रीमहालक्ष्मीप्रसादपूर्वकचतुर्वर्गसिद्धये अद्यारभ्य षोडशवर्षपर्यन्तं श्रीमहालक्ष्मीव्रतं करिष्ये । तत्पूर्वाङ्गत्वेन दोरकस्य प्रतिष्ठापूजनपुरःसरं धारणं च करिष्ये ।

ततः सुप्रक्षालितं कर्पूरागुरुचन्दनमालतीपुष्पचार्चितं दोरकम् "मनोजूतिः" "एतन्ते" इत्यादिमन्त्राभ्याम् ॐ भूर्भुवःस्वः दोरक सुप्रतिष्ठितो भव इति प्रतिष्ठाप्य ॐ लक्ष्म्यै नमोऽस्तु इति मन्त्रेण षोडशग्रन्थीन् प्रत्येकमभिमन्त्र्य एतेनैव मन्त्रेण कर्पूरागुरुचन्दनमालतीपुष्पैः सम्पूज्य दक्षिणहस्ते (२)धारयेत्—

धनं धान्यं धरां धर्मं कीर्तिमायुर्यशः श्रियम् ।
तुरगान्दन्तिनः पुत्रान् महालक्ष्मि प्रयच्छ मे ॥

ततस्ताम्रपात्रं जलपूर्णं करयोः कृत्वा—

करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः ।
तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः ॥

इति जलं देवाग्रे भूमौ क्षिपेत् । ततः कर्पूरागुरुचन्दनं संपाद्य स्थापिते श्वेतपात्रेऽष्टदलं कमलं सकेसरेषु पत्रेषु इन्द्रादिशक्तीः पूर्वादिक्रमेण मध्ये कर्णिकायां 'श्वेतवस्त्रपरीधानाम्' इत्याद्युक्तलक्षणां श्रीप्रतिमां च विलिख्य स्थापयेत् । ततो दीपं प्रज्वलय्य दीपस्थदेवतायै नमः इति पुष्पाक्षतैः संपूज्य आचम्य सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिं समर्प्य

---

(१) नवीनव्रतग्रहणे तु-ॐ विष्णुः ३ अद्येहेत्यादि (१३२ पृ०) पूर्ववत् ।

(२) समाचारात्पूजासमय एव दोरकबन्धनं कार्यम् । पूजारम्भश्च अपराह्णे क्वचित्सायान्हे वा शिष्टैरनुष्ठीयते ।

स्वेष्टदेवतां गुरुं च प्रणम्य सामान्यार्घ्यस्थापनादिविशेषार्घ्य-स्थापनान्ते तज्जलेन पवित्रगृहीतेन—

ॐ महालक्ष्म्यै विद्महे महाश्रियै धीमहि। तन्नः श्रीः प्रचोदयात्। इति आत्मानं पूजासामग्रीं च सम्प्रोक्ष्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कृतसङ्कल्पसिद्धये महालक्ष्मीव्रताङ्ग-त्वेन पात्रलिखितमूर्तौ श्रीमहालक्ष्म्याः अद्यारभ्य आश्विन-कृष्णाष्टमीपर्यन्तम् ( एकदिनात्मकव्रतप्रयोगे तु निशीथाष्टम्यां ) षोडशोपचारैः पूजनं करिष्ये । ततः पीठपूजां विधाय मध्ये कर्णिकायां ॐ नमो भगवत्यै सकलशक्तियुतायै योगपीठात्मकायै श्रीपरमदेवतायै नमः इति पीठे पुष्पाञ्जलिं समर्पयेत् । ततः "एतन्ते" "मनोजूतिः" इति पठित्वा ॐ भूर्भुवःस्वः महालक्ष्मि इहागच्छेह तिष्ठ सुप्रतिष्ठिता वरदा भव । ततः प्राणप्रतिष्ठा—देवताया हृदि दक्षिणं करं दत्त्वा ॐ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं श्रीमहालक्ष्म्याः प्राणाः सर्वेन्द्रियाणि च इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति।

अथावरणपूजा—पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य तदाग्ने-यादिक्रमेण तत्कुर्यादिति सर्वत्र। तत्र प्रथमं कर्णिकायां देव्या आग्नेये—ॐ हिरण्मय्यै नमः हृदयाय नमः १ ईशाने—ॐ चन्द्रायै० शिरसे स्वाहा २ नैर्ऋत्ये—ॐ रजतस्रजायै० शिखायै वषट् ३ वायव्ये—ॐ हिरण्यस्रजायै० कवचाय हुम् ४ देव्या अ-ग्रतः—ॐ हिरण्यायै नमः नेत्रत्रयाय वौषट् ५ पुरत आरभ्य चतुर्दिक्षु—ॐ हिरण्यवर्णायै० हिरण्यवर्णायै अस्त्राय फट् इति मन्त्रमावर्तयेत् । मध्ये—ॐ श्रीमहालक्ष्म्यै श्रियै नमः । दक्षिणपार्श्वे—ॐ शङ्करनन्दनाय नमः । ॐ शङ्खनिधये नमः। वामपार्श्वे—ॐ पुष्पाञ्जलिपुटाय नमः ॐ पुष्पध-न्विने नमः ॐ पद्मनिधये नमः।

पुरतः–दक्षिणपादप्रक्षालनोद्यतायै ॐ जन्हुसुतायै नमः वामपादप्रक्षालनोद्यतायै ॐ सूर्यसुतायै नमः । पृष्ठतः धृतातपत्रायै ॐ वरुणायै नमः ।

पुष्पाञ्जलिः—

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

ततः पुरत आरभ्य प्रादक्षिण्यक्रमेणाष्टदलमध्येषु–ॐ पद्मायै नमः १ ॐ पद्मवर्णायै० २ ॐ पद्मस्थायै० ३ ॐ आर्द्रायै० ४ ॐ तर्पयन्त्यै० ५ ॐ तृप्तायै० ६ ॐ ज्वलन्त्यै० ७ ॐ स्वर्णप्राकारायै० ८ पुष्पाञ्जलिः–अभीष्टसिद्धिं० द्वितीयावरणार्चनम् ॥

ततोऽष्टदलाग्रेषु— ॐ इन्द्राय० ॐ अग्नये० ॐ यमाय० ॐ निर्ऋतये० ॐ वरुणाय० ॐ वायवे० ॐ कुबेराय० ॐ ईशानाय० पश्चिमनिर्ऋतिमध्ये–ॐ अनन्ताय० पूर्वेशानमध्ये—ॐ ब्रह्मणे० ॐ आदित्यादिग्रहेभ्यो० ॐ मेषादिराशिभ्यो० ॐ ज्योतिश्चक्राय० । पुष्पाञ्जलिः— अभीष्टसिद्धिं० तृतीयावरणार्चनम् ॥

ततोऽष्टदलाद्बहिः–इन्द्रादिसमीपे तत्क्रमेण ॐ वज्राय० ॐ शक्तये० ॐ दण्डाय० ॐ खड्गाय० ॐ पाशाय० ॐ अङ्कुशाय० ॐ गदायै० ॐ त्रिशूलाय० ॐ चक्राय० ॐ पद्माय० । अष्टदलमूलेषु—ॐ ऐरावताय० पुण्डरीकाय० ॐ वामनाय० ॐ कुमुदाय० ॐ अञ्जनाय० ॐ पुष्पदन्ताय० ॐ सार्वभौमाय० ॐ सुप्रतीकाय० पुष्पाञ्जलिः—अभीष्टसिद्धिं० चतुर्थावरणार्चनम् ।

ॐ श्रीं ह्रीं क्लीं श्रीमहालक्ष्म्यै श्रियै नमः अभीष्टसिद्धिं० सम्पूर्णावरणार्चनम् । इति देवतायां पुष्पाञ्जलिं समर्पयेत् ।

ध्यानम्—

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरभासोज्ज्वलां
रत्नाकल्पविभूषणां कुचनतां शालैः करैर्मञ्जरीः ।
पद्मे कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सुस्मितां
फुल्लाम्भोजविलोचनत्रययुतां ध्यायेत्परां देवताम् ॥

शुभ्रवस्त्रपरीधानां मुक्ताभरणभूषिताम् ।
पङ्कजासनसंस्थानां स्पर्शाननसरोरुहाम् ॥
शारदेन्दुकलाकान्तिस्निग्धनेत्रां चतुर्भुजाम् ।
पद्मयुग्मामभयदां वरव्यग्रकराम्बुजाम् ॥
अभितो हस्तियुग्मेन सिच्यमानां कराम्बुभिः ।
सञ्चिन्त्यैवं यजेद्देवीं कर्पूरागुरुचन्दनैः ॥
अमलकमलसंस्थातद्रजःपुञ्जवर्णा
करकमलधृतेष्टा भीतियुग्माम्बुजा च ।
मणिमुकुटविचित्रालङ्कृता कल्पजालै-
र्भवतु भुवनमाता सन्ततं श्रीः श्रियै नः ॥

आवाहनम्—

महालक्ष्मि समागच्छ पद्मनाभपदादिह ।
पञ्चोपचारपूजेयं त्वदर्थं देवि सम्भृता ॥

आसनम्—

आलयं ते निगदितं कमलं कमलालये ।
अमले कमले ह्यस्मिन् स्थितिं मत्कृपया कुरु ॥

पाद्यम्—

गङ्गादिसलिलाधारतीर्थतोयादिपूरितम् ।
दूरयात्राश्रमहरं पाद्यं मे प्रतिगृह्यताम् ॥

अर्घ्यम्—

न मे जन्मनि सौभाग्यं न मे जन्मदरिद्रता ।

महालक्ष्मि नमस्तुभ्यमर्घ्यं मे प्रतिगृह्यताम् ॥

ॐ श्रीमहालक्ष्म्यै श्रियै नमः इति अर्घ्याङ्गमाचमनीयम्। स्नानम्-ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणा-मुम्मऽइषाण सर्वलोकम्म इषाण। (य० सं० ३१ मं० २२)

आचमनीयम्--

स्नानादिकं विधायापि यतः शुद्धिरवाप्यते।
तदेव्याचमनीयं ते महालक्ष्मि विधीयताम् ॥

वस्त्रम्--

तन्तुसन्तानसंसक्तं कलाकौशेयकल्पितम्।
सर्वाङ्गाभरणं दिव्यं वसनं परिधीयताम् ॥

सौभाग्यद्रव्यं च समर्प्य वस्त्राङ्गमाचमनीयम्। गन्धः-

मलयाचलसंभूतं नानापन्नगरक्षितम्।
शीतलं बहुलामोदं चन्दनं प्रतिगृह्यताम् ॥

अक्षताः--

ॐ अक्षन्नमीमदन्त ह्यवप्प्रिया अधूषत। अस्तोषत स्वभानवो विप्रानविष्ठयामती योजा न्विन्द्र ते हरी॥

पुष्पाणि--

चञ्चत्परिमलामोदं मत्तालिकुलसंकुलम्।
आनन्दिनन्दनोद्भूतं पद्मायै कुसुमं नमः ॥

अथ षोडशसंख्याकान् दूर्वापल्लवान् अक्षतांश्च गृहीत्वा श्रीसूक्तेन काण्डात् काण्डात्० अक्षन्नमीमदन्त० इति मन्त्राभ्यां च समर्पयेत्। ॐ हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः आद्यास्तिस्रोऽनुष्टुभः चतुर्थी प्रस्तारपङ्क्तिः पञ्चमीषष्ठ्यौ त्रिष्टुभौ सप्तम्यादिचतुर्दशीपर्यन्ता अनुष्टुभः पञ्चदशी प्रस्तारपङ्क्तिः छन्दांसि सर्व-

मन्त्राणां श्रीर्देवता ह्रीं बीजं क्लीं कीलकम् अलक्ष्मीपरिहाराय महालक्ष्मीप्रसादसिद्ध्यर्थे श्रीसूक्तपाठे विनियोगः ।

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१॥
ताम्मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥

कां सोऽस्मितां हिरण्यप्राकारामार्द्रां
ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां
तामिहोपह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं
श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनीमीं शरणं प्रपद्ये
ऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥
आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु
मायान्तरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
कर्दमेन प्रजाभूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१३॥
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१४॥

तां मऽआवह जातवेदो
लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्
विन्देयं पुरुषानहम् ॥ १५ ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥
या लक्ष्मीः सिन्धुसम्भूता भूतिधेनुः प्रभुर्वसुः ।
पद्मा विश्वावसुर्देवी सदा नो जुषतां गृहम् ॥१७॥
पद्मानने पद्म ऊरू पद्माक्षि पद्मसम्भवे ।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥१८॥

पद्मानने पद्मिनि पद्मपत्रे
पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनोनुकूले
स्वपादपद्मं मयि संनिधत्स्व ॥ १९ ॥

अश्वदायि गोदायि धनदायि महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥२०॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरीरथैः ।
प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥२१॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणो धनमुच्यते ॥ २२ ॥
वैनतेय सोमं पिब सोमं पिब वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥२३॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२४॥

सरसिजनिलये सरोजहस्ते
धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ २५ ॥

चन्द्राभां लक्ष्मीमीशानीं सूर्याभां लक्ष्मीमीश्वरीम्
चन्द्रसूर्याग्निसंकाशां श्रियं देवीमुपास्महे ॥ २६ ॥
श्रीर्वर्चः स्वमायुष्यमारोग्यं माविधात्पवमानं महीयते
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः २

सौवर्णं पद्म सद्मामलकपलकृतं युग्मशः पाणियुग्मे
बिभ्रन्ती शोभयोद्ग्राहितजलधिजलोच्छन्नगात्री विधात्री ।
बाहुद्वन्द्वकराऽभयार्द्रहृदया भक्तप्रियोल्लासिनी
लक्ष्मीर्मे भवने वसत्यनुदिनं चन्द्रा हिरण्मय्यपि ॥
ॐ काण्डात्काण्डात्० ॐ अक्षन्नमीमदन्तह्यवप्रिया०

अथ पुष्पाक्षतैरङ्गपूजा—

चपलायै नमः पादौ चञ्चलायै च जानुनी ।
कटिं कमलवासिन्यै नाभिं ख्यात्यै नमो नमः
स्तनौ मन्मथवासिन्यै ललितायै भुजद्वयम् ।

उत्कण्ठिन्यै नमः कण्ठं मायायै मुखमण्डलम् ॥
श्रियै नमः शिरः पश्चात् पद्मायै कुसुमं नमः ॥
अथ धूपः—
गन्धसम्भारसन्नद्धं पृथुवस्तुसमन्वितम् ।
सुरासुरनरानन्दं धूपं मे प्रतिगृह्यताम् ॥
षोडशदीपान् प्रज्वलय्य संप्रोक्ष्य संपूज्य—
मार्तण्डमण्डलाखण्डचन्द्रबिम्बाग्नितेजसम् ।
गृहाण देवि दीपं मे निर्मितं श्वेतवर्तिभिः ॥

अथ षोडशप्रकारनैवेद्यसम्भारं पुरतः संस्थाप्य मूलमन्त्रेण संप्रोक्ष्य सम्पूज्य जलपात्रं च संस्थाप्य प्राणादिमुद्राः प्रदर्श्य निवेदयेत्—

देवतालयपातालभूतलाधारधान्यजम् ।
षोडशाकारसम्भारं नैवेद्यं प्रतिगृह्यताम् ॥

क्षणं ध्यात्वा दशवारं ॐ श्रीं ह्रीं ऐं महालक्ष्म्यै कमलधारिण्यै सिंहवाहिन्यै स्वाहा इति मूलमन्त्रजपं विधाय गृह्णातीति समर्प्य नैवेद्यपात्राण्युत्थाप्य मुख्यादीशानपात्रान्नैवेद्यांशमुद्धृत्य उच्छिष्टचाण्डाल्यै नमः इत्युत्तरतो दत्त्वा, नैवेद्यान्तमाचमनीयं० करोद्वर्तनार्थे गन्धं० । फलानि—इदं फलं० ।

ताम्बूलं—
पातालतलसम्भूतवदनाम्भोजभूषणम् ।
नानागुणगणाकीर्णं ताम्बूलं प्रतिगृह्यताम् ॥
दक्षिणा—हिरण्यगर्भ० ।

छत्रचामरपादुकाव्यजनदर्पणं साङ्गायै सपरिवारायै श्रीमहालक्ष्म्यै श्रियै समर्पयामि । मूलेन श्रीश्च ते०इति च पुष्पाञ्जलिं समर्पयेत् । अथ विषमसंख्याकश्वेतवर्तियुतमारार्तिक्यं कर्पूरं च प्रज्वलय्य संप्रोक्ष्य संपूज्य वामहस्तेन घण्टां वादयन् दक्षिणेन अन्त-

स्तेजो० इति नाभ्यादिनेत्रपर्यन्तं प्रदर्शयेत् ।

विशेषार्घ्यः--

शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् ।
जानुभ्यामवनीं गत्वा त्रिरर्घ्यं संनिवेदयेत् ॥

तत्र मन्त्रः--

न मे जन्मनि दौर्भाग्यं न मे जन्मदरिद्रता ।
महालक्ष्मि नमस्तुभ्यमर्घ्यं मे प्रतिगृह्यताम् ॥

इति मन्त्रावृत्त्या त्रिवारं षोडशवारं वा दद्यात् । प्रार्थना--

विष्णोर्वक्षसि पद्मे च शङ्खे चक्रे तथाम्बरे ।
लक्ष्मि निसा यथाऽसि त्वं मयि नित्या तथा भव ॥

इति वारत्रयं प्रार्थयेत् । प्रदक्षिणा-यानि कानि० । प्रदक्षिणामेकां कुर्यात् ।

नमस्कारः--

ॐ नमस्ते सर्वदेवानां वरदाऽसि हरिप्रिये ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥

मन्त्रपुष्पाञ्जलिः—ॐ श्रीं ह्रीं ऐं महालक्ष्म्यै सिंहवाहिन्यै स्वाहा ॐ महालक्ष्म्यै विद्महे महाश्रियै धीमहि । तन्नः श्रीः प्रचोदयात् । श्रीश्च ते० ।

क्षमापनम्—

अबुद्धमतिरिक्तं वा न्यूनं वा यन्मयार्चितम् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥

ॐ क्षमस्व इति प्रणमेत् । वायनदानं दक्षिणासङ्कल्पश्च— शुद्धे पात्रे षोडशसंख्याकान् गोधूमापूपान् सदक्षिणान् पूगीफलादिसहितान् निधाय हिरण्यगर्भ० इति संपूज्य ॐ विष्णुः ३ अमुकोऽहं महालक्ष्मीव्रताङ्गत्वेन कृतायाः श्रीमहालक्ष्मीपूजायाः साद्गुण्यार्थमिदं वायनं ब्राह्मणाय दास्ये इति सङ्कल्प्य ब्राह्मणं

संपूज्य—

इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति च ।
इन्दिरा तारकोभाभ्यामिन्दिरायै नमो नमः ॥

इति दद्यात् । ततः कथां श्रुत्वा ब्राह्मणानुज्ञया षोडशसंख्याकानपूपान् स्वयमपि भुक्त्वा ब्रह्मचर्यभूशय्यादिनियमवान् भवेत् ।

इति महालक्ष्मीव्रतपूजाप्रयोगः ।

अथ वामनद्वादशीव्रतपूजाप्रयोगः—परिशिष्टदीपके वामनद्वादश्यां दध्योदनादिदानमुक्तम् । तत्र वामनपूजनप्रकार उच्यते, वर्षकृत्यान्तर्गतत्वात् । तत्र व्रती प्रातर्नित्यकृत्यं समाप्य व्रतग्रहणसंकल्पं कुर्यात्–ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकं श्रीवामनप्रीत्यर्थं वामनद्वादशीव्रतं करिष्ये ताम्रपात्रं जलपूर्णं करयोः कृत्वा–इदं व्रतमिति पठित्वा जलं देवाग्रे भूमौ क्षिपेत् । ततो नद्यादिसंगमे–

वरो वरेण्यो वरदो वराहो धरणीधरः ।
अपवित्रं पवित्रं मां करोतु भगवान् हरिः ॥

इति मन्त्रेण स्नात्वा वाससी परिधाय गृहमागत्य पूजामारभेत् । तत्र स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यादिविशेषार्घ्यस्थापनान्ते संकल्पं कुर्यात्–ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं यथोक्तफलावाप्तये श्रवणद्वादशीनिमित्तं सुवर्णप्रतिमायां शालग्रामशिलायां वा श्रीवामनदेवस्य यथामिलितोपचारैः पूजनं करिष्ये । 'एतन्ते०' 'मनोजूतिः०' इति मन्त्रान्ते ॐ भूर्भुवःस्वः वामन इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव । इति प्रतिष्ठाप्य ॐ वामनाय नमः इति ध्यायेत् । ततोऽनेनैव मन्त्रेण सहस्रशीर्षेत्यादि प्रत्यृचम् आवाहनादि पुष्पान्तं सम्पूज्याङ्ग-

पूजां कुर्यात्-ॐ मत्स्याय नमः पादौ पूजयामि । कूर्माय० कटिं० । वाराहाय० जङ्घे० । नरसिंहाय० ऊरू० । वामनाय० कण्ठं० । रामद्वयाय० भुजौ० । कृष्णाय० मुखं० । बौद्धाय० शिरः० । कल्किने० केशान्० । वामनाय० सर्वाङ्गं० । ततः पूर्ववद् धूपादिपुष्पाञ्जल्यन्तं समर्च्य प्रार्थयेत्—

नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक ।
अघौघसंक्षयं कृत्वा सर्वसौख्यकरो भव ॥

ततो दधिभक्तदानम्—

पानीयसहितं चैव सदध्योदनपात्रकम् ।
सशर्करं च सफलं सदक्षिणं गृहाण मे ॥

इति ब्राह्मणं सम्पूज्य दद्यात् । ततः प्रतिमादानं—

वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् ।
वामनश्च प्रदाता वै वामनाय नमो नमः ॥ इति ।

ततोऽर्घ्यदानम्—

शङ्खचक्रगदापद्मशरशार्ङ्गविभूषित ।
गृहाणार्घ्यं मया देव शार्ङ्गपाणे नमोऽस्तु ते ॥

ततो दक्षिणां भूयसीं च दत्त्वा ब्राह्मणान् यथाशक्ति संभोज्य स्वयं भुञ्जीत ।

अथानन्तव्रतविधिः—

अनन्तं हृदये कृत्वा शुचिस्तत्र समाहितः ।
सङ्कल्पपूर्वं नद्यादौ स्नात्वा सन्तर्प्य देवताः ॥
गोमयेन समालिप्य मण्डलं तत्र कारयेत् ।
सर्वतो भद्रमालिख्य कलशं तत्र स्थापयेत् ॥
वेष्टितं वस्त्रयुग्मेन धातुमृन्मयमव्रणम् ।
सुपूजितं पल्लवाद्यैः पुष्पमालाभिरेव च ॥
तत्र पात्रं न्यसेद्धैमं राजतं ताम्रवंशजम् ।

तत्राष्टदलमालिख्य तत्रानन्तं प्रपूजयेत् ॥
कृत्वा दर्भमयं देवं फणासप्तकमण्डितम् ।
तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं प्रपूजयेत् ॥
सूत्रैरात्ममितैर्दोरश्चतुर्दशभिराहितम् ।
चतुर्दशग्रन्थिभिस्तु सव्यवृत्तैः सुनिर्मितम् ॥
ततः प्रस्थस्य पक्कानां पूपनाम सुनिर्मितम् ।
अर्धं विप्राय दातव्यमर्धं भोजनमात्मनः ॥
शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः ।
दोरकं दक्षिणे पुंसां, स्त्रीणां वामे करे न्यसेत् ॥ इति ।

**अथानन्तव्रतपूजाप्रयोगः**--तत्र व्रतकर्ता नद्यादौ स्नानादिकं विधाय देवताः सन्तर्प्य व्रतग्रहणसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं पापनिर्मुक्त्युत्तमासिद्धिपुत्रपौत्रेप्सितधनधान्यपरमगतिप्राप्तये अनन्तव्रतं करिष्ये। सजलं ताम्रपात्रं करयोः कृत्वा--

ॐ इदं व्रतं मयाऽनन्त गृहीतं पुरतस्तव ।
तथा कुरु प्रसादं मे पारयेयं यथा व्रतम् ॥

इति तज्जलं देवाग्रे भूमौ क्षिपेत् । ततो विधानोक्तप्रकारेण सम्भृतपूजासम्भारः स्वासने उपविश्य दीपं प्रज्वलय्य सम्पूज्य आचम्य ॐ सुमुखश्चेत्यादि ॐ नमोऽस्त्वनन्तायेति पुष्पाञ्जलिं समर्प्य कलशस्थापनविधिना कलशं संस्थाप्य तदुपरिपात्रेऽष्टदले सप्तफणं दर्भमयमनन्तं तदग्रे सूत्रानन्तं संस्थाप्य सामान्यार्घ्यस्थापनादिविशेषार्घ्यस्थापनान्ते पूजासङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकुटुम्बस्य मम क्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिद्धये कृतसङ्कल्पासिद्धये चानन्तचतुर्दशीव्रतं करिष्ये। तदङ्गत्वेन कलशे दर्भमयानन्तमूर्तौ दोरके च श्रीअनन्तदेवस्य षोडशोपचारैः पूजनं करिष्ये। 'एतन्ते' 'मनो-

जूतिः' इति मन्त्रान्ते ॐ भूर्भुवः स्वः अस्यां मूर्तौ अस्मिन्दोरके चानन्तदेव सुप्रतिष्ठितो वरदो भव । ध्यानम्—

नवाम्रपल्लवाभासं पिङ्गभ्रूश्मश्रुलोचनम् ।
पीताम्बरधरं शार्ङ्गशङ्खचक्रगदाधरम् ॥
प्रसन्नवदनं विष्णुं विश्वरूपं विचिन्तयेत् ।

आवाहनम्—ॐ सहस्रशीर्षा०—

आगच्छानन्त देवेश तेजोराशे जगत्पते ।
क्रियमाणामिमां पूजां गृहाण पुरुषोत्तम ॥

आसनम्—ॐ पुरुष एवेदꣳ सर्वं०

नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।
आसनं देवदेवेश गृहाण पुरुषोत्तम ॥

पाद्यम्-ॐ एतावानस्य०—

गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतम् ।
तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥

अर्घ्यम्-ॐ त्रिपादूर्ध्वं०—

अनन्तानन्तदेवेश अनन्तगुणसागर ।
अनन्तानन्तरूपोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते ॥

आचमनीयम्—ॐ ततो विराडजायत०—

गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।
आचम्यतां हृषीकेश त्रैलोक्यव्याधिनाशन ॥

पञ्चामृतस्नानम्—

पञ्चामृतेन स्नपनं कारये सर्वसिद्धिदम् ।
कार्यं मे सिद्धिमायातु स्नापिते त्वयि धातरि ॥
पयो दधि घृतं गव्यं माक्षिकं शर्करा तथा ।
पञ्चामृतेन स्नपनं गृहाण जगतः पते ॥

शुद्धोदकस्नानम्—ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं०

गङ्गा च यमुना चैव नर्मदा च सरस्वती ।
तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम् ॥
तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥

ततः सहस्रशीर्षेत्यादियज्ञेन यज्ञमियन्तेन पुरुषसूक्तेन महाभिषेकं विधाय नाममन्त्रेण स्नानं स्नानाङ्गमाचमनीयं च दद्यात् वस्त्रम्-ॐ तस्माद्यज्ञात्सर्वहुत ऋचः०

पीताम्बरयुगं देव सर्वकामार्थसिद्धये ।
मया निवेदितं भक्त्या गृहाण सुरसत्तम ॥

वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतम्—ॐ तस्मादश्वा०—

दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण सुरसत्तम ॥

यज्ञोपवीताङ्गमाचमनीयं० । गन्धः—ॐ तं यज्ञं०—

कस्तूरीकुङ्कुमोपेतं कर्पूरेण च संयुतम् ।
श्रीखण्डं चन्दनं दिव्यं गृहाण पुरुषोत्तम ॥

यवाक्षतान्० । पुष्पाणि—ॐ यत्पुरुषं०—

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मया हृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥

तुलसीदलानि च समर्पयेत् ।

अथाङ्गपूजा—ॐ अनन्ताय नमः पादौ पूजयामि १ । ॐ सङ्कर्षणाय० गुल्फौ० २ । ॐ कालात्मने० जानुनी० ३ । ॐ विश्वरूपिणे० जघने० ४ । ॐ विश्वरूपाय० कटिं० ५ । ॐ विश्वकर्त्रे० मेढ्रं० ६ । ॐ पद्मनाभाय० नाभिं० ७ । ॐ परमात्मने० हृदयं० ८ । ॐ श्रीकण्ठाय० कण्ठं० ९ । ॐ शस्त्रास्त्रधारिणे० बाहू० १० । ॐ वाचस्पतये० मुखं० ११ । ॐ कपिलाय० चक्षुषी० १२ । ॐ केशवाय० ललाटं० १३ । ॐ

सर्वात्मने० शिरः० १४।

अथानन्तसूत्रे ग्रन्थीनां गन्धाक्षतपुष्पैर्नाममन्त्रैः पूजनम्—ॐ श्रियै नमः १ ॐ मोहिन्यै० २ पद्मिन्यै० ३ महाबलायै० ४ अजायै० ५ मङ्गलायै० ६ वरदायै० ७ शुभायै० ८ जयायै० ९ विजयायै० १० जयन्त्यै० ११ पापनाशिन्यै० १२ विश्वरूपायै० १३ सर्वमङ्गलायै० १४

अथ ग्रन्थिदेवतापूजा—ॐ विष्णवे नमः १ ॐ अग्नये० २ ॐ सूर्याय० ३ ॐ सहस्राक्षाय० ४ ॐ पितामहाय० ५ ॐ इन्द्राय० ६ ॐ पिनाकिने० ७ ॐ विघ्नेशाय० ८ ॐ स्कन्दाय० ९ ॐ सोमाय० १० ॐ वरुणाय० ११ ॐ पवनाय० १२ ॐ पृथिव्यै० १३ ॐ वसुभ्यो० १४।

'ॐ नमः श्रीमदनन्तदेवाय श्रीभूमिसहिताय नमः' इति चतुर्दशोपचारचतुर्दशपुष्पचतुर्दशपत्रपूजार्थे पुष्पाञ्जलिं समर्पयेत्। धूपः—ॐ ब्राह्मणोऽस्य०—

दशाङ्गं गुग्गुलं धूपं चन्दनागुरुसंयुतम्।
आग्नेयमुत्तमं धूपं गृहाण सुरपूजितम्॥

दीपः—ॐ चन्द्रमा०—

घृतवर्तिसमायुक्तं वह्निना योजितं मया।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह॥

नैवेद्य—देवाग्रे संस्थाप्य संपूज्य पानीयपात्रं संस्थाप्य अर्घोदकेन निवेदयेत्—ॐ नाभ्या आसी०—

नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु।
ईप्सितं च वरं देहि परत्र च परां गतिम्॥

प्राणादिमुद्राः प्रदर्श्य ॐ अमृतं भुज्यतां विभो इति सम्प्रार्थ्य यथाशक्तिमूलमन्त्रजपं विधाय गुह्यातीति समर्प्य

उत्तरापोशानं दद्यात्--

उत्तरापोशानार्थं ते ददामि तोयं सुवासितम्।
गृहाण सुमुखो भूत्वा नमोऽनन्ताय वेधसे॥

मुखप्रक्षालनं०। हस्तप्रक्षालनार्थं जलं०। करोद्वर्तनार्थे गन्धः--

करोद्वर्तनकं देवं मया दत्तं हि भक्तितः।
चारुचन्द्रप्रभं दिव्यं गृहाण परमेश्वर॥

नैवेद्यपात्रमुत्थाप्य ततः किञ्चित्-विष्वक्सेनाय नमः इति दद्यात्। फलानि-इदं फलं०। ताम्बूलं--पूगीफलं०। दक्षिणा-हिरण्यगर्भ० साङ्गाय सपरिवाराय सशक्तिकाय श्रीमदनन्तदेवाय नमः छत्रचामरपादुकादर्पणादीनि दद्यात्। नीराजनम्-

पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम्।
नीराजनं निरीक्षस्व अनन्ताय नमोस्तु ते॥

अन्तस्तेजो०। प्रदक्षिणाः-ॐ यत्पु० यानि कानि च०। (चतस्रः प्रदक्षिणाः कार्याः)। नमस्कारः-ॐ सप्तास्यासन्०—

नमस्ते भगवन् भूयो नमस्ते धरणीधर।
नमस्ते सर्वनागेन्द्र नमस्ते मधुसूदन॥
नमस्ते देवदेवेश नमस्ते गरुडध्वज।
नमस्ते कमलाकान्त अनन्ताय नमो नमः॥

मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञ०—ॐ राजाधिराजाय.......महाराजाय नमः।

मालतीमल्लिकापुष्पैर्नागचम्पकसंयुतैः।
पुष्पाञ्जलिं गृहाणेमं पादाम्बुजयुगार्पितम्॥

अथ प्रार्थना—

अनन्त कामान्मे देहि सर्वकामफलप्रद।
अनन्ताय नमस्तुभ्यं पुत्रपौत्रविवर्धनम्॥

अनन्तः सर्वकामानामधिपः सर्वकामदः ।
व्रतेनानेन सुप्रीतो भवत्विह सदा मम ॥

अथ वायनदानम्—अर्धं विप्राय दातव्यमिति विधिमनुसृत्य सूत्रानन्तसहितं सफलं सत्पात्रस्थमर्धं सम्पूज्य विप्राय दद्यात् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कृतसङ्कल्पसिद्धये श्रीअनन्तचतुर्दशी-व्रताङ्गत्वेन कृताया अनन्तदेवपूजायाः सादुगुण्यार्थं साङ्गफल-प्राप्तये इदं वायनं ब्राह्मणाय दास्ये इति ब्राह्मणं सम्पूज्य द-द्यात् । दानवाक्यम्—

प्रतिगृह्ण द्विजश्रेष्ठ अनन्तफलदायक ।
त्वत्प्रसादादहं विप्र मुच्येऽयं कर्मबन्धनात् ॥
पक्वान्नं फलसंयुक्तं घृताक्तं दक्षिणान्वितम् ।
अनन्तसूत्रसहितं व्रतसम्पूर्तिहेतवे ॥

ॐ अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च ।
अनन्तस्तारकोभाभ्यामनन्ताय नमो नमः ॥

ब्राह्मणश्च—देवस्यत्वेति प्रतिगृह्य 'कोदादिति' कामस्तुतिं पठेत् । अथ नवीनदोरकप्रार्थना—

अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः ।
नमोऽस्तु पद्मनाभाय नागानां पतये नमः ॥

ततः—

अनन्तः कामदः श्रीमाननन्तो दोररूपकः ।
अनन्तकामान्मे दद्यात् पुत्रपौत्रविवर्धनः ॥
अनन्तसंसारमहासमुद्रे मग्नं समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमो नमस्ते ॥

इति दोरकमादाय—

संसारगह्वरगुहासु सुखं विहर्तुं

वाञ्छन्ति ये कुरुकुलोद्वहशुद्धसत्त्वाः ।
संपूज्य च त्रिभुवनेशमनन्तकीर्तिं
बध्नन्ति दक्षिणकरे शुभदोरकं ते ॥

इति बध्नीयात् । स्त्रीणां तु वामकरे बध्नीयात्, शतपथाष्टमकाण्डश्रुतिप्रामाण्यात् ।

ततो गन्धपुष्पैः पूजयेत्--

ॐ अनन्तगुणरत्नाय विश्वरूपधराय च ।
सूत्रग्रन्थिषु संस्थायानन्ताय नमो नमः ॥

अथ जीर्णदोरकोत्तारणमन्त्रः--

नमः सर्वहितार्थाय जगदाधारहेतवे ।
जीर्णदोरममुं देव विसृजेऽहं त्वदाज्ञया ॥

देवाग्रे कलशे निधाय गन्धपुष्पैः ॐ विष्णवे नमः इत्यादिना पूर्वोक्तान् ग्रन्थिदेवान् सम्पूज्य विसर्जयेत्--

न्यूनातिरिक्तानि परिस्फुटानि
यानीह कर्माणि मया कृतानि ।
क्षम्याणि चैतानि मम क्षमस्व
प्रयाहि तुष्टः पुनरागमाय ॥

आवाहनं न जानामीत्यादिनापि विसृज्य यस्यस्मृत्येत्यादिना कर्मेश्वरार्पणं कृत्वा यथाशक्ति ब्राह्मणान् सम्भोज्य भूयसीं दक्षिणां च दत्त्वा स्वयमपि भुञ्जीत ।

इति अनन्तचतुर्दशीव्रतपूजाप्रयोगः ।

## अथ आश्विनशुक्लप्रतिपदि देवीनवरात्रमहोत्सवः ।

तदुक्तं स्कान्दे--

आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् ।
देवीं सम्पूजयित्वाऽग्रे अर्धरात्रे शमीषु च ॥
क्रीडन्ति विविधैर्भोगैर्देवलोकेषु दुर्लभैः ।

नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ॥

तथा हेमाद्रौ भविष्ये—

अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जायते नरः ॥

अत्र सर्वत्र पूजाया एव फलसम्बन्धात् पूजैव प्रधानम् ।
नवमीतिथिपर्यन्तं वृद्ध्या पूजा जपादिकम् ॥

इति देवीपुराणे,

शरत्काले महापूजा क्रियते या च वार्षिकी ।

इति मार्कण्डेयपुराणे च पूजाया एव निर्देशाच्च । उपवासादिकं चोक्तं भविष्ये—

एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे शक्तिपरे ग्रामे ग्रामे वने वने ॥
स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ।
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥
सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात् ।
उपचारांस्तथा दातुं पञ्चैतान्वितरेत्तदा ॥
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ।
अभावे पुष्पतोयाभ्यां तदभावे तु भक्तितः ॥

इति संक्षेपेण पूजा कार्या ।

एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः ।

इति भविष्यवचनं तामसपूजापरम् ॥

विना मन्त्रैस्तामसी स्यात् किरातानां तु सम्मता ।

इति तत्रैवोक्तेः ।

किरातपदं च म्लेच्छादीनामुपलक्षकम् । पूजाविधिश्च

रुद्रयामले—

स्नानं माङ्गलिकं कृत्वा ततो देवीं प्रपूजयेत् ।
शुद्धाभिर्मृत्तिकाभिश्च पूर्वं कृत्वा तु वेदिकाम् ॥
यवान्वै वापयेत्तत्र गोधूमैश्चापि संयुतान् ।
तत्र संस्थापयेत् कुम्भं विधिना मन्त्रपूर्वकम् ॥
सौवर्णं राजतं वाऽपि ताम्रं मृन्मयमेव वा । इति ।

पूजा च जयन्तीमन्त्रेण नवाक्षरेण वा कार्या । तदुक्तं देवीपुराणे—

कुर्याद्देव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः ।

इत्युपक्रम्य—

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥
अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत् । इति ।

ॐ दुर्गे दुर्गे रक्षिणि स्वाहा इति नवाक्षरः ।

अथ कलशस्थापनादिप्रयोगः-तत्र प्रतिपदि देवगृहस्यैशानभागे सुलिप्तायां सुशोभितायां भूमौ चतुरस्रचतुर्हस्तवेदिकोपरि सर्वतोभद्रादिमण्डलं विलिख्य कदलीस्तम्भसुवितानादिशोभितं यथासम्भवं विधाय बीजप्ररोहणयोग्यां मृत्तिकां किञ्चिद्गोधूममिश्रितयवबीजं पञ्चरत्नपञ्चपल्लवपञ्चगव्यदूर्वाफलताम्बूलकुङ्कुमवस्त्रनैवेद्यधूपदीपादिसम्भारान् यथाशक्ति सम्पादयेत् । अथ सपत्नीको यजमानः प्रतिपदि प्रातरभ्यङ्गं कृत्वा मण्डपसमीप आसने प्राङ्मुख उदङ्मुखो वा उपविश्य दीपं प्रज्वलय्य प्रतिष्ठाप्य आचम्य पवित्रपाणिः प्राणानायम्य सुमुखश्चेति गणेशाय पुष्पाञ्जलिं समर्प्य आत्माग्रे भूमौ शङ्खचक्रे चन्दनेन लिखित्वा ॐ आधारशक्तये नमः इत्याधारशक्तिं सम्पूज्य तत्रार्घ्यपात्रं संस्थाप्य शुद्धजलेनापूरयेत्-

गङ्गे च यमुने चैव गोदावरि सरस्वति ।

नर्मदे सिन्धुकावेरि जलेऽस्मिन् सान्निधिं कुरु ॥

इति गन्धपुष्पाक्षतादि तूष्णीं निक्षिपेत्। अर्घ्यपात्रं सम्पन्नं, सुसम्पन्नमस्तु। ततः सूर्यायार्घ्यं दत्त्वा पुनरर्घ्यं संस्थाप्य तेन जलेन आत्मानं पूजासामग्रीं च सम्प्रोक्ष्य पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि शरदृतावाश्विनमासे शुक्लपक्षे प्रतिपदि शुभपुण्यतिथौ अमुकगोत्रोऽमुकराशिरमुकोऽहं सपत्नीकः सकुटुम्बस्य ममेह जन्मनि श्रीमहामायाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीशत्रुजयकीर्तिलाभप्रमुखचतुर्विधपुरुषार्थसिद्ध्यर्थमद्यप्रभृति महानवमीपर्यन्तं प्रत्यहं त्रिकालं द्विकालमेककालं वा श्रीभगवतीपूजामुपवासनक्तैकभक्तान्यतमनियमसहितमखण्डदीपप्रज्वालनं कुमारीपूजनं प्रत्यहमेकोत्तरवृद्ध्या प्रत्यहमेकावृत्त्या वा चण्डीसप्तशतीपाठमन्ते बलिदानहोमादीत्यादि यावत्कुलाचारप्राप्तं शारदीयनवरात्रमहोत्सवं करिष्ये। तत्रादौ कलशस्थापनं करिष्ये।

**ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः। (य०सं०८-३२)**

इति भूमिं स्पृष्ट्वा तदुपरि अङ्कुरारोपणार्थं शुद्धमृदं प्रक्षिप्य तत्र—

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्त ँ राजन् पारयामसि। (य०सं०१२-९६)**

इति किञ्चिद्गोधूममिश्रान् यवानुदक्संस्थान् क्षिप्त्वा तदुपरि किञ्चिन्मृत्तिकां दत्त्वा पुनः किञ्चिद्गोधूमयुतान् यवान् पञ्चवारं सप्तवारं वा क्षिप्त्वा तद्योग्यां मृत्तिकां बीजामिश्रां पुनर्दद्यात्। एवं बीजवापनं विधाय वेद्यां दिक्षु कोणेषु च काण्डरोपणादिनाऽऽभरणं विधाय तत्रेशाने कलशं स्थापयेत्—

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुन-रूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः॥ (य०सं०८-४२)

इति अव्रणं दध्यक्षतचन्दनमालाचार्चितं कलशं स्थापयेत्।

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदन-मसि वरुणस्य ऽऋतसदनमासीद॥ (य० सं०४-३६)

इति गङ्गादितीर्थजलेनापूरयेत्।

ततः कुशब्रह्माणं तत्र स्थापयेत्-

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर ऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः। सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्। (य०सं०२२-२२)

गन्धः-

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

दूर्वाप्रक्षेपः—ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥ (य०सं० १३-२०)

सर्वौषधीनां हरिद्राया वा प्रक्षेपः--

ॐ या ऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहꣳशतं धामानि सप्त च॥ (य०सं०१२-७५)

पूगीफलादिफलप्रक्षेपः--

ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः॥(य०सं०१२-८९)

गव्यं पयः—

ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ (य०सं०१८-३६) ।

गवां दधि—

ॐदधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्र ण ऽआयूꣳषि तारिषत ॥ (य०सं०२३-३२)

गव्यं घृतम्—

ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभितेऽअजरे भूरिरेतसा ॥ (य०सं०३४-४५)

पञ्चपल्लवप्रक्षेपः–

ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम्॥(य०सं०१२-७९)

सप्तमृत्प्रक्षेपः–

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ (य० सं०३५-२१)

पञ्चरत्नानि—

ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ (य०सं०११-२५)

हिरण्यम्--

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक

आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ (य०सं०१३·४)

वस्त्रम्--

ॐ यदश्वाय व्वासऽउपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै। सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति ॥ (य०सं०२५·३९)

ततः कलशोपरि धान्यपूर्णपात्रं स्थापयेत्--

ॐ पूर्णा दर्व्वि परा पत सुपूर्णा पुनरापत। व्वस्नेव व्विक्रीणावहाऽइषमूर्जᳬ शतक्रतो ॥ (य०सं०३·४९)

ततोऽक्षतैर्वरुणावाहनम्—

ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेह बोध्युरुशᳬस मा न आयुः प्रमोषीः ॥ (य०सं०१८·४९)

सर्वतीर्थावाहनम्--

सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

कलशाभिमन्त्रणम्--

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः।

कलशप्रार्थना--

देवदानवसंवादे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः।

त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः ॥
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।
सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥

**ॐ स्थिरो भव मीढ्वङ्ग आशुर्भव वाज्यर्वन् ।**
**पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥** (य० सं०)

ततः "एतन्ते०" "मनोजूति०:" इत्याद्यन्ते ॐ भूर्भुवःस्वः ब्रह्मवरुणसहितादित्यादिनवग्रहा अस्मिन् कलशे सुप्रतिष्ठिता वरदा भवन्तु । 'ॐ ब्रह्मवरुणग्रहेभ्यो नमः' इति मन्त्रेण गन्धाक्षतपुष्पधूपदीपनैवेद्यैः सम्पूज्य तत्र कलशोपरि कुलदेवताया नवदुर्गाया वा प्रतिमां पूगीफलेषु नवदुर्गां वा प्रतिष्ठाप्य पूजयेत् । स्वस्थाने एव वा संस्थाप्य पूजयेत् । अथवा नवां सौवर्णीं कुलदेवताप्रतिमामग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं प्रतिष्ठाप्य पूजयेत् । ॐ "एतन्ते०" "मनोजूतिः०" इत्याद्यन्ते ॐ भूर्भुवःस्वः ॐ भगवति दुर्गे इहागच्छेह तिष्ठेह सन्निधेहि स्थिरा सुप्रसन्ना सुप्रतिष्ठिता भव ।

ध्यानम्–

या माया मधुकैटभप्रमथिनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डमथनी या रक्तबीजाशनिः ।
शक्तिः शुम्भनिशुम्भदैत्यदलिनी या सिद्धिलक्ष्मीः परा
सा दुर्गा नवकोटिमूर्तिसहिता मां पातु विश्वेश्वरी ॥

आवाहनम्–ॐ सहस्रशीर्षा०—

आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ।
अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ॥
जयन्ती मङ्गला काली भद्रकाली कपालिनी ।

दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥

आसनम्—ॐ पुरुष एवेद१०—

नानाप्रभासमाकीर्णं नानावर्णविचित्रितम् ।
आसनं कल्पितं देवि प्रीत्यर्थं प्रतिगृह्यताम् ॥

पाद्यम्—ॐ एतावानस्य०—

गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् ।
पाद्यं तेऽहं प्रदास्यामि गृहाण परमेश्वरि ॥

अर्घ्यं—ॐ त्रिपादूर्ध्व०—

गन्धाक्षतैश्च संयुक्तं फलपुष्पयुतं शुभम् ।
अर्घ्यं गृहाण दत्तं मे प्रसीद परमेश्वरि ॥

आचमनीयम्—ॐ ततो विराड्०—

गङ्गागोदावरीरेवायमुनाभ्यः समाहृतम् ।
मयाऽऽचमनीयार्थं सुशीतं तोयमुत्तमम् ॥

पञ्चामृतस्नानम्—"ॐ पयः पृथिव्या०" इत्यादिमन्त्रान् पठित्वा—

पञ्चामृतं मयानीतं पयो दधिसमन्वितम् ।
घृतं मधु शर्करया प्रीत्यर्थं प्रतिगृह्यताम् ॥

स्नानाङ्गमाचमनीयम्-ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं०-

ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि ।
स्नानं गृहाण देवि त्वं नारायणि नमोऽस्तु ते ॥

वस्त्रम्—ॐ तस्माद्यज्ञात्सर्वहुतः ऋचः०—

सूक्ष्मतन्तुसमाकीर्णं नानावर्णविचित्रितम् ।
वस्त्रं गृहाण मे देवि प्रीत्यर्थं तव निर्मितम् ॥

वस्त्राङ्गमाचमनीयं । यज्ञोपवीतम्—

ॐ तस्मादश्वाऽअजायन्त०—

उत्तरीयं महादिव्यं पट्टसूत्रादिनिर्मितम् ।

समानीतं मया देवि प्रीत्यर्थं प्रतिगृह्यताम् ॥

यज्ञोपवीताङ्गमाचमनीयं० । गन्धः--ॐ तं यज्ञं बर्हिषि०--

मलयाद्रिसमुद्भूतं कर्पूरागुरुवासितम् ।
मया निवेदितं भक्त्या प्रीत्यर्थं प्रतिगृह्यताम् ॥

अक्षताः--ॐ अक्षन्नमीमदन्त०--

अक्षताश्च सुरश्रेष्ठाः कुङ्कुमेन समन्विताः ।
मया निवेदिता भक्त्या प्रीत्यर्थं प्रतिगृह्यताम् ॥

पुष्पाणि--ॐ यत्पुरुषं व्यदधुः०--

मन्दारः पारिजातश्च पाटली केतकी तथा ।
मालती मोगरं चैव शतपत्राणि चम्पकम् ॥

अथाङ्गपूजा-ॐ दुर्गायै नमः पादौ पूजयामि १ महाकाल्यै० गुल्फौ० २ मङ्गलायै० जानुनी० ३ कात्यायन्यै० ऊरू० ४ भद्रकाल्यै० कटिं० ५ कमलायै० नाभिं० ६ शिवायै० उदरं० ७ क्षमायै० हृदयं० ८ स्कन्दायै० कण्ठं० ९ महिषासुरमर्दिन्यै० नेत्रे० १० उमायै० शिरः० ११ विन्ध्यवासिन्यै० सर्वाङ्गं० १२ ।

धूपः-ॐ ब्राह्मणोऽस्य०—

दशाङ्गं गुग्गुलं धूपं चन्दनागुरुसंयुतम् ।
मया निवेदितं भक्त्या गृहाण परमेश्वरि॥

दीपः-ॐ चन्द्रमा मनसो०--

आज्यं सद्वर्तिसंयुक्तं वह्निना दीपितं मया ।
दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहे ॥

नैवेद्यम्-ॐ नाभ्या आसी०--

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।
भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

मध्येपानीयम् । प्राणादिमुद्राः प्रदर्श्य क्षणं ध्यात्वा यथा-

शक्ति मूलमन्त्रजपं विधाय गुह्यातीति देव्या दक्षिणाभोहस्ते स-मर्प्य नैवेद्यमुद्रास्य ॐ दुर्गायै नमः इति आचमनीयं समर्प्य क-रोद्वर्तनं दद्यात्--

मलयाचलसम्भूतं कस्तूर्यादिसमन्वितम्।
करोद्वर्तनकं देवि गृहाण परमेश्वरि॥

फलानि—ॐ इदं फलं०। ताम्बूलं--ॐ पूगीफलं०। अलङ्काराः--

अलङ्कारान् महादिव्यान् नानारत्नविनिर्मितान्।
गृहाण देवदेवि त्वं प्रसीद परमेश्वरि॥

दक्षिणा-ॐ हिरण्यगर्भ०। छत्रचामरपादुकादर्पणान 'साङ्गायै सपरिवारायै सवाहनायै सायुधायै श्रीभगवत्यै महाकाल्यै महालक्ष्म्यै महासरस्वत्यै नमः' इति समर्पयेत्। नीराजनं-अन्तस्तेजो०। प्रदक्षिणाः-ॐ यत्पुरुषेण०-यानि कानि च०।

नमस्काराः--ॐ सप्तास्यासन्०--

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि।
द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते॥

मन्त्रपुष्पाञ्जलिः--ॐ यज्ञेन यज्ञमयजन्त० ॐ राजाधि-राजाय''''महाराजाय नमः। एवं पूजनान्ते—

अखण्डदीपकं देव्याः प्रीतये नवरात्रकम्।
उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः॥

इति मन्त्रेणाऽखण्डदीपं प्रतिष्ठाप्य प्रज्वलय्य पूजयेत्।

पूर्वसङ्कल्पितं स्वकुलाचारानुसारेण चण्डीपाठादि कुर्यात्, ब्राह्मणद्वारा वा कारयेत्। ततः कुमारिकापूजनम्--

मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम्।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्॥
जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि।

पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥

इतिमन्त्राभ्यां कुमारीं सम्पूज्य नानाभक्ष्यभोज्यचोष्यलेह्यादिभिः संभोज्य आचमय्य तद्धस्तेष्वक्षतान् दद्यात् । कुमारी च तानक्षतान् यजमानशिरसि दद्यात् । ततः कर्मेश्वरार्पणं कुर्यात् ।

**अथ सप्तम्यादिदिनत्रये पत्रिकापूजनं** विहितम् । तत्र सप्तम्यादितिथित्रयं सूर्योदये मुहूर्तमात्रमपि ग्राह्यम् । यत्तु सप्तमीप्रभृतिनवमीपर्यन्तं त्रिरात्रकर्म कुर्वन्ति, तत्र सप्तमी सूर्योदयोत्तरं मुहूर्ताधिकव्यापिनी ग्राह्या । मुहूर्तन्यूनत्वे पूर्वा । तत्राश्विनशुक्लषष्ठ्यां ज्येष्ठानक्षत्रयुतायां केवलायां वा सायंकाले बिल्ववृक्षे देवीबोधनं निमन्त्रणं च । तत्प्रयोगः—अर्घ्यं संपाद्य शुचिर्भूत्वा फलसंयुतबिल्ववृक्षसमीपमागत्य यथाविधि अर्घ्यं संस्थाप्य पूजासंकल्पं कुर्यात् । ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रीदेवीबोधनाङ्गत्वेन श्रीवृक्षस्य पूजनं निमन्त्रणं च करिष्ये । ॐ बिल्ववृक्षाय नमः इति नाममन्त्रेण बिल्ववृक्षं सम्पूज्य ॐ 'जयन्ती' इत्यादि पठित्वा श्रीदुर्गे इहागच्छ इत्यादि वा दुर्गामात्राद्य सम्पूज्य गीतवाद्यघोषपुरःसरं देवीं बोधयेत् । तत्र मन्त्रः—

रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
इषे मासि सिते पक्षे षष्ठ्यां ज्येष्ठानुयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम् ॥

ततो बिल्वतरोरामन्त्रणम्—

मेरुमन्दरकैलासहिमवच्छिखरे तथा ।
जातः श्रीफलवृक्षस्त्वमम्बिकायाः सदा प्रियः ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः ।
नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः ॥

इत्यामन्त्र्य गृहमागच्छेत् । ततः सप्तम्यां प्रातर्नित्यकृत्यान्ते

निमन्त्रितवृक्षसमीपमागत्य पुनः संपूज्य कृताञ्जलिः प्रार्थयेत्—

बिल्ववृक्ष महाभाग सर्वदा शङ्करप्रिय ।
गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् ॥
शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो । इति ।

ततः ॐ छिन्धि फट् ॐ हुं फट् स्वाहा इति मन्त्रेण फलद्वययुतामपराजितादिग्गतामेकां शाखां छेदयेत् । तत्र मृन्मयप्रतिमायां शाखायां च देवीमावाहनपुरःसरं सम्पूज्य सप्रतिमां शाखां दोलादिना गृहमानीय भूतोत्सादनं विधाय देवस्थाने कलशादिसान्निधौ स्थापयेत् । तत्र मन्त्रः—

आरोपिताऽसि दुर्गे त्वं मृन्मये श्रीफलेऽपि च ।
स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव ॥

ततः प्राणप्रतिष्ठां विधाय ॐ दुर्गायै नमः इति ध्यायेत् । तत आवाहनम्—

आवाहयाम्यहं देवि मृन्मये श्रीफलेऽपि च ।
कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् ॥
आगत्य बिल्वशाखायां चण्डिके कुरु सन्निधिम् ॥

भगवति दुर्गे इहागच्छेत्युभयोरावाह्य स्थापनम्—

स्थापिताऽसि मया देवि मृन्मये श्रीफलेऽपि च ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ।

भगवति दुर्गे इह तिष्ठेति संस्थाप्य कृताञ्जलिः पठेत्—

दुर्गे दुर्गस्वरूपाऽसि सुरतेजोमहाबले ।
सदानन्दकरे देवि प्रसीद मम सिद्धये ॥
एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे ।
भक्तितः पूजयामि त्वां दुर्गे देवि नमोऽस्तु ते ॥
पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः ।
पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ॥
दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय ।

यज्ञभागान् गृहाण त्वं योगिनीकोटिभिः सह ॥

ततः पूर्वोक्तपूजाविधिना पुष्पपूजान्तं संपूज्य बिल्वपत्रं समर्पयेत्—

अमृतोद्भववृक्षोत्थं शङ्करस्य सदा प्रियम् ।
बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥

द्रोणपुष्पार्पणमन्त्रः—

ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् ।
तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ॥

पुनरङ्गपूजादि नीराजनान्तं सम्पूज्य प्रार्थयेत्—

कुङ्कुमेन समालब्धे चन्दनेन विलेपिते ।
बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः ॥

सर्वमङ्गल० रूपं देहि० इति च प्रार्थयेत्। एवमेव नवम्यन्तं पूजयेत् ।

अथ पुस्तकेषु सरस्वतीस्थापनम् । तद्विधिर्निर्णयामृते देवीपुराणे—

मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम् ।
उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत् ॥ इति ।

रुद्रयामलेऽपि—

मूलऋक्षे सुराधीश पूजनीया सरस्वती ।
पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम् ॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।
पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः ॥ इति ।

अथ सरस्वतीपूजाप्रयोगः । तत्र प्रातः कृतनित्यक्रियो मूलनक्षत्रे पुस्तकानि संस्थाप्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मूलनक्षत्रे पुस्तकेषु सरस्वत्यावाहनं पूजनं च करिष्ये। ॐ "एतन्ते" "मनोजूतिः" ॐ भूर्भुवःस्वः सरस्वति देवि इहा-

गच्छ इह तिष्ठ सुप्रतिष्ठिता वरदा भव। ध्यानम्--

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

**श्रीसरस्वत्यै नमः।** आवाहनम्-ॐ भूर्भुवःस्वः भुवनमातः सरस्वति सर्ववाङ्मयरूपेणागच्छेह तिष्ठ पूजां गृहाण। 'ॐ श्रीसरस्वत्यै नमः' इति मन्त्रेण आसनादि नीराजनान्तं सम्पूज्य प्रार्थयेत्--

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
या सा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमाना समाना
सा मे वाग्देवतेयं निवसतु वदने शारदा शुभ्रवर्णा॥

यस्य स्मृत्या० ततः कर्मेश्वरार्पणम्। ततः पूर्वाषाढोत्तराषाढानक्षत्रयुक्तद्वितीयतृतीयादिनयोरपि आवाहनरहितं सर्वं पूर्ववत्पूजनं कुर्यात्। ततः श्रवणादिने-ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रवणेन विसर्जनं कर्तुं तदङ्गभूतां पूजां करिष्ये इति संकल्प्य पूर्ववत्संपूज्य विसर्जयेत्।

**अथ महाष्टमीव्रतविधिः--**

नित्यं कृत्वा तथाष्टम्यां पूर्वाह्णे स्नानमाचरेत्।
कुङ्कुमचन्दनचम्पकचतुःसमैः शैलपिष्टैश्च।
चर्चितगात्रीं देवीं कुसुमैरभ्यर्चयेद्बहुभिः॥
कुमुदैः सपाद्यपुष्पैः सधूपदीपैः सनैवेद्यैः।
मांसैर्बल्युपहारैर्मङ्गलशब्दैः समुच्छ्वलितैः।
विहितच्छत्रैर्यानैः सदनासितशस्त्रधारिजनलोकैः।
तुष्टैः पत्रवस्त्रादि तु निवेद्यते सर्वमेव भगवत्यै॥

दुर्गा सा पूजनीया च तद्दिने द्रोणपुष्पकैः ।
ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये ॥
इच्छेत विजयं राज्यं सुभिक्षं चात्मने नृपः ।
पुनः पुनः प्रणम्यार्यां संस्मरन् हृदये शिवाम् ॥
सर्वं कृत्वेति कौरव्य अष्टम्यां जागरं निशि ।
नटनर्तकगीतैश्च कारयेच्च महोत्सवम् ॥ इति ।

तथा कालिकापुराणे--

पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥ इति ।

**अथ महाष्टम्यां पूजाबलिदानप्रयोगः**—व्रती कृतनित्यक्रियः ॐ विष्णुः ३ अद्येहेत्यादि महाष्टम्यां शुभपुण्यतिथौ अमुकोऽहं महाष्टमीव्रताङ्गत्वेन श्रीदुर्गादेव्या यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य पूर्वोक्तविधिना महापूजां विधाय बलिदानं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रीचण्डिकाप्रीतये बलिदानं करिष्ये इति संकल्प्य बलिं वस्त्रवेष्टितं गन्धादिभिः सम्पूज्य—

कूष्माण्डो बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशन ।
चामुण्डाबलिरूपाय बले तुभ्यं ददाम्यहम् ॥

ऐं ह्रीं श्रीं इति मन्त्रेण बलिमूर्ध्नि पुष्पं दद्यात् । श्रीफलादिसत्त्वे श्रीफलं बलिरूपेण इत्याद्यूहः कार्यः । ॐ ह्रीं ऐं ह्रीं कौशिकि कूष्माण्डरसेनाऽऽप्यायताम् इति निवेदयेत् । इति ब्राह्मणकर्तृकबलिदानप्रयोगः ।

नवम्यां पूजां विधाय होमः कार्यः । तद्विधिश्च डामरतन्त्रे—

पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् ।

होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तमः ॥
रुद्राध्याय यथा होमं मन्त्रेणैकेन साधयेत् ।
तथा स्तोत्रजपे होमं श्लोकेनैकेन साधयेत् ॥
यद्वा सप्तशतीं जप्य होममन्त्रो नवाक्षरः । इति ।

रुद्रयामलेऽपि—

प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा ॥
किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैरपि ।
यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा ॥
रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः ।
प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात् ॥
नवाक्षरेण वा हुत्वा नमो देव्या इतीति च ॥ इति ।

स च नवार्णमन्त्रेण जयन्तीत्यादिश्लोकेन नमो देव्यै-श्लोकेन सप्तशतीश्लोकैर्वा यथाकुलाचारं कार्यः । होमद्रव्यं सर्पिर्मिश्रितं शुक्लतिलमिश्रितं च पायसम् । केवलतिला वा । किंशुकपुष्पदूर्वासर्षपलाजपूगयवश्रीफलरक्तचन्दनखण्डनानाविधफलानामपि पायसे मिश्रणं कार्यम् । होमश्च जपदशांशेन कार्यः ।

अथ दशम्यां देवीविसर्जनम् । तत्र मृदादिप्रतिमाया विसर्जनपूर्वकं जलादौ त्यागः । परम्परया पूजिताया धातुप्रतिमायास्तु केवलमुत्थापनं कार्यं, न तु विसर्जनम् । तत्र प्रातः पूर्ववत्पूजयित्वा—

रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान् देहि धनं देहि सर्वकामांश्च देहि मे ॥
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥

इति संप्रार्थ्य—

ॐ उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च ।
कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥

गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके।
व्रज स्रोतोजलं वृद्ध्यै स्थीयतां च जले त्विह॥

इत्युत्थाप्य जलं नीत्वा—

दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिता।
संवत्सरे व्यतीते तु पुनरागमनाय वै॥
इमां पूजां मया देवि यथाशक्त्योपपादिताम्।
रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम्॥

इति जले प्रवाहयेत्।

तत आचार्यादीन् वस्त्रादिभिः संपूज्य अच्छिद्रं वाचयित्वा भूयसीं दक्षिणां च विभज्य दत्त्वा स्वयमपि भुञ्जीत।

**अथ श्रवणे सरस्वतीविसर्जनम्।** तद्विधिः संग्रहे—

आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम्।
मूलेनावाहयेद् देवीं श्रवणेन विसर्जयेत्॥

श्रवणाद्यपादे विसर्जयेदिति।

ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रवणे पुस्तकेष्वावाहितसरस्वतीविसर्जनं कर्तुं तदङ्गभूतां पूजां करिष्ये इति संकल्प्य सम्पूज्य विसर्जयेत्।

**अथ विजयादशमी।** तत्रापराजितापूजाविधिर्हेमाद्रौ स्कान्दे-

दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः॥
या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता।
क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः॥
नवमीशेषयुक्तायां दशम्यामपराजिता।
ददाति विजयं देवी पूजिता जयवर्धिनी॥ इति।

**तथा तत्रैव सीमोल्लङ्घनविधिः—**

श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः।

उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो जनाः । इति ॥

एवं तत्रैव शमीपूजनविधिर्भविष्ये—

शमीयुक्तं जगन्नाथं भक्तानामभयङ्करम् ।
अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः ॥ इति ।

शमीमन्त्रस्तु हेमाद्रौ गोपथब्राह्मणे—

अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥

तथा भविष्ये—

शमी शमयते पापं शमी लोहितकण्टका ।
धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणयात्रायां यथाकालं सुखं मया ।
तत्र निर्विघ्नकर्त्रीं त्वं भव श्रीरामपूजिते ।
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ॥
गीतवादित्रनिर्घोषैरानयेत् स्वगृहं प्रति ।
ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ॥ इति ।

अथापराजितापूजाप्रयोगः—अपराह्णे ग्रामादीशान्यां दिशि गत्वा शुचिदेशे भुवमुल्लिप्य तत्र चन्दनादिनाऽष्टदलमालिख्य मम सकुटुम्बस्य क्षेमासिध्यर्थमपराजितापूजनं करिष्ये इति संकल्प्य मध्ये ॐ अपराजितायै नमः इत्यपराजितामावाह्य तद्दक्षिणे ॐ क्रियाशक्त्यै नमः इति जयां, वामतः—ॐ उमायै नमः इति विजयां चावाह्य ॐ अपराजितायै नमः ॐ जयायै नमः ॐ विजयायै नमः इति नाममन्त्रैः षोडशोपचारपूजां कृत्वा प्रार्थयेत्—

इमां पूजां मया देवि यथाशक्ति निवेदिताम् ।
रक्षार्थं तु समादाय व्रज स्वस्थानमुत्तमम् ॥ इति ।

ततः सीमामुल्लङ्घ्य सीमान्ते ऐशान्याभिमुखः ॐ अपरा-

जितायै नमः ॐ जयायै नमः ॐ विजयायै नमः इति नमस्कुर्युः। ततः सर्वे जना ग्रामाद्बहिरीशानादिगवास्थितां शमीं गत्वा पूजयेयुः। तत्र मम दुष्कृतामङ्गलनिरासार्थं क्षेमार्थं च शमीपूजनं करिष्ये इति सङ्कल्प्य 'अमङ्गलानां शमनीम्' इत्यादिमन्त्रेण षोडशोपचारैः सम्पूज्य प्रार्थयेत् "शमी शमयते पापम्" इत्यादि "रामपूजिते" इत्यन्तेन। शमीवृक्षालाभे अश्मन्तकपूजा कार्या। तत्र ॐ अश्मन्तकाय नमः इतिनाममन्त्रेण पूजयेत्।

अश्मन्तक महावृक्ष महादोषनिवारण।
इष्टानां दर्शनं देहि शत्रूणां च विनाशनम्॥

इति प्रार्थयेत्।

ततः साक्षतामार्द्रां शमीं गृहीत्वा तन्मूलमृदं च गृहीत्वा गीतवादित्रघोषपुरःसरं गृहमानयेत्। ततो वस्त्रधारणं नीराजनादि च कार्यमिति।

**अथाश्विनशुक्लपौर्णिमायां कोजागरव्रतम्।** अस्य विधिस्तिथितत्त्वे लैङ्गे—

आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि।
कौमुदी सा समाख्याता कार्या लोकैर्विभूतये॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्।
सुगन्धिर्निशि सद्वेष अक्षैर्जागरणं चरेत्॥
निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः॥ इति।

**अथ कोजागरव्रतपूजाप्रयोगः**—तत्र व्रती प्रदोषकाले कृतनित्यक्रियः पूजासामग्रीं सम्पाद्य सङ्कल्पयेत्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकुटुम्बस्य ममालक्ष्मीपरिहाराय श्रीमहालक्ष्मीप्रसादसिद्धये कोजागरपूर्णमास्यां महालक्ष्म्या ऐरावतस्थितेन्द्रस्य च पूजनं करिष्ये इति संकल्प्य रजतप्रतिमायां

अक्षतपुञ्जे वा "एतन्ते" "मनोजूतिः" इति पठित्वा ॐ भूर्भुवःस्वः महालक्ष्मि इहागच्छ इह तिष्ठ सुप्रतिष्ठिता वरदा भव । ॐ भूर्भुवः स्वः ऐरावतस्थितेन्द्रदेव इहागच्छ इह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य–महालक्ष्मीव्रतपूजाप्रयोगोक्तप्रकारेण (२४०पृ०) 'महालक्ष्म्यै नमः' 'ॐ इन्द्राय नमः' इति नाममन्त्राभ्यां च ध्यानावाहनादि विशेषार्घ्यान्तं संपूज्य मालां समर्पयेत्—

महामाले महामाये सर्वशक्तिसमन्विते ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भवेः ॥
त्वं माले सर्वदेवानां शिवदा प्रीतिदा मम ।
शिवं कुरुष्व मे भद्रे यशो वीर्यं च वर्धय ॥

श्रीश्च ते लक्ष्मीश्च इति सूक्तं मन्त्रमेकं वा पठित्वा ॐ इन्द्राय नमः इति पुष्पाञ्जलिं दत्त्वा वारत्रयं प्रार्थयेत्—

विष्णोर्वक्षसि पद्मे च खड्गे चक्रे तथाम्बरे ।
लक्ष्मि नित्या यथाऽसि त्वं मयि नित्या तथा भव ॥
विचित्रैरावतस्थाय भास्वत्कुलिशपाणये ।
पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः ॥ इति ।

दक्षिणासंकल्पः–ॐ विष्णुः ३ अद्येह अमुकोऽहं कृतैतन्महालक्ष्मीपूजाया इन्द्रपूजायाश्च साङ्गफलप्राप्त्यर्थमिमां दक्षिणां महालक्ष्मीन्द्रदेवप्रीतये ब्राह्मणाय दास्ये। तथा महालक्ष्मीन्द्रदेवप्रीतये सिद्धान्नं ब्राह्मणान् भोजयिष्ये । तथा इमां भूयसीं दक्षिणां च नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्य इति संकल्प्य दद्यात् । ते चाशिषं दद्युः । ततो रात्रौ जागरणं कुर्याद् अक्षक्रीडां च समाचरेत् ।

**अथ कार्तिकमासः।** तुलासङ्क्रान्तौ पूर्वाः पराश्च दश घटिकाः पुण्याः ।

**अथ तुलासङ्क्रमणशान्तिः** । तत्र यजमानः प्रातर्नि-

त्यकर्म समाप्य शुभासने उपविश्य दीपं प्रज्वलय्याचम्य शान्तिपाठं कृत्वा यथाविधि गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येह अमुकोऽहं मम जन्मनक्षत्रात् संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचितसर्वारिष्टनिवृत्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं रुद्रयामलोक्तप्रकारेण शान्तिं करिष्ये । तत्पूर्वाङ्गत्वेन आचार्यब्रह्मणोः पूजनपूर्वकं वरणं करिष्ये इति सङ्कल्प्य आचार्यं गन्धादिभिः सम्पूज्य 'एभिर्गन्धादिभिर्द्रव्यैस्तुलासंक्रमशान्तिकर्मणि आचार्यत्वेन त्वामहं वृणे ।' वृतोऽस्मीति प्रत्युक्तिः । 'आचार्यस्तु यथा स्वर्गे' इति प्रार्थयेत् । ततो ब्रह्माणं पूर्ववद् वृत्वा 'यथा चतुर्मुख' इति प्रार्थयेत् । तत आचार्यो हस्तमितां वेदीं कृत्वा तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य वेद्या ईशानभागे कलशस्थापनविधिना कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य तदुत्तरतः दध्यक्षतचन्दनचर्चितं कलशं संस्थाप्य तदुपर्येकं ताम्रादिपात्रं संस्थाप्य तत्र अग्न्युत्तारणपूर्वकं पञ्चामृतस्नापितां सौवर्णीं गोविन्दप्रतिमां संस्थाप्य 'एतन्ते' 'मनोजूतिः' इति प्रतिष्ठाप्य 'अमुकोऽहं गोविन्दप्रतिमायां यथामिलितोपचारैः पूजनं करिष्ये ।

"अधश्चक्रं गदामूर्ध्वं दक्षिणे वामयोः क्रमात् ।
ऊर्ध्वे पद्ममधः शङ्खं गोविन्दे कपिलाङ्कके ॥"

इति ध्यात्वा 'ॐ विष्णो रराटमसि' इति वैदिकमन्त्रेण 'ॐ गोविन्दाय नमः' इति नाममन्त्रेण चाऽऽवाहनादि नीराजनान्तं सम्पूज्य 'नमो ब्रह्मण्यदेवाय' इति प्रार्थयेत् । ततो ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कृत्वा वरदनामाग्निम् 'एतन्ते' 'मनोजूतिः' इति प्रतिष्ठाप्य अग्न्यादिपूजनं कृत्वा अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं संस्थापयेत् । ततो यजमानः द्रव्यदेवताभिध्यानपूर्वकं द्रव्यत्यागं कुर्यात्—'ॐ विष्णुः ३ अद्येह मम जन्मनक्षत्रात्संक्रान्तिनक्षत्रस्य विषुवत्पुरुषवामपादपतनसूचित-

सर्वारिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं तुलासंक्रमणशान्तिकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, गोविन्दमाज्यमधुयुक्तौदुम्बरसमिद्भिः अष्टोत्तरशतादिसङ्ख्याहुतिभिः, अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान्मरुतः स्वर्कान् वरुणं प्रजापतिम् अग्निं स्विष्टकृतं चाज्येनाहं यक्ष्ये । एतद्धोमद्रव्यमाघाराज्यभागदेवताभ्यो गोविन्दाय महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये अग्नये स्विष्टकृते च मया परित्यक्तम् । ॐ तत्सत् यथादैवतमस्तु ।' इति । औदुम्बरसमिदभावे आज्याक्ततिलैर्गोविन्दहोमः । तत आचार्य आघारावाज्यभागौ च हुत्वा ॐ शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्च ऋतपाश्चात्यꣳहाः-स्वाहा ।" (य० सं० १७-८०) इति मन्त्रेण अष्टोत्तरशताद्याहुतीः आज्यमधुयुक्तौदुम्बरसमिद्भिर्जुहुयात् । ततो भूरादिनवाहुतिहोमं कुर्यात् । ततो यजमानो ब्रह्मणे पूर्णपात्रं दद्यात् । तत आचार्यः पूर्णाहुतिं कृत्वा उत्तराङ्गपूजादिकं कुर्यात् । ततो यजमानो रुद्रयामलोक्तप्रकारेण कृतस्य शान्तिकर्मणः साङ्गतासिद्ध्यर्थमिदं सुवर्णमग्निदैवतं तन्निष्क्रयद्रव्यं वा आचार्याय दास्ये इति सङ्कल्प्य दद्यात् । गोविन्दप्रतिमां चाचार्याय दद्यात् । न्यूनातिरिक्तदोषपरिहारार्थं भूयसीं दक्षिणां च दद्यात् ब्राह्मणांश्च भोजयेत् । ब्राह्मणाश्च यजमानस्य तिलकादिकं कृत्वा आशीर्वादं दद्युः ॥

अथ कार्तिके आकाशदीपदानमुक्तं पुष्करपुराणे-

तुलायां तिलतैलेन सायंकाले समागते ।
आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसंपदम् ।

तद्विधिरादित्यपुराणे—

दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणम् ।
यूपाकृतिं यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि ॥
यवाङ्गुलच्छिद्रयुतास्तु मध्ये द्विहस्तदीर्घा अथ पट्टिकास्तु ।
कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुसारी ॥
तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो दलगास्तथाऽष्टौ ।
निवेद्य धर्माय हराय भूम्यै दामोदरायाऽप्यथ धर्मराज ॥
प्रजापतिभ्यस्त्वथ सत्पितृभ्यः प्रेतेभ्य एवाथ तमः स्थितेभ्यः ।

अपरार्के तु—

दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥

इति मन्त्र उक्तः ।

**आकाशदीपदानसंकल्पः** । अद्य आश्विनशुक्लपूर्णिमायाम् अमुकोऽहं मम सकलपापक्षयपूर्वकं श्रीराधादामोदरप्रीतये अद्यारभ्य कार्तिकपौर्णमासीपर्यन्तं यथाशक्ति आकाशदीपदानं करिष्ये इति संकल्प्य प्रत्यहं सायंकाले पूर्वोक्तविधिना 'दामोदराय नभसि०' इति मन्त्रेण दीपदानं कुर्यात् ।

**कार्तिककृष्णद्वादश्यां गोवत्सपूजाविधिः**—कार्तिककृष्णद्वादशी गोवत्ससंज्ञा । अत्र विशेषो भविष्ये—

सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् ।
चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः ।
पादमूले तु दद्याद्वै मन्त्रेणानेन पाण्डव ॥
क्षीरोदार्णवसंभूते सुरासुरनमस्कृते ।
सर्वदेवमये मातर्गृहाणार्घ्यं नमो नमः ॥
ततो माषादिसंसिद्धान् वटकान् विनिवेदयेत् ।

सुरभि त्वं जगन्मातर्देवि विष्णुपदे स्थिता ॥
सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ।
ततः सर्वमये देवि सर्वदेवैरलङ्कृते ॥
मातर्ममाभिलाषितं सफलं कुरु नन्दिनि ।

इति प्रार्थयेत् ।

**कार्तिककृष्णत्रयोदश्यां यमदीपदानविधिः स्कान्दे—**

कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥ इति ।

ॐ विष्णुः ३ अद्येह अमुकोऽहं मम सर्वारिष्टनिवृत्तिपूर्वकमपमृत्युनिवारणद्वारा यमराजप्रीत्यर्थं दीपदानं करिष्ये। ततो—'यमाय दण्डपाशाय महिषारूढाय कृष्णवर्णाय नमः' इति ध्यात्वाऽक्षतेषु दीपं परिवारसंख्याकान् दीपान् वा संस्थाप्य अञ्जलिं बद्ध्वा-

**मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह ।**
**त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम ॥**

इति मन्त्रेण दीपान् समर्पयेत् ।

**कार्तिककृष्णचतुर्दश्यां प्रभाते चन्द्रोदयेऽभ्यङ्गस्नानमुक्तं भविष्योत्तरे—**

कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥

इनश्चन्द्रः ।

अपामार्गस्य पल्लवान् भ्रामयेच्छिरसोपरि ।
ततो वै तर्पणं कार्यं धर्मराजस्य नामभिः ॥
तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशी ।
प्रातः स्नानं तु यः कुर्याद् यमलोकं न पश्यति ॥

तत्राभ्यङ्गस्नानसमये अपामार्गादिभ्रामणमन्त्रः—

सीतालोष्टसमायुक्त सकण्टकदलान्वित ।

हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥
अपामार्गमथो तुम्बी प्रपुन्नाडमथापरम् ।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय च ॥ इति ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥

इति नामभिः सव्येन यमतर्पणं कुर्यात् ।

**कार्तिककृष्णामायां प्रातरभ्यङ्गस्नानं कुर्यात् । प्रदोषे** लक्ष्मीपूजनं तत्प्रीतये दीपदानं च कुर्यात् । तदुक्तं कालादर्शे-

प्रत्यूषे आश्वयुग्दर्शे कृताभ्यङ्गादिमङ्गलः ।
भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये ॥ इति ।

हेमाद्रौ भविष्ये—

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात् ॥
दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च । इति ।

**अथामावास्यायां महालक्ष्मीपूजाप्रयोगः ।** ॐ विष्णुः ३ अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तिद्वारा महालक्ष्मीप्रसादसिद्ध्यर्थं सुखरात्र्यां महालक्ष्म्या इन्द्रकुबेरयोश्च पूजनं करिष्ये इति संकल्प्य कोजागरपूर्णिमोक्तप्रकारेण महालक्ष्मीं ध्यात्वा—

चतुर्दन्तगजारूढो वज्रपाणिः पुरन्दरः ।
शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥

ॐ इन्द्राय नमः ।

मनुजवाह्यविमानवरस्थितं गरुडरत्ननिभं निधिनायकम् ।
शिवसखं मुकुटादिविभूषितं वरगदे दधतं भज तुन्दिलम् ॥

ॐ क्लीं कुबेराय नमः इति इन्द्रकुबेरौ ध्यात्वा कोजागर-

पूर्णिमोक्तप्रकारेण नीराजनान्तं सम्पूज्य प्रार्थयेत् --

विश्वरूपस्य भार्याऽसि पद्मे पद्मालये शुभे ।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु ॥
या रात्रिः सर्वभूतानां देवानां सृष्टिसंभवा ।
आख्याता भूतले देवी सुखरात्रि नमोऽस्तु ते ॥
नमस्ते सर्वदेवानां वरदाऽसि हरिप्रिये ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥

'विचित्रैरावतस्थाय०'

धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसंपदः ॥ इति ।

ततो दक्षिणादानादिकं कोजागरपूर्णिमोक्तप्रकारेणैव कुर्यात् ।

अस्यामेव मसीपात्रे महाकालीपूजनमायव्ययप्रदर्शनपात्रिकायां सरस्वतीपूजनं च महालक्ष्मीपूजनेन सह व्यावहारिका अनुतिष्ठन्ति । तद्यथासमाचारमनुष्ठेयम् ।

अस्यामेवापररात्रे अलक्ष्मीनिःसारणमुक्तं भविष्ये—

एवं गते निशीथे तु जने निद्राऽर्धलोचने ।
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः ॥
निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ॥

उषःकाले तु—

सुखरात्रेरुषःकाले प्रदीपोज्ज्वलितालये ।
सर्वान् बन्धून् वधूश्चैव वाचा कुशलयाऽर्चयेत् ॥
प्रदीपवन्दनं कार्यं लक्ष्मीमङ्गलहेतवे ।
गोरोचनाक्षतं चैव दद्यादङ्गेषु सर्वदा ॥ इति ।

## अथ कार्तिकशुक्लप्रतिपदि गोवर्धनपूजाविधिः

स्कान्दे—

प्रातर्गोवर्धनं पूज्य द्यूतं चापि समाचरेत् ।
भूषणीयास्तथा गावः पूज्याश्चाऽवाहदोहनाः ॥

वाहः वाहनं बलीवर्दानाम् । दोहनं स्त्रीगवीणाम् । उभयमपि त्याज्यम्, "त्याज्ये वाहनदोहने" इति ब्राह्मात् । गोवर्धनश्च गोमयेन कार्यश्चित्रेण वा ।

अथ प्रयोगः—ॐ विष्णुः ३ अद्येह मम सकलपापक्षयद्वारा श्रीकृष्णप्रीत्यर्थं गोपालगोवर्धनपूजामहोत्सवं करिष्ये । "एतन्ते" "मनोजूतिः" इति प्रतिष्ठाप्य ध्यायेत्—

बले राज्ञो द्वारपालो भवानद्य भव प्रभो ।
निजवाक्यार्थनाथाय सगोवर्धन गोपते ॥

ततः—

गोपालमूर्ते विश्वेश शक्रोत्सवविभेदक ।
गोवर्धनकृतच्छत्र पूजां मे गृह्ण गोपते ॥
गोवर्धनधराधार गोकुलत्राणकारक ।
विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव ॥

इति मन्त्राभ्यां गोपालगोवर्धनयोः पूजा कार्या । तत्समये गोपूजनं च 'सवत्साभ्यो गोभ्यो नमः' इति मन्त्रेण कार्यम् ।

लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।
घृतंवहा च यज्ञार्थे मम पापं व्यपोहतु ॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

इति मन्त्राभ्यां प्रार्थयेत् । तत्रैव लक्ष्मीपूजनं कृत्वा प्रार्थयेत्—

नमस्ते सर्वदेवानां वरदाऽसि हरिप्रिये ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥ इति ।

कार्तिकशुक्लद्वितीया भ्रातृद्वितीया। तत्र विशेषो भविष्ये—

कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः॥
अतो यमद्वितीया सा त्रिषु लोकेषु विश्रुता।
अस्यां निजगृहे राजन्न भोक्तव्यं ततो नरैः॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम्।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः॥
स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः।
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः॥

प्रतिपन्नकाः भगिनीत्वेन व्यवहृताः।

भ्रातृपूजा च—

भ्रातस्तवानुजाताऽहं भुङ्क्ष्व भक्तमिदं शुभम्।
प्रीतये यमराजस्य यमुनायां विशेषतः॥

इति मन्त्रेण कार्या।

कार्तिकशुक्लनवमी युगादिः। तस्यां पिण्डरहितं श्राद्धं कार्यम्। तत्र कूष्माण्डदानं कार्यम्—

कार्तिके मासि कूष्माण्डं सहिरण्यं सरत्नकम्।
गुप्तदानेन सहितं दीयते मुनिपुङ्गव॥
ते धन्याः कृतकृत्यास्ते तैरात्मा तारितो मुने।

इति पाद्मात्प्राप्तं कूष्माण्डदानं समाचारात्कार्तिकशुक्लनवम्यामनुष्ठीयते। तत्र मन्त्रः—

ब्रह्महत्यादिपापानां ब्रह्मणा निर्मितं पुरा।
कूष्माण्डं बहुबीजाढ्यमतः शान्तिं प्रयच्छ मे॥

पापानामित्यत्र क्षयार्थमिति शेषः।

**अत्रैव विष्णुत्रिरात्रमुक्तं पाद्मे—**

कार्तिके शुक्लनवमीमवाप्य विजितेन्द्रियः ।
हरिं विधाय सौवर्णं तुलस्या सहितं विभुम् ॥
पूजयेद्विधिवद्भक्त्याव्रती तत्र दिनत्रयम् ।
एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ॥ इति ।

वैवाहिकविधिश्चैकादश्यां सायंकाले इक्षुमण्डपिकां विधाय तत्र तुलसीं श्रीकृष्णं च प्रतिष्ठाप्य पूजनादिकं कृत्वा संक्षेपेणानुष्ठीयते मङ्गलपाठादिभिः शिष्टैः ।

**कार्तिकशुक्लैकादश्यां प्रबोधोत्सवो मदनरत्ने भविष्ये—**

कार्तिके शुक्लपक्षे तु एकादश्यां पृथासुत ।
मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद् द्विजः ॥
तत्रैव देवदेवस्य स्नानं पूर्वं महद्भवेत् ।
महापूजां ततः कृत्वा देवमुत्थापयेत्सुधीः ॥

मन्त्रास्तु वाराहपुराणे उक्ताः—

ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय ।
बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव ॥
उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ॥
उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ।
गता मेघा वियच्चैव निर्मलं निर्मला दिशः ॥
शारदानि च पुष्पाणि गृहाण मम केशव ।
इदं विष्णुरिति प्रोक्तो मन्त्र उत्थापने हरेः ॥

**कार्तिकशुक्लद्वादश्यां चातुर्मास्यव्रतसमाप्तिं कुर्यात् । तदुक्तं भारते—**

चतुर्थो गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।

कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥

मन्त्रस्तु सनत्कुमारेणोक्तः--

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
न्यूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥

कार्तिकशुक्लचतुर्दशी वैकुण्ठचतुर्दशी । हेमाद्रौ भविष्ये--

कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप ।
सोपवासस्तु सम्पूज्य हरिं रात्रौ जितेन्द्रियः ॥ इति ।

कार्तिकपौर्णमास्यां मत्स्यावतार उक्तः पाद्मे कार्तिकमाहात्म्ये--

वरान् दत्त्वा यतो विष्णुर्मत्स्यरूप्यभवत्ततः ।
तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ॥

अत्रैव त्रिपुरोत्सव उक्तो भार्गवार्चनदीपिकायाम्--

पौर्णमास्यां तु सन्ध्यायां कर्तव्यस्त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण प्रदीपांश्च सुरालये ॥

कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ।
दृष्ट्वा प्रदीपं न च जन्मभागिनो भवन्ति नित्यं श्वपचा हि विप्राः ॥

अस्यामेव कार्तिकेयदर्शनमुक्तं काशीखण्डे--

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ इति ।

अथ मार्गशीर्षः--वृश्चिके षोडश घटिकाः पुण्याः ।

मार्गशीर्षकृष्णाष्टमी कालाष्टमी । अत्र च कालभैरवपूजोक्ता त्रिस्थलीसेतौ--

कृत्वा च विविधां पूजां महासम्भारविस्तरैः ।
नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥

अथ पौषः--धनुःसंक्रमे पराः षोडश घटिकाः पुण्याः ।

अथ माघमासः । मकरसंक्रमे परा विंशतिघटिकाः पुण्याः ।

अत्र दानविशेषो हेमाद्रौ स्कान्दे—

धेनुं तिलमयीं राजन् दद्याद्यश्चोत्तरायणे ।
सर्वान् कामानवाप्नोति विन्दते परमं सुखम् ॥

विष्णुधर्मे—

उत्तरे त्वयने विप्र वस्त्रदानं महाफलम् ।
तिलपूर्वमनड्वाहं दत्वा रोगैः प्रमुच्यते ॥

शिवरहस्ये—

तस्यां कृष्णतिलैः स्नानं कार्यं चोद्वर्तनं शुभैः ॥
तिला देयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे ।
तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः ॥

कल्पतरौ कालिकापुराणे—

होमं तिलैः प्रकुर्वीत सर्वदैवोत्तरायणे ।
तान् यो देवाय विप्रेभ्यो हाटकेन समं ददेत् ॥
उत्तरायणमासाद्य नरः कस्मात्स शोचति ।

माघकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतम् । तद्विधिश्च भाद्रकृष्णचतुर्थ्यामुक्तो ज्ञेयः ।

माघकृष्णामायामर्धोदययोगः—तदुक्तं मदनरत्ने महाभारते—

अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥

पौषमाघयोरिति पौषमाघमासद्वयमध्यवर्तिनी पौषी पूर्णमास्युत्तराऽमावास्येति भट्टाः ।

दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।

इत्यर्धं तु हेमाद्र्यादिविरोधान्निर्मूलम् । तत्र कृत्यमुक्तं मद-

नरत्ने स्कान्दे--

ब्रह्माविष्णुमहेशानां सौवर्णाः पलसंख्यया ।
प्रतिमास्तु प्रकर्तव्यास्तदर्धेन द्विजोत्तम ॥
सार्धं शतत्रयं शम्भोर्द्रोणानां तिलपर्वतः ।
कर्तव्यौ पर्वतौ विष्णुब्रह्मणोः पूर्वसंख्यया ॥
शय्यात्रयं ततः कुर्यादुपस्करसमन्वितम् । इति ।

तिलैर्होमं कृत्वा प्रतिमां दद्यादित्युक्तं स्कान्दे—

अर्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम् ।
शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंमिताः ॥
यत्किञ्चिद्दीयते दानं तद्दानं मेरुसंनिभम् ॥ इति ।

माघशुक्लचतुर्थी तिलचतुर्थी । तत्र नक्तव्रतम्--

माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥

इति काशीखण्डात् । अत एवेयं ढुण्ढिराजचतुर्थीत्याख्यायते । लैङ्गेऽस्यां जागरणमप्युक्तम् । इयमेव कुन्दचतुर्थी ।

माघशुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् ।
संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः ॥

इति कौर्मोक्तेः ।

माघशुक्लपञ्चमी श्रीपञ्चमी । अस्यां रतिकामयोः पूजनादिना वसन्तमहोत्सवः कार्यः--

माघमासे सुरश्रेष्ठ शुक्लायां पञ्चमीतिथौ ।
रतिकामौ तु सम्पूज्य कर्तव्यः सुमहोत्सवः ॥
दानानि च प्रदेयानि तेन तुष्यति माधवः ।

इति पुराणसमुच्चयात् ।

अथ पूजाप्रयोगः–दीपं प्रज्वलय्य अर्घं संस्थाप्य आचम्य प्राणानायम्य संकल्पं कुर्यात्–ॐ विष्णुः ३ अद्येह अमुको-

ऽहमायुरारोग्यहर्षविजयप्राप्तिकामः कलशे आदित्यादिनवग्रहाणां रतिकामयोश्च पूजनं करिष्ये । यथाविधि कलशं संस्थाप्य कुशैः रतिकामयोर्मूर्तिं कृत्वा 'एतन्ते' 'मनोजूति०' इति प्रतिष्ठाप्य ग्रहान्संपूज्य रतिकामौ पूजयेत् । ध्यानम्--

वारणे मदनं बाणपाशाङ्कुशशरासनान् ।
धारयन्तं जपारक्तं ध्यायेद्रक्ताविभूषणम् ॥
सव्येन पतिमाश्लिष्य वामेनोत्पलधारिणीम् ।
पाणिना रमणाङ्कस्थां रतिं सम्यग्विचिन्तयेत् ॥

'रतिकामाभ्यां नमः' इति आवाहनादि नीराजनान्तं सम्पूज्य यथाशक्ति वस्त्रादीनि समर्पयेत् । अन्ते माधवं स्तुवीत । दक्षिणां दद्यात् । ब्राह्मणः कलशोदकेन यजमानमभिषिञ्चेत् । ततो यजमानो ब्राह्मणान् भोजयित्वा उत्सवादिना दिनशेषं नयेत् । नटनर्तकगायकेभ्योऽपि यथाशक्ति दद्यात् ।

तत्र दिने ब्राह्मणमुखेन वसन्तरागश्रवणम् । तत्स्वरूपं यथा-

पद्मापयोधरतटीपरिरम्भलग्न-
काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेद-
स्वेदाम्बुपूरमनुपूरयितु प्रियं वः ॥
वसन्ते वासन्तीकुसुमसुकुमारैरवयवैः
भ्रमन्तीं कान्तारे बहुविधकृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
चलद्बाधां राधां सरसमिदमूचे सहचरी ॥

रूपकताले—

ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे ।
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ॥
विहरति हरिरिह सरसवसन्ते नृत्यति युवतिजनेन समं सखि

विरहिजनस्य दुरन्ते ॥ ध्रुवपदम् ॥
उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ।
अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ विहरति०
मृगमदसौरभरभसवशंवद नवदलमालतमाले ।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ विहरति०
मदनमहीपतिकनकदण्डरुचिकेसरकुसुमविकासे ।
मिलितशिलीमुखपाटलपटलकृतस्मरतूणविलासे ॥ विहरति०
विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ।
विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे ॥ विहरति० ॥
माधविकापरिमलललिते नवमालतिजातिसुगन्धौ ।
मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ ॥ विहरति०॥
स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते ।
वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते ॥ विहरति० ॥
श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारम् ।
सरसवसन्तसमयवरवर्णनमनुगतमदनविकारम् ॥ विहरति० ॥

दरविगलितमल्लीवल्लिचञ्चत्पराग-
प्रकटितपटवासैर्वासयन् काननानि ।
इह हि दहति चेतः केतकीगन्धबन्धुः
प्रसरदसमबाणप्राणवद्गन्धवाहः ॥

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥

अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयन्त्यसौ सखी समक्षं पुनराह राधिकाम् ॥

इति श्रीगीतगोविन्दे वसन्तरागः ।

माघशुक्लसप्तमी अचलासप्तमी। तत्रारुणोदये स्नानं कार्यम्।

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी।
अरुणोदयवेलायां तस्यां स्नानं महाफलम्॥

इति विष्णुवचनात्।

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी।
प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा॥

इति वचनाच्च।

अत्र विधिर्भविष्ये--

न केन चाल्यते यावत्तावत्स्नानं समाचरेत्।
सौवर्णे राजते पात्रे भक्त्याऽलाबुमयेऽथवा॥
तैलेन वर्तिर्दातव्या महारजनरञ्जिता।

महारजनं कुसुम्भं, बर्रे इति मध्यदेशे प्रसिद्धम्।

समाहितमना भूत्वा दत्त्वा शिरसि दीपकम्।
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत्॥
नमस्ते रुद्ररूपाय रसानां पतये नमः।
वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते॥
जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः।
चन्दनेन लिखेत्पद्ममष्टपत्रं सकर्णिकम्॥
मध्ये शिवं सपत्नीकं प्रणवेन च संयुतम्।
शाक्रे दले रविः पूज्यो भानुश्चैवानले तथा॥
याम्ये विवस्वान् नैर्ऋत्ये भास्करं पूजयेद् बुधः।
पश्चिमे सविता पूज्यः पूज्योऽर्कश्चानिले दले॥
सौम्ये सहस्रकिरणः शैवे सर्वात्मकस्तथा।
पूज्याः प्रणवपूर्वास्तु नमस्कारान्तयोजिताः॥
पुष्पैश्च गन्धधूपाद्यैः पृथक्त्वेन युधिष्ठिर।

विसर्ज्य वस्त्रसंवीतः स्वस्थाने गम्यतामिति ॥ इति ।

अथाचलासप्तमीव्रतप्रयोगः । तत्र व्रती प्रभाते तिल-युतजलैः स्नात्वा शुक्लाम्बरमिति विष्णुं प्रार्थ्य व्रतग्रहणं(१) कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रुति····र्थं सकल-मनोरथावाप्तिपूर्वकाखण्डारोग्यलब्धये श्रीसाम्बसदाशिवरव्यादि-देवताप्रीत्यर्थमचलासप्तमीव्रतं करिष्ये । इदं व्रतं० इति ताम्र-पात्रस्थं जलं देवाग्रे भूमौ क्षिपेत् । ततः कुसुम्भरञ्जितवर्तियुतं दीपं सौवर्णे राजते अलाबुमये वा प्रज्वाल्य शिरसि स्थाप-यित्वा 'नमस्ते' इति मन्त्रं पठित्वा दीपं जले परिहृत्य ध्यात्वा

यद् यज्जन्मकृतं पापं मया जन्मसु सप्तसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥
एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ।
मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ॥
इति सप्तविधं पापं स्नानान्मे सप्तसाप्तिके ।
सप्तव्याधिसमायुक्तं हर माकरि सप्तमि ॥

एतन्मन्त्रत्रयं जप्त्वा पादपरिमिते जले स्नायात् । तत उत्ती-र्य सुलिप्तायां भूमावर्घं संस्थाप्य चन्दनेनाष्टदलं सकर्णिकं विलि-ख्य कर्णिकायां प्रणवं विन्यस्य तत्र सपत्नीकं शिवमावाह्य पूर्वा-दिदलेषु रवि-भानु-विवस्वत्—भास्कर-सवितृ-अर्क-सहस्रकिरण-सर्वात्मकान् आवाह्य "एतन्ते" "मनोजूतिः" इति प्रतिष्ठाप्य तत्तन्नाममन्त्रैः प्रणवादिनमोन्तैर्यथाशक्त्युपचारैः संपूजयेत् । ततः

सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन ।
सप्तमीसहितो देव गृहाणार्घ्यं दिवाकर ॥

---

(१) नवीनव्रतग्रहणे तु—ॐ विष्णुः ३ अद्येहेत्यादि (१३२ पृ० ) पूर्ववत् ।

इति मन्त्रेणार्घ्यं समर्प्य--

जननी सर्वलोकानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि नमस्ते सूर्यमण्डले ॥

इति प्रार्थयेत् । ततो वस्त्रसंवीतो भूत्वा स्वस्थानं गच्छेत् ।

**माघशुक्लाष्टमी भीष्माष्टमी** । तत्र विधिः पाद्मे-

माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥

भीष्मतर्पणमन्त्रश्च निर्णयसिन्धौ--

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥
वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥
वसूनामवताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे ॥ इति ।
जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।

इति वचनाज्जीवत्पितृकस्याप्यत्राधिकारः । एतच्चापसव्येन कार्यमिति दिवोदासीये । एतत्तर्पणं च नित्यम् ।

ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ॥

इति मदनरत्ने वचनात् ।

अथ फाल्गुनः । कुम्भे षोडश घटिकाः पुण्याः ।

**फाल्गुनकृष्णाष्टम्यां सीताजन्म** । तदुक्तं कल्पतरौ--

फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीपते ।
जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ॥
उपोषितो रघुपतिः समुद्रस्य तटे तदा ।
रामपत्नी च सम्पूज्या सीता जनकनन्दिनी ॥

फाल्गुनकृष्णचतुर्दशी शिवरात्रिः।

फाल्गुने कृष्णपक्षे तु अमायुक्ता चतुर्दशी।
शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा॥

इति वचनात्।

अस्यां कृत्तिवासेश्वरपूजनमुक्तं लैङ्गे--

फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहिताः।
कृत्तिवासेश्वरं लिङ्गमर्चयन्ति शिवं शुभे॥
ते यान्ति परमं स्थानं सदाशिवमनामयम्। इति।

तथा उद्यापनप्रसङ्गे पूजाप्रकार उक्तः स्कान्दे--

एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम्।
सम्पाद्य सर्वसंभारान्मण्डपं तत्र कारयेत्॥
वस्त्रैः पुष्पैः समाच्छन्नं पट्टवस्त्रैश्च शोभितम्।
तन्मध्ये लेखयेद्दिव्यं लिङ्गतोभद्रमण्डलम्॥
अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत्।
शोभोपशोभासंयुक्तं दीपैः सर्वत्र सोज्ज्वलम्॥
तण्डुलैश्च प्रकर्तव्यः कैलासो द्रोणसम्मितैः।
अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत्॥
सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम्।
कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम्॥
सौवर्णेऽप्यथवा रौप्ये वृषभे संस्थितं शुभे।
रत्नालङ्करणैर्हैमैरलंकृत्य प्रपूजयेत्॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः।
वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत्॥
उमामहेश्वरीं मूर्तिं पूजयेद्वृषभे स्थिताम्।
सोमं च सगणं चैव पूजयित्वा महेश्वरम्॥
पुराणस्तोत्रपाठैश्च रात्रिशेषं नयेद्बुधः। इति।

अथ शिवरात्रिव्रतपूजाप्रयोगः--त्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां कृतनित्यक्रियः प्रातर्मन्त्रेण सङ्कल्पं(१) कुर्यात्। स्वासने उपविश्य आचम्य जलपूर्णताम्रपात्रं करयोः कृत्वा—

शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चाऽत्र त्वत्प्रसादाज्जगत्पते ॥
चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ॥

इति मन्त्रौ पठित्वा जलमुत्सृजेत् । ततः सायाह्ने कृष्णतिलैः स्नात्वा धृतभस्मत्रिपुण्ड्रो निशामुखे शिवायतनं गत्वा प्रक्षालितपादः स्वाचान्त उदङ्मुखो देशकालौ संकीर्त्य अद्येह शुभपुण्यतिथौ महाशिवरात्र्यां श्रीशिवप्रीत्यर्थं श्रीशिवपूजां करिष्ये। अस्य श्रीशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः, अनुष्टुप् छन्दः, श्रीसदाशिवो देवता, न्यासे पूजने जपे च विनियोगः। वामदेवाय ऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमो मुखे। श्रीसदाशिवदेवतायै नमो हृदि। ॐ नं तत्पुरुषाय नमो हृदये। ॐ मं अघोराय नमः पादयोः। ॐ शिं सद्योजाताय नमो गुह्ये। ॐ वां वामदेवाय नमो मूर्ध्नि। ॐ यं ईशानाय नमो मुखे। ॐ ॐ हृदयाय नमः। ॐ नं शिरसे स्वाहा। ॐ मं शिखायै वषट्। ॐ शिं कवचाय हुम्। ॐ वां नेत्रत्रयाय वौषट्। ॐ यं अस्त्राय फट्। ततः पूजामण्डपे लिङ्गतोभद्रमण्डलं सर्वतोभद्रमण्डलं वा लिखित्वा तदुपरि तण्डुलराशिना कैलासं निर्माय तदुपरि कलशस्थापनविधिना कुम्भं संस्थाप्य संपूज्य यथाशक्तिनिर्मापितां सौवर्णीं राजतीं वा प्रतिमामग्न्युत्तारणपूर्वकम् "एतन्ते" "मनोजूतिः" इति पाठान्ते ॐ भूर्भुवःस्वः भो साम्बसदाशिव इहागच्छ इह तिष्ठ सुप्रतिष्ठितो

(१) नवीनव्रतग्रहणे तु विष्णुः ३ अद्येहेत्यादि (१३२पृ·) पूर्ववत् ।

वरदो भव। इति प्रतिष्ठाप्य ध्यायेत्। नार्मदबाणपक्षे प्राणप्रतिष्ठाऽवश्यकता नास्ति, किन्तु केवलं पीठे निधाय ध्यायेत्—

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥

इति ध्यात्वा लिङ्गं स्पृशन् ॐ भूः पुरुषं साम्बसदाशिवमावाहयामि। ॐ भुवः पुरु०। ॐ स्वः पुरु०। ॐ भूर्भुवः-स्वः पुरु० इत्यावाह्य—

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम्।
तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सान्निधो भव॥

इति पुष्पाञ्जलिं दद्यात्। आसनम्-ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। 'ॐ नमः शिवाय'। स्त्रीशूद्रश्चेत् ॐ नमः शिवायेति षडक्षरीस्थाने 'श्री शिवाय नमः' इति मन्त्रेण पूजयेत्। पाद्यम्-ॐ भवे भवेनातिभवे भवस्व माम् ॐनमः०। अर्घ्यम्-ॐभवोद्भवाय नमः, ॐनमः०। आचमनीयं-ॐ वामदेवाय नमः, ॐ नमः०। स्नानम्-ॐ ज्येष्ठाय नमः, ॐ नमः०। ततो मूलमन्त्रेण पयः पृथिव्यामित्यादिमन्त्रैश्च पञ्चामृतैः संस्नाप्य आपोहिष्ठेति तिसृभिः शुद्धोदकेन प्रक्षाल्य एकादशावृत्त्यैकावृत्त्या वा रुद्रेण पुरुषसूक्तेन च चन्दनकुङ्कुमकर्पूरवासितजलेनाभिषेकं कृत्वा मूलमन्त्रेण आचमनं दद्यात्।

ततः साक्षतजलेन तर्पणम्-ॐ भवो देवस्तृप्यताम्। ॐ शर्वो देवस्तृप्यताम्। ॐ ईशानो दे०। ॐ पशुपतिर्दे०। ॐ उग्रो दे०। ॐ रुद्रो दे०। ॐ भीमो दे०। ॐ महादे०। ॐ भवस्य देवस्य पत्नी तृप्यताम्। ॐ शर्वस्य दे०। ॐ ईशानस्य दे०। ॐ

पशुपतेर्दे०। ॐ उग्रस्य दे०। ॐ रुद्रस्य दे०। ॐ भीमस्य दे०। ॐ महतो दे०। वस्त्रं-ॐ श्रेष्ठाय: नमः, ॐ नमः० २ आचमनम्। यज्ञोपवीतं-ॐ रुद्राय: नमः, ॐनमः०। ॐनमः० यज्ञोपवीता-न्तमाचमनं०। चन्दनं-ॐ कालाय नमः, ॐ नमः०। अक्षताः-ॐ कलविकरणाय नमः, ॐ नमः०। पुष्पाणि-ॐ बलवि-करणायनमः, ॐ नमः०। सहस्रमष्टोत्तरशतं वा शिवसहस्र-नामभिः ॐ नमः० इति मन्त्रेण वा बिल्वपत्राणि अधोमु-खानि दद्यात्।

अथाङ्गपूजा-ॐ विश्वपतये नमः पादौ पूजयामि। शिवाय नमः जानुनी०। शूलपाणये० गुल्फौ०। शम्भवे० कटिं०। स्वयम्भुवे० गुह्यं०। महादे-वाय० नाभिं०। विश्वकर्त्रे० उदरं०। सर्वतोमु-खाय० पार्श्वौ०। स्थाणवे० स्तनौ०। नीलकण्ठाय० कण्ठं०। श्रीकण्ठाय० मुखं०। शशिभूषणाय० मुकुटं०। देवाधिदेवाय० सर्वाङ्गं पूजयामि।

धूपः-ॐ बलाय नमः, ॐ नमः०। दीपः-ॐ बलप्रमथनाय नमः, ॐ नमः०। नैवेद्यं-ॐ सर्वभूतदमनाय नमः, ॐ नमः०। ॐ नमः०मध्येपानीयं०। ततो मूलमन्त्रजपं विधाय गुह्यातीति समर्प्य किञ्चित्पार्षदेभ्यो दद्यात्। ताम्बूलं-ॐमनोन्मनाय नमः, ॐ नमः०। ॐ नमः० दक्षिणां०। नीराजनं-ॐ अग्निर्ज्योतिः० ॐ नमः०। मन्त्रपुष्पाञ्जलिः-ॐ ईशानः सर्वविद्यानामी-श्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्, ॐ नमः०। भवाय देवाय नमः, शर्वाय देवायेत्यादिनाऽष्टौ भवस्य देवस्य पत्न्यै इत्यादिनाऽष्टौ च नमस्कारान् कृत्वा 'ॐ नमः शिवाय' इति पुष्पाञ्जलिं दद्यात्। रुद्राय नमः, पशुपतये० नीलकण्ठाय० महेश्वराय० हरिकेशाय०

विरूपाक्षाय० पिनाकिने० त्रिपुरान्तकाय० शम्भवे० शूलिने० महादेवाय० । इति प्रदक्षिणानमस्कारान् कुर्यात् । 'ॐ नमः शिवाय' इति मन्त्रमष्टोत्तरशतं जपित्वा क्षमापयित्वाऽनेन पूजनेन साम्बसदाशिवः प्रीयतां न मम ।

ततः प्रथमप्रहरपूजायां विशेषः—ॐ ह्रां ह्रीं ह्रौं उमया सह पूजनं गृह्ण नमोऽस्तु ते इति सर्वोपचारान् समर्प्य अर्घ्यं दद्यात्—

ॐ नमस्ते देवदेवेश चन्द्रसूर्याग्निलोचन ।
गृहाणार्घ्यं मया दत्तमुमया सहित प्रभो ॥
यो मामेवं महादेवं बिल्वपत्राक्षतैः सह ।
पूजयेत्प्रथमे यामे स्वर्गलोके स गच्छति ॥

अथ द्वितीयप्रहरपूजा-ॐ ह्रां ह्रीं ह्रां पार्वत्या सह पूजनं गृह्ण नमोऽस्तु ते इति सर्वोपचारान् समर्प्यार्घ्यं दद्यात्--

ॐ वामदेव नमस्तेऽस्तु नरकार्णवतारक ।
अर्घ्यं गृहाण देवेश गङ्गाजलसमन्वितम् ॥
द्वितीये प्रहरे प्राप्ते शिवभक्तिसमन्वितः ।
संपूज्य बिल्वपत्रैस्तु जीवन्मुक्तो न संशयः ॥

अथ तृतीयप्रहरपूजा-ॐ ह्रीं ह्रूं ह्रां गौर्या सह पूजां गृह्ण नमोऽस्तु ते इति सर्वोपचारान् समर्प्य अर्घ्यं दद्यात्—

ॐ नमोऽस्तु गिरिजानाथ प्रणतार्तिविनाशन ।
गृहाणार्घ्यं मया दत्तं कामान्तक नमोऽस्तु ते ॥
तृतीये प्रहरे प्राप्ते भक्तियुक्तश्च यो नरः ।
बिल्वपत्राक्षतैः पूज्य सर्वलोके महीयते ॥

अथ चतुर्थप्रहरपूजा-ॐ ह्रीं ह्रौं ह्रां नीललोहित गौर्या सह पूजां गृह्ण नमोऽस्तु ते इति सर्वोपचारान् समर्प्य अर्घ्यं दद्यात्--

ॐ सफलं साक्षतं चैव सुदूर्वाङ्कुरशोभितम् ।

अर्घ्यं गृह्ण मया दत्तं भीमरूप नमोऽस्तु ते ॥
चतुर्थे प्रहरे प्राप्ते भक्त्या तु वृषभध्वजम् ।
बिल्वपत्राक्षतैः पूज्य रुद्रलोके महीयते ॥

सर्वपूजान्ते प्रार्थना—

नित्यं नैमित्तिकं काम्यं यत्कृतं तु मया शिव ।
तत्सर्वं परमेशान मया तुभ्यं समर्पितम् ॥

एवं पूजनजपकथादिना जागरणेन रात्रिं निनीय प्रभाते स्नात्वा पुनः शिवं संपूज्य तिलपक्वान्नफलदक्षिणासमेतं कुम्भं संपूज्य अद्येहेत्यादि अमुकोऽहं कृतस्य शिवरात्रिनिराहारव्रतस्य साङ्गतासिद्ध्यर्थं श्रीशिवप्रीतये तिलपक्वान्नफलवस्त्रदक्षिणासमेतमिमं कुम्भं ब्राह्मणाय दास्ये इति संकल्प्य विप्रं संपूज्य दत्त्वा व्रतं समर्पयेत्—

यन्मयाऽद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् ।
त्वत्प्रसादान्महादेव व्रतमद्य समर्पितम् ॥
प्रसन्नो भव मे श्रीमन् सद्गतिः प्रतिपाद्यताम् ।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥

ततो ब्राह्मणान् भोजयित्वाऽच्छिद्रं वाचयित्वा पूर्वनिर्णीते काले स्वजनैः सह पारणं कुर्यात् । तत्र मन्त्रः—

संसारक्लेशदग्धस्य व्रतेनानेन शंकर ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥ इति ।

अथ फाल्गुनशुक्लपूर्णिमा होलिका । तद्विधिर्ज्योतिर्निबन्धे—

पञ्चमीप्रमुखास्तासु तिथयोऽनन्तपुण्यदाः ।
दश स्युः शोभनास्तासु काष्ठस्तेयं विधीयते ॥
चाण्डालसूतिकागेहाच्छिशुहारितवह्निना ।
प्राप्तायां पूर्णिमायां तु कुर्यात्तत्काष्ठदीपनम् ॥

ग्रामाद्बहिश्च मध्ये वा तूर्यनादसमन्वितः ।
स्नात्वा राजा शुचिर्भूत्वा स्वस्तिवाचनतत्परः ॥
दत्त्वा दानानि भूरीणि दीपयेद्धोलिकाचितिम् ।
ततोऽभ्युक्ष्य चितिं सर्वां साज्येन पयसा सुधीः ॥
नारिकेलानि देयानि बीजपूरफलानि च ।
गीतवाद्यैस्तथा नृत्यै रात्रिः सा नीयते जनैः ॥
तमग्निं त्रिः परिक्रम्य शब्दैर्लिङ्गभगाङ्कितैः ।
तेन शब्देन सा पापा राक्षसी तृप्तिमाप्नुयात् ॥

( सा ढुण्ढा )। तथा भविष्ये—

फाल्गुने मासि संप्राप्ते शुक्लपक्षे च पूर्णिमा ।
मध्ये सिंहगते चन्द्रे पूजयेच्च हुताशनम् ॥
राजद्वारे सुविस्तीर्णे गोमयोल्लिप्तमण्डले ।
चतुष्कं कारयेत्तत्र पञ्चवाद्यपुरःसरम् ॥
पताका चैव कर्तव्या काष्ठानि प्रचुराणि च ।
पञ्चवर्णपताकाश्च तस्या उपरि रोपयेत् ॥
संक्षेपेण ग्रहान् स्थाप्य होमं कुर्याद् यथोदितम् ।
वैश्वदेवस्य चाहुत्या होमं कुर्याद् यथाविधि ॥ इति ।

अथ होलिकापूजाप्रयोगः—तत्र प्रदोषे भद्रारहिते वा काले गोमयोपलिप्तं मण्डलं विधाय स्थण्डिले पञ्च भूसंस्कारान् कृत्वा स्वस्तिवाचनपुरःसरं लौकिकमग्निं संस्थाप्य ग्रहान् संपूज्य पञ्चवर्णपताकां होलिकामध्ये आरोप्य सुमुखश्चेत्यादिना पुष्पाञ्जलिं गणेशाय समर्प्य विशेषार्घ्यं संस्थाप्य संकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि देशकालौ संकीर्त्य अमुकोऽहं मम सकुटुम्बस्य वर्षावच्छिन्नसुखकामनयाऽग्नेर्ढुण्ढीराक्षस्याश्च प्रीतये तत्पीडापरिहारार्थमग्नेर्होलिकायाश्च पूजनं करिष्ये। "एतन्ते" "मनोजूतिः" इति अग्निं होलिकां पताकां च प्रतिष्ठाप्य ॐ लौकि-

कपावकाग्नये नमः इति मन्त्रेणाग्निं पञ्चोपचारैः संपूज्य शुष्कका-
ष्ठगोमयपिण्डादिकृतराशिरूपां होलिकां सन्दीप्य पूजयेत् ।

अस्मृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥

इति मन्त्रेण ॐ होलिकायै नमः इत्यन्तेन होलिकां सं
पूज्य पुष्पाञ्जलिचतुष्कं सर्वे समर्पयेयुः—ॐ होलिकायै नमः १
ॐ शीतोष्णायै नमः २ ॐ फाल्गुन्यै नमः ३ ॐ आनन्दायै
नमः ४ इति । ततः प्रार्थना—

यदुच्छिष्टेन संसृष्टः पादेन प्रतिघातितः ।
तत्पापं क्षम्यतां देव हव्यवाह नमोऽस्तु ते ॥
यन्मया शीतभीतेन पादस्पृष्टोऽसि कामतः ।
उच्छिष्टेन च संस्पृष्टो होलिका पूजिता मया ॥
वन्दिताऽसि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥

ततः प्रदक्षिणा—

नित्यं प्रदक्षिणां मेरोः करोति सविता यथा ।
तथा कृता मया वह्ने सहोलिक नमोऽस्तु ते ॥

ततः सर्वे जना नृत्यगीतवाद्यहासादिपुरःसरं रात्रिं न-
यीरन् ।

होलिकाङ्गारपक्वान्नं यो भक्षयति तद्दिने ।
यावत्संवत्सरं पूर्णं क्लेशभाक् न भवेद्धि सः ॥ इति ।

अथ चैत्रमासः । मीने पराः षोडश नाड्यः पुण्याः ।

**चैत्रकृष्णप्रतिपदि धूलिवन्दनविधिर्हेमाद्रौ भविष्ये—**

चैत्रे मासि महाबाहो पुण्ये तु प्रतिपद्दिने ।
यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्याद् यथाविधि ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ।

प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ॥
कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः ।
वन्दयेद्‌ धूलिकाभूमिं सर्वदुःखोपशान्तये ॥

तथा—

प्रभाते विमले जाते ह्यङ्गे भस्म च कारयेत् ।
सर्वाङ्गे च ललाटे च क्रीडितव्यं पिशाचवत् ॥
सिन्दूरैः कुङ्कुमैश्चैव धूलिभिर्धूसरो भवेत् ।
गीतं वाद्यं च नृत्यं च कुर्याद्रथ्योपसर्पणम् ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ।
एकीभूय प्रकर्तव्या क्रीडा या फाल्गुने सदा ।
बालकैः सह गन्तव्यं फाल्गुन्यां च युधिष्ठिर ॥

भस्मधारणे मन्त्रः—

वसन्तारम्भसम्भूते सुरासुरनमस्कृते ।
संवत्सरकृतं पापं क्षमस्व मम होलिके ॥
वन्दिताऽसि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वां धारयिष्यामि विभूते भूतिदा भव ॥ इति ।

इति व्रतविधिपूजाप्रकरणे

श्रीगुरुः शरणम् ।

# वर्षकृत्यदीपकोत्तरार्धे

## उद्यापनप्रकरणम् ।



अथोद्यापनविधिः-

कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ।
उद्यापनं विना यत्तु तद् व्रतं निष्फलं भवेत् ॥

इति नन्दिपुराणवचनाद् व्रतसमाप्तौ-

आदौ मध्येऽथवाऽप्यन्ते व्रतस्योद्यापनं भवेत् ।

इति वचनान्तराच्च व्रतादौ व्रतमध्ये व्रतान्ते वा व्रतोद्यापनस्यावश्यकर्तव्यत्वप्रतीते रामनवम्यादिव्रतनिरूपणानन्तरमुद्यापनानि निरूप्यन्ते । उद्यापनं च केषुचिदेकादश्यादिव्रतेषु विशिष्य विहितम् । येष्वपि विशिष्य न विहितं तत्रापि व्रतस्योद्यापनानुक्तौ—

यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ।

इति नन्दिपुराणवचनादुद्यापनमवश्यं कर्त्तव्यमेव । व्रतानुगुणत इत्यस्य यस्मिन्व्रते या देवता तां सर्वतोभद्रे ब्रह्मादिदेवतास्थापनं कृत्वा तत्र विधानस्थापिते कुम्भेऽधिवास्य तद्दैवताको होमः कार्य इत्यर्थः कृष्णंभट्टेन प्रतिपादितः । शिवव्रते तु लिङ्गतोभद्रमण्डले ब्रह्मादिदेवतास्थापनं कुर्यादिति विशेषोऽपि तत्रैवोक्तः । अत्राशक्तौ—

वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते ।
गाश्चैव काञ्चनं दद्याद् व्रतस्य परिपूर्तये ॥

इति नन्दिपुराणवचनाद् यथाशक्ति गोदानं काञ्चनदानं वा व्रतपरिपूर्तये कर्तव्यम् ।

सर्वेषामप्यलाभे तु यथोक्तकरणं विना ।
विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥

इति नारदीयवचनाद् विप्रवचनग्रहणमपि किञ्चिद्रौप्यदानं काञ्चनदानं वा कृत्वाऽनुष्ठेयम्—

वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभम् ।
अदत्त्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥

इति तत्रैव वचनात् ।

रामनवमीव्रतोद्यापने—

भूमौ गोमयलिप्तायां सर्वतोभद्रसंज्ञकम् ।
रचयेत्सप्तधान्येन नानारङ्गैः सुशोभितम् ॥
कुम्भमेकं मध्यदेशे स्थापयेत्तण्डुलोपरि ॥

इति स्कान्दवचनेन विधानात्सर्वतोभद्रमण्डले कुम्भस्थापनपूर्वकं देवताप्रतिमास्थापनं लभ्यते ।

ततोऽग्निं च प्रतिष्ठाप्य स्वशास्त्रोक्तविधानतः ।
विष्णुसूक्तेन होतव्यं मूलमन्त्रेण वा पुनः ॥

इति स्कान्दाद्यान्ते होमोऽपि लभ्यते ।

सर्वतोभद्रमण्डलं स्कान्दे—

प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिम् ।
खण्डेन्दुस्त्रिपदः कोणे, पञ्चपादा तु शृङ्खला ॥
एकादशपदा वल्ली, नवभिः पार्श्वभद्रकम् ।
चतुर्विंशत्पदा वापी, परिधिर्विंशता पदैः ॥
मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ।
श्वेतेन्दुः, शृङ्खला कृष्णा, वल्लीं नीलेन पूरयेत् ॥
भद्राऽरुणा, सिता वापी, परिधिः पीतवर्णकः ।
बाह्यान्तरदले श्वेता कर्णिका पीतवर्णिका ॥
परिध्यावेष्टितं पद्म बाह्ये सत्त्वं रजस्तमः ।

तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरेश्वरान् ॥

अथ तत्रैव मण्डलदेवताः—

आवाह्य मध्ये ब्रह्माणं लोकपालानुदग्यजेत् ।
सोम ईशान इन्द्रोऽथ वह्निर्यमश्च निर्ऋतिः ॥
वरुणश्चापि वायुश्च लोकपालाः क्रमान्मताः ।
वायुसोमान्तर्वसवो, रुद्राः सोमेशमध्यगाः ॥
ईशेन्द्रान्तरथादित्या, महेन्द्राग्न्यन्तराश्विनौ ।
यमाग्न्यन्तः सपितृकान् विश्वान्देवान् यजेद् बुधः ॥
यमनिर्ऋतिमध्ये तु सप्त यक्षानथो यजेत् ।
रक्षोवरुणयोर्मध्ये भूतनागानथो यजेत् ॥
गन्धर्वाप्सरसो देवान् मध्ये वरुणवातयोः ।
स्कन्दनन्दीश्वरौ शूलमहाकालौ च सोमतः ।
ब्रह्मणः सप्त दक्षादीनीशानादिन्द्रतो यजेत् ॥

( ब्रह्मसोममध्ये ब्रह्मेशानमध्ये ब्रह्मेन्द्रमध्ये इत्यर्थः । )

दुर्गाविष्णू स्वधामग्नेर्यमाद्वै मृत्युरोगकान् ।
निर्ऋतेः श्रीगणपतिं वरुणादप एव च ॥
वायुतो मरुतश्चैष्ट्वा ब्रह्मपादे धरां यजेत् ।
कर्णिकाधश्च तत्रैव नदीर्गङ्गादिका यजेत् ॥
तत्रैव सागरान सप्त पूजयेद्वरुणालयान् ।

( ब्रह्मपादमूले कर्णिकाधः पृथ्वीं नदीः सागरांश्च यजेदित्यर्थः ) । एतदन्तो वैदिको नाममन्त्रो वा पूजाहोममन्त्रः ।

तस्योपरि सुमेरुं च मण्डलाद्बाह्यतोऽप्युदक् ॥

( उदीचीक्रमेण सोमादिक्रमेणेति यावत् । )

गोतमश्च भरद्वाजो विश्वामित्रश्च कश्यपः ।
जमदग्निर्वसिष्ठोऽत्रिररुन्धत्या च नित्यशः ।
पूर्वादितश्च तद्बाह्ये ऐन्द्रीं कौमारिकामपि ।

ब्राह्मीं तथा च वाराहीं चामुण्डां वैष्णवीं तथा ॥
माहेश्वरीं वैनायकीं यावष्टशक्तीः समर्पयेत् ।
सोमादेरायुधानीह क्रमेण स्थापयेद् बुधः ॥
गदाशूले वज्रशक्ती दण्डखड्गे तथैव च ।
पाशाङ्कुशौ च तद्बाह्ये क्रमेणाथ यजेद्दर्षीन् ॥ इति ।

अथ लिङ्गतोभद्रमण्डलम्—

चतुर्विंशतिरालेख्या रेखाः प्राग्दक्षिणायताः ।
कोणेषु शृङ्खलाः पञ्चपदा वल्ल्यस्तु पार्श्वतः ॥
पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृङ्खलाः ।
लघुवल्ल्यः पदैः षड्भिस्ततोऽष्टादशभिः पदैः ॥
कृत्वा लिङ्गानि वाप्यः स्युस्त्रयोदशभिरन्तरा ।
ततो वीथीद्वयेनैव पीठं कुर्याद्विचक्षणः ॥
तस्य पदाः पञ्चपदा द्वाराण्यपि तथैव च ।
एकाशीतिपदं मध्ये पदं स्वस्तिकमुच्यते ॥
कोणेषु शृङ्खलाः कार्याः पदैस्त्रिभिस्ततः परम् ।
पदैश्चतुर्भिर्दिक्षु स्युर्भद्राण्येषां समन्ततः ॥
एकादशपदा वल्ल्यो मध्येऽष्टदलमालिखेत् ।
पद्मं नवपदं ह्येवं लिङ्गतोभद्रमुच्यते ॥
शृङ्खलाः कृष्णवर्णेन वल्लीर्नीलेन पूरयेत् ।
रक्तेन शृङ्खला लघ्वीर्वल्लीः पीतेन पूरयेत् ॥
लिङ्गानि कृष्णवर्णानि श्वेतेनाप्यथ वापिकाः ।
पीठं सपादं श्वेतेन पीतेन द्वारपूरणम् ॥
मध्ये स्युः शृङ्खला रक्ता वल्लीर्नीलेन पूरयेत् ।
भद्राणि पीतवर्णानि पीना पङ्कजकर्णिका ॥
दलानि श्वेतवर्णानि यद्वा चित्राणि कल्पयेत् ।
तिस्रो रेखा बहिः कार्याः सितारक्ताऽसिताः क्रमात् ॥ इति ।

अथैकादशीव्रतस्य सम्पूर्णोतिकर्तव्यता।।विशिष्टस्य विहित-त्वात्सर्वव्रतप्रकृतिभूतत्वेन प्रथमं तदुद्यापनविधिरुच्यते--

स्नानं कृत्वा मन्त्रपूर्वं नद्यादौ विमले जले ।
तर्पयित्वा पितॄन्देवान्पूजयेद्गरुडध्वजम् ॥
उपलिप्य शुचौ देशे कीटकेशास्थिवर्जिते ।
वर्णैश्च सर्वतोभद्रं नीलपीतसितासितैः ॥
मण्डलं चोद्धरेद् भूप सर्वकर्मसु पूजितम् ।
अथवा तण्डुलानां च अष्टपत्राम्बुजं चरेत् ॥
वारिपूर्णं घटं ताम्रं पात्रं रौप्यसमुद्भवम् ।
जातरूपमयं देवं लक्ष्म्या युक्तं जनार्दनम् ॥
साक्षतं सोपवीतं च सहिरण्यं सवाससम् ।
अक्षमालासमायुक्तं शङ्खचक्रगदाधरम् ॥
शक्त्या सुवर्णपुष्पैश्च पूजनं पुष्टिवर्धनम् ।
अन्यै ऋतूद्भवैः पुष्पैरर्चयेद्विधिवन्नरः ॥
नैवेद्यानि चतुर्विंशमथ दद्यादनुक्रमात् ।
भक्त्या चतुर्विंशतिषु तिथिष्वपि परन्तप ॥
इच्छया वा तदा दद्याद्यदैवोद्यापनं भवेत् ।
मोदकान् गुडकांश्चूर्णान् घृतपूरकमण्डकान् ॥
सोहालिकादिकं सारः सेवा सक्तव एव च ।
वटकान् पायसं दुग्धं शालिदध्योदनं तथा ॥
इण्डीकान् पूरिकान् पार्थ अपूपान् गुडमोदकान् ।
तिलपिष्टं खण्डपिष्टं शिलापिष्टं सशर्करम् ॥
रम्भाफलं च सघृतं मुद्गचूर्णं गुडोदनम् ।
एवं क्रमेण नैवेद्यं पृथग्वा चरमेऽहनि ॥
शुभेन नालिकेरेण बीजपूरेण वा पुनः ।
हृदि ध्यात्वा जगन्नाथं दद्यादर्घ्यं विधानतः ॥

साक्षतं च सपुष्पं च सजलं चन्दनान्वितम् ।
पूर्वोक्तेनैव मन्त्रेण व्रतपूर्तिकरः सुधीः ॥
रात्रौ जागरणं कुर्याद्गीतशास्त्रविनोदतः ।
प्रभाते विमले स्नात्वा विप्राणां कारयेत्क्वचित् ॥
चतुर्विंशतिसंख्याकान् विप्रानागमदर्शिनः ।
सर्वं कुर्याद्विधानेन जपहोमार्चनादिकम् ॥
शतमष्टोत्तरं होमः सर्वत्रापि प्रशस्यते ।
इदं विष्णुर्द्विजातीनां होममन्त्रः प्रकीर्त्तितः ॥
शूद्राणां चैव सर्वेषां मन्त्रमष्टाक्षरं विदुः ।
विविधैरपि वस्त्रैश्च भाजनैरासनैः सह ॥
पादत्राणं नवां गां च दद्यात्पार्थ पृथक् पृथक् ।
द्वादशैवाथवा शक्त्या वस्त्रालङ्कारभूषणैः ॥
पूजयेत्पुष्पमालाभिः सपत्नीकान द्विजोत्तमान ।
कुम्भा द्वादश दातव्याः पक्वान्नजलपूरिताः ॥
भोजयित्वा ततो विप्रान भक्तितो विचरेद्बुधः ।
एका हि कपिला देया सर्वकामफलप्रदा ॥
यथा स्वर्गश्च मोक्षश्च इह संपूर्णता व्रते ।
सपत्नीको गुरुः पूज्यो मण्डले हरिसंनिधौ ॥
भूषणैश्छादनैर्भोज्यैः प्रणामैः परितोषयेत् ।
नमस्ते कपिले देवि संसारार्णवतारिणि ॥
मया दत्ता द्विजेन्द्राय प्रीयतां मे जनार्दनः ।
समाप्य वैष्णवं श्राद्धं दद्यात्सर्वं धनञ्जय ॥
इष्टं चान्यद् यथाशक्त्या वित्तशाठ्याविवर्जितः ।
जलदानं विशेषेण भूरिदानमतः परम् ॥
प्रार्थयेत्पुरुषाधीशं ततो भक्त्या कृताञ्जलिः ।
मया ह्यस्मिन्व्रते देव यदपूर्णं कृतं विभो ॥

सर्वं भवतु संपूर्णं त्वत्प्रसादाद्रमापते ।
प्रदक्षिणां ततः कृत्वा दण्डवत्प्रणमेत्प्रभुम् ॥
मण्डलं मूर्तिसंयुक्तं सोपहारं सदक्षिणम् ।
प्रीयतां विष्णुरित्युक्त्वा आचार्याय निवेदयेत् ॥
सर्वं विसर्जयेत्पश्चात्संभोज्य परितोष्य च ।
तदाज्ञया ततः कुर्यात्पारणं बन्धुभिः सह ॥ इति ।

अथैकादशीव्रतोद्यापनप्रयोगः—तत्रोद्यापनकर्ता दशम्यां प्रातरावश्यकदन्तधावन दि प्रातःसन्ध्यान्तं विधाय मध्याह्ने माध्याह्निकं कृत्यमनुष्ठायैकभक्तविधिना हविष्याशी सायन्तनविधेरन्ते ब्रह्मचर्यभूशयनादिनियमवान्भवेत् । एकादश्यां प्रातरावश्यकान्ते शुचिजलाशये समन्त्रकं प्रातःस्नानं सन्ध्यां च विधाय शुचिः समाहितः श्रीफलाद्युपायनपाणिः व्रतोपदेष्टारं गुरुं गत्वा प्रणम्य प्रार्थयेत्—

अस्मदीयं व्रतं विप्र हरितामरसम्भवम् ।
संपूर्णं तु भवेद् येन तत्कुरुष्व द्विजोत्तम ॥

इति संप्रार्थ्य देवगुर्वोरग्रे व्रतनियमं पठेत् । जलफलगन्धाक्षतपुष्पयुतं ताम्रपात्रं करयोः कृत्वा—

एकादश्यां निराहारः स्थित्वा चैव परेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥

इति मन्त्रेण पात्रस्थं जलं भूमौ क्षिपेत् । ततो मध्याह्नस्नानतर्पणादि यथाविधि विधाय गृहानागत्य शुचौ देशे चतुर्द्वारं मण्डपं निर्माय तोरणेषु आम्रपल्लवादीनि बध्वा मण्डपमध्ये वेदिकां निर्माय तत्र वर्णकैः सर्वतोभद्रमण्डलं विलिख्य श्वेततण्डुलैरष्टदलं कमलं वा निर्माय तस्याष्टदिक्षु पूर्वादिक्रमेणाव्रणान् शुद्धोदकपूरितानश्वत्थादिपल्लवनारिकेरफलयुतान् वस्त्रवेष्टितान्

चन्दनाक्षतादिभूषितान् अष्टकुम्भान् संस्थाप्य तन्मध्ये द्रोणचतुष्टयतण्डुलराशिं कुर्यात् ।

ततः स्वासने प्राङ्मुख उदङ्मुखो वोपविश्य दीपं प्रज्वाल्य संपूज्याचम्य 'स्वस्ति नो मिमीताम्' इत्यादि शान्तिपाठं (स्वस्तिवाचनं) पठित्वा गणेशं पूजयेत्। तत्र संकल्पः-ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणैकादशीव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्धये श्रीभगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं संपूज्य सामान्यार्घ्यादिविशेषार्घ्यस्थापनान्तं कृत्वा प्रधानसंकल्पं कुर्यात्—ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयकामः श्रीकृष्णप्रीतये कृतस्यैकादशीव्रतस्य संपूर्णतासिद्धये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेन मातृकापूजनाभ्युदयिकश्राद्धपुण्याहवाचनकलशस्थापनग्रहावाहनपूजनानि करिष्ये इति संकल्प्य मातृकापूजनादिपुण्याहवाचनान्तं विधायाचार्यवरणं कुर्यात्—अमुकगोत्रोऽमुकशर्माहं यजमानः अमुकगोत्रममुकशर्माणं स्वशाखाध्यायिनं ब्राह्मणं त्वामस्मिन्नेकादशीव्रतोद्यापनाख्ये कर्मणि आचार्यकर्म कर्तुमाचार्यत्वेन वृणे । वृतोऽस्मीति आचार्यः प्रतिवदेत् । ततो यजमानः—'आचार्यस्तु'० इति प्रार्थयेत् । एवं ब्रह्मणो वरणं कृत्वा 'यथा चतुर्मुखो ब्रह्मा० इति प्रार्थयेत् ।

अथाचार्यः आसनोपवेशनपूर्वकमाचम्य प्राणानायम्य अस्मिन्नेकादशीव्रतोद्यापनकर्मणि कर्माधिकारार्थमात्मनः शुद्ध्यर्थं च पुरुषसूक्तजपमहं करिष्ये इति संकल्प्य पुरुषसूक्तजपं कुर्यात् ।

ततो मण्डपवेद्या ईशाने कलशस्थापनाविधिना कलशं संस्थाप्य सर्वतोभद्रे मण्डलदेवतास्थापनं कुर्यात् । तच्च दध्यक्षतपुञ्जेषु पूगीफलेषु वा कार्यम् । तत्र मण्डलमध्ये—ॐ

भूर्भुवःस्वः ब्रह्मन् इहागच्छ इत्यावाह्य ॐ ब्रह्म जज्ञानं० ॐ ब्रह्मणे नमः ब्रह्मन् इह तिष्ठ इति स्थापयेत् । तत उत्तरादिशि ॐ भूर्भुवःस्वः सोम इहागच्छ इत्यावाह्य ॐ इमं देवा० ॐ सोमाय नमः सोम इह तिष्ठ इति स्थापयेत्। ईशाने-ॐ भू०ईशान इहागच्छ इत्यावाह्य ॐ तमीशानं० ॐ ईशानाय नमः ईशान इह तिष्ठेति स्थापयेत्। पूर्वे-ॐ भू० इन्द्र इहागच्छ इत्यावाह्य ॐ त्रातारमिन्द्रम्० ॐ इन्द्राय नमः इन्द्र इह तिष्ठेति स्थापयेत् । आग्नेये-ॐ भू० अग्ने इहागच्छ इत्यावाह्य ॐ अग्निं दूतम्० ॐ अग्नये नमः अग्ने इह तिष्ठेति स्थापयेत् । दक्षिणे—ॐ भू० यम इहागच्छ इत्यावाह्य—ॐ असि यमोऽअस्यादित्यः० ॐ यमाय नमः यम इह तिष्ठेति स्थापयेत् । नैर्ऋते—ॐ भू० निर्ऋते इहागच्छ इत्यावाह्य ॐ एष ते निर्ऋते० ॐ निर्ऋतये नमः निर्ऋते इह तिष्ठेति स्थापयेत् । पश्चिमे—ॐ भू० वरुण इहागच्छेत्यावाह्य—ॐ इमं मे वरुण०ॐ वरुणाय नमः वरुण इह तिष्ठेति स्थापयेत् । वायव्यां- ॐभू० वायो इहागच्छेत्यावाह्य ॐवातो वा० ॐ वायवे नमः वायो इह तिष्ठेति स्थापयेत् ।

वायुसोममध्ये--ॐ भू० वसव इहागच्छतेत्यावाह्य ॐ सुगा वो देवाः सदनाऽअकर्म यऽआजग्मेदꣳ सवनं जुषाणाः। भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि (य०सं०८-१८)॥ ॐ वसुभ्यो नमः वसव इह तिष्ठतेति स्थापयेत् । सोमेशानमध्ये— ॐ भू० रुद्रा इहागच्छतेत्यावाह्य ॐ असमे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः । यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः(य०सं०३३-५०)॥ ॐ रुद्रेभ्यो नमःरुद्रा इह तिष्ठतेति स्थापयेत् । इन्द्रेशानमध्ये—ॐ भू०

आदित्या इहागच्छतेत्यावाह्य ॐ आकृष्णेन० ॐ आदित्येभ्यो नमः आदित्या इह तिष्ठतेति स्थापयेत् । इन्द्राग्निमध्ये—ॐ भू० अश्विनौ इहागच्छतमित्यावाह्य ॐ या वां कशा० ॐ अश्विभ्यां नमः अश्विनौ इह तिष्ठतम् इति स्थापयेत् । यमाग्निमध्ये-ॐ भू० सपितृका विश्वेदेवा इहागच्छतेत्यावाह्य ॐ विश्वेदेवास आगत० सपितृकेभ्यो विश्वेभ्यो देवेभ्यो नमः सपितृका विश्वेदेवा इह तिष्ठतेति स्थापयेत् । यमनिर्ऋतिमध्ये-ॐ भू० यक्षा इहागच्छत इत्यावाह्य ॐ अभि त्यं देवम्० ॐ सप्तयक्षेभ्यो नमः यक्षा इह तिष्ठतेति स्थापयेत् । निर्ऋतिवरुणयोर्मध्ये--ॐ भू० भूतनागा इहागच्छत इत्यावाह्य ॐ आयं गौः पृश्निरक्रमी० ॐ भूतनागेभ्यो नमः भूतनागा इह तिष्ठत इति स्थापयेत् । वरुणवातयोर्मध्ये-ॐ भू० गन्धर्वाप्सरस इहागच्छतेत्यावाह्य ॐ ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम । स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ( य० सं० १८-३८ ) । ॐ गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरस इह तिष्ठतेति स्थापयेत् ।

ब्रह्मसोममध्ये—ॐ भू० स्कन्द इहागच्छेत्यावाह्य ॐ यदक्रन्दः प्रथमं० ॐ स्कन्दाय नमः स्कन्द इह तिष्ठेति स्थापयेत् । तत्समीपे एव--ॐ भू० नदीश्वर इहागच्छेत्यावाह्य आशुः शिशानो० । ॐ नन्दीश्वराय नमः नन्दीश्वर इह तिष्ठेति स्थापयेत् । ब्रह्मेशानयोर्मध्ये--ॐ भू० शूल इहागच्छेत्यावाह्य ॐ यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति । मा तद् भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ( य० सं० २५-३४ ) ॐ शूलाय नमः शूल इह तिष्ठेति स्थापयेत् । तत्रैव-ॐ भू०

महाकाल इहागच्छेत्यावाह्य ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः॥ (य०सं०६-२८)। ॐ महाकालाय नमः महाकाल इह तिष्ठेति स्थापयेत्। ब्रह्मेन्द्रमध्ये-ॐ भू० दक्षा इहागच्छत इत्यावाह्य ॐ प्रजापते न त्वदे० ॐ दक्षेभ्यो नमः दक्षा इह तिष्ठतेति स्थापयेत्। ब्रह्माग्निमध्ये-ॐ भू० दुर्गे इहागच्छेत्यावाह्य ॐ दुर्गायै नमः दुर्गे इह तिष्ठेति स्थापयेत्। तत्रैव—ॐ भू०विष्णो इहागच्छेत्यावाह्य ॐ विष्णो रराटमसि० ॐ विष्णवे नमः विष्णो इह तिष्ठेति स्थापयेत्। तत्रैव— ॐ भू० स्वधे इहागच्छेत्यावाह्य ॐ उदीरतामवर० ॐ स्वधायै नमः स्वधे इह तिष्ठेति स्थापयेत्। ब्रह्मयममध्ये—ॐ भू० मृत्युरोगा इहागच्छतेत्यावाह्य ॐ परं मृत्यो अनुपरेहि० ॐ मृत्युरोगेभ्यो नमः मृत्युरोगा इह तिष्ठतेति स्थापयेत्। ब्रह्मनिर्ऋतिमध्ये-ॐ भू० गणपते इहागच्छेत्यावाह्य ॐ गणानां त्वा० ॐ गणपतये नमः गणपते इह तिष्ठेति स्थापयेत्। ब्रह्मवरुणयोर्मध्ये—ॐ भू० आप इहागच्छतेत्यावाह्य ॐ शन्नो देवीरभिष्टये० ॐ अद्भ्यो नमः आप इह तिष्ठतेति स्थापयेत्। ब्रह्मवायुमध्ये--ॐ भू० मरुत इहागच्छतेत्यावाह्य ॐ मरुतो यस्य हि क्षये० ॐ मरुद्भ्यो नमः मरुत इह तिष्ठतेति स्थापयेत्।

ब्रह्मपादमूले कर्णिकाधः-ॐ भू० पृथिवि इहागच्छेत्यावाह्य ॐ स्योना पृथिवि नो० ॐ पृथिव्यै नमः पृथिवि इह तिष्ठेति स्थापयेत्। तत्रैव--ॐ भू० गङ्गादिसप्तनद्य इहागच्छतेत्यावाह्य ॐ नदीभ्यः पौञ्जिष्ठमृच्चीकाभ्यो० ॐ गङ्गादिसप्तनदीभ्यो नमः गङ्गादिसप्तनद्य इह तिष्ठतेति स्थापयेत्। तत्रैव—ॐ भू० सप्तसागरा इहागच्छतेत्यावाह्य ॐ मापो मौ-

षष्ठीहिं स्वीषोम्नो धाम्नो० ॐ सप्तसागरेभ्यो नमः सप्तसागरा इह तिष्ठतेति स्थापयेत्। तदुपरि-ॐ भू० मेरो इहागच्छेत्यावाह्य ॐ मेरवे नमः मेरो इह तिष्ठेति स्थापयेत्।

उत्तरे--ॐ भू० गोतम इहागच्छेत्यावाह्य ॐ गोतमाय नमः गोतम इह तिष्ठेति स्थापयेत्। ऐशान्यां-ॐ भू० भरद्वाज इहागच्छेत्यावाह्य ॐ भरद्वाजाय नमः भरद्वाज इह तिष्ठेति स्थापयेत्। पूर्वे-ॐ भू० विश्वामित्र इहागच्छेत्यावाह्य ॐ विश्वामित्राय नमः विश्वामित्र इह तिष्ठेति स्थापयेत्। आग्नेय्यां-ॐ भू० कश्यप इहागच्छ० ॐ कश्यपाय नमः० इह तिष्ठ०। दक्षिणे-ॐ भू० जमदग्ने इहागच्छ० ॐ जमदग्नये नमः० इह तिष्ठ०। नैर्ऋत्याम्-ॐ भू० वसिष्ठ इहागच्छ० ॐ वसिष्ठाय नमः० इह तिष्ठ०। पश्चिमे-ॐ भू० अत्रे इहागच्छ० ॐ अत्रये नमः० इह तिष्ठ०। वायव्यां-ॐ भू० अरुन्धति इहागच्छ० ॐ अरुन्धत्यै नमः० इह तिष्ठ०।

पूर्वादिक्रमेण तद्बाह्ये पूर्वे-ॐ भू० ऐन्द्रि इहागच्छ० ॐ ऐन्द्र्यै नमः० इह तिष्ठ०। आग्नेय्यां-ॐ भू० कौमारि इहागच्छ० ॐ कौमार्यै नमः० इह तिष्ठ०। दक्षिणे--ॐ भू० ब्राह्मि इहागच्छ० ॐ ब्राह्म्यै नमः० इह तिष्ठ०। नैर्ऋत्यां-- ॐ भू० वाराहि इहागच्छ० ॐ वाराह्यै नमः० इह तिष्ठ०। पश्चिमे-ॐ भू० चामुण्डे इहागच्छ० ॐ चामुण्डायै नमः० इह तिष्ठ०। वायव्यां-ॐ भू वैष्णवि इहागच्छ० ॐ वैष्णव्यै नमः० इह तिष्ठ०। उत्तरे-ॐ भू० माहेश्वरि इहागच्छ० ॐ माहेश्वर्यै नमः० इह तिष्ठ०। ऐशान्यां-ॐ भू० वैनायकि इहागच्छ० ॐ वैनायक्यै नमः० इह तिष्ठ०।

सोमसमीपे उत्तरे--ॐ भू० गदे इहागच्छ० ॐ गदायै नमः०इह तिष्ठ०। ऐशान्यां ईशानसमीपे--ॐ भू० त्रि-

शूल इहागच्छ० ॐ त्रिशूलाय नमः० इह तिष्ठ० । इन्द्रस-मीपे पूर्वे-ॐ भू० वज्र इहागच्छ० ॐ वज्राय नमः० इह तिष्ठ० । आग्नेय्यामग्निसमीपे-ॐ भू० शक्ते इहागच्छ० ॐ शक्तये नमः० इह तिष्ठ० । दक्षिणे यमसमीपे—ॐ भू० दण्ड इहागच्छ० ॐ दण्डाय नमः इह तिष्ठ० । नैर्ऋत्यां निर्ऋ-तिसमीपे-ॐ भू० खड्ग इहागच्छ० ॐ खड्गाय नमः०इह ति-ष्ठ०। पश्चिमे वरुणसमीपे-ॐ भू० पाश इहागच्छ० ॐ पाशाय नमः० इह तिष्ठ० । वायव्यां वायुसमीपे—ॐ भू अङ्कुश इहागच्छ० ॐ अङ्कुशाय नमः० इह तिष्ठेति स्थापयेत् ।

तत 'एतन्ते' "मनोजूतिः" इति प्रतिष्ठाप्य ॐ 'ब्रह्मणे नमः' इत्यादिपूर्वोक्तनाममन्त्रैः पञ्चोपचारपूजनं कुर्यात् । ततो यजमानः स्थापितकलशोपरि राैप्यपात्रं निधाय तत्र श्रीलक्ष्मीनारायणप्र-तिमां सौवर्णीमग्न्युत्तारणपूर्वकं पञ्चामृतस्नापितां संस्थाप्य "एत-न्ते" "मनोजूतिः" इति प्रतिष्ठां पूर्वोक्तविधिना (पृ० १३३) प्राणप्रतिष्ठां च विधाय ध्यायेत्—

जातरूपमयं देवं लक्ष्म्या युक्तं जनार्दनम् ।
सस्मितं सोपवीतं च सहिरण्यं सवाससम् ॥
अक्षमालासमायुक्तं शङ्खचक्रगदाधरम् ।
पद्मासीनं मेघवर्णं स्फुरत्कुण्डलराजितम् ॥
ॐ उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजेत् ॥

आवाहनम्-ॐ सहस्रशीर्षा०--

आवाहयाम्यहं देव भक्तानामभयप्रदम् ।
सुस्निग्धं वरदं शान्तं मनसाऽऽवाहयेद्धरिम् ॥

आसनम्—ॐ पुरुष एवेदꣳसर्वं०—

सुवर्णमणिभिर्दिव्यैः खचिते देवनिर्मिते ।
दिव्यासिंहासने स्निग्धे प्रविश त्वं सुरालये ॥

पाद्यम्–ॐ एतावानस्य०—

पादोदकं सुरश्रेष्ठ सुवर्णकलशस्थितम् ।
गन्धपुष्पाक्षतैर्युक्तं गृहाण रमया सह ॥

अर्घ्यम्–ॐ त्रिपादूर्ध्व०—

अष्टद्रव्यसमायुक्तं स्वर्णपात्रस्थितं जलम् ।
अर्घ्यं गृहाण देवेश भक्तानामभयंकर ॥

आचमनीयम्—ॐ ततो विराड०—

देवदेव नमस्तुभ्यं पुराणपुरुषोत्तम ।
मयानीतमिदं तोयं गृहीत्वाऽऽचमनं कुरु ॥

ॐ पयः पृथिव्यामित्यादिपूर्वोक्तमन्त्रैः पञ्चामृतस्नानं विधाय ॐ श्रीलक्ष्मीनारायणाय नमः गन्धोदकस्नानं०। आपो हिष्ठा० ॐ श्रील० शुद्धोदकस्नानं० ।

स्नानम्—ॐ तस्माद्यज्ञात्सर्वहुतः संभृतं०—

नदीनां चैव सरसां मयाऽऽनीतं जलं शुभम् ।
अनेन त्वं कुरु स्नानं मन्त्रैर्वारुणकैः शुभैः ॥

ॐ श्रील०स्नानाङ्गमाचमनीयं० ।

वस्त्रम्—ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः०—

वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितम् ।
पीताम्बरं नमस्तेऽस्तु गृहाण मदनुग्रहात् ॥

ॐ श्रील० आचमनीयं० । यज्ञोपवीतम्–ॐ तस्मादश्वा०—

नारायण नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥

ॐ श्री लक्ष्मी० यज्ञोपवीताङ्गमाचमनीयं० । गन्धः—ॐ तं यज्ञं०—

चन्दनं मलयोद्भूतं कस्तूर्यगुरुसम्भवम् ।
कर्पूरेण च संयुक्तं स्वीकुरुष्वानुलेपनम् ॥

पुष्पाणि—ॐ यत्पुरुषं०—

शतपत्रैः कर्णिकारैश्चम्पकैर्मालिकादिभिः ।
पुष्पैर्नानाविधैर्देव पूजयामि नमोऽस्तु ते ॥

तुलसीदलानि—

तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ॥

अथाङ्गपूजा—दामोदराय नमः पादौ पूजयामि । माधवाय० जानुनी० । कामपतये० गुह्यं० । वामनमूर्तये० कटिं० । पद्मनाभाय० नाभिं० । विश्वमूर्तये० उदरं० । ज्ञानगम्याय० हृदयं० । श्रीकण्ठसङ्गिने० कण्ठं० । सहस्रबाहवे० बाहू० । योगयोगिने० चक्षुषी० । उरुगाय० ललाटं० । नाकसुरेश्वराय० नासिकां० । श्रवणेशाय० श्रवणे० । सर्वकामदाय० शिखां० । सहस्रशीर्षाय०शिरः० । सर्वरूपिणे० सर्वाङ्गं० । धूपः—ॐ ब्राह्मणोऽस्य०—

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

दीपः—ॐ चन्द्रमा मनसो०—

एषार्तिका सुरश्रेष्ठ गोघृतेन तु वर्तिना ।
संयुक्ता तेजसो कृष्ण गृह्यतां विश्वदीपक ॥

नैवेद्यम्— ॐ नाभ्या आसी०—

मोदकानि विचित्राणि पायसं साज्यशर्करम् ।
दधियुक्तं फलाढ्यं च नैवेद्यं प्रतिगृह्यताम् ॥

प्राणादिमुद्राः प्रदर्श्य क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रजपं विधाय गुह्यातीति समर्प्य नैवेद्यमुद्रास्य ततः किञ्चिद् विष्वक्सेनादिभ्यो दत्त्वा नाममन्त्रेण आचमनीयं दद्यात्। ॐ श्रीश्च० करोद्वर्तनार्थे चन्दनं० । फलम्-इदं फलं० ॐ याः फलिनी० ।

तांबूलम्—

नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम् ।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

भूषणार्थे द्रव्यं-ॐ हिरण्यगर्भ० । आरार्तिक्यम्-अन्तस्तेजो०

नीराजनं गृहाणेश पञ्चवर्तिभिरावृतम् ।
तेजोराशे मया दत्तं लोकानन्दकर प्रभो ॥

प्रदक्षिणा-ॐ यत्पुरुषेण० यानि कानि च० । नमस्काराः-ॐ समास्यासन्०—

नमस्ते देवदेवेश नमस्ते गरुडध्वज ।
नमस्ते विष्णवे तुभ्यं व्रतस्य फलदायक ॥

मन्त्रपुष्पाञ्जलिः-ॐ यज्ञेन यज्ञमयजन्त० ।

विशेषार्घ्यदानम्-नारिकेलबीजपूरादिफलयुतेन साक्षतपुष्पचन्दनकुशजलेन जनार्दनं हृदि ध्यात्वाऽर्घ्यं दद्यात्—

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
दामोदर नमस्तेऽस्तु गृहाणार्घ्यं नमो नमः ॥

इति पञ्चवारं जानुभ्यामवनीं गत्वा शिरसाऽर्घ्यं निवेदयेत् । अनेन षोडशोपचारपूजनाख्येन कर्मणा तेन श्रीभगवान् श्रीलक्ष्मीनारायणः प्रीयतां न मम । ॐ तत्सत् कृष्णार्पणमस्तु ।

ततः सायंसन्ध्यान्ते पुनः पञ्चोपचारपूजनपूर्वकं धूपार्तिक्यं विधाय जपस्तुतिकथागीतवादित्रमङ्गलैः रात्रिं जागरणेनातिवाहयेत् । द्वितीयदिने प्रभाते स्नानादिपूजनान्तं विधाय आचार्यो वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य पूर्वस्थापितकलशो-

परि ग्रहान् संपूज्य दक्षिणतो ब्रह्मासनमित्यादि पर्युक्षणान्तं कुर्यात्। ततो यजमानो द्रव्यत्यागसंकल्पं कुर्यात्--ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमेकादशीव्रतोद्यापनहोमकर्मणा यक्ष्ये। तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, विष्णुं साज्यपायसेन तिलैश्चेदं विष्णुरिति मन्त्रेणाष्टोत्तरशतसंख्यया, शेषेण स्विष्टकृतं, ब्रह्मादिमण्डलदेव(१)ताः प्रत्येकमेकैकयाहुत्या आज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये। एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम्। ॐ तत्सत् यथादैवतमस्तु न मम। तत आचार्यः अग्निं संपूज्य आघारावाज्यभागौ हुत्वा ॐ इदं विष्णुरिति मन्त्रेणाऽष्टोत्तरशतं साज्यं पायसं साज्यांस्तिलांश्च हुत्वा स्विष्टकृतं च हुत्वा आज्येन मण्डलदेवता भूराद्या नवाहुतीश्च हुत्वा बर्हिर्होमं संस्रवप्राशनादि प्रणीताविमोकान्तं च कर्म कुर्यात्। ततो यजमानः ब्रह्मणे पूर्णपात्रं दत्त्वा चतुर्विंशतिसंख्याकान् द्वादशसंख्याकान्वा सपत्नीकान् द्विजान् वस्त्रालङ्कारादिभिः संपूज्य पक्वान्नादियुतान् जलपूरितान् तावत्संख्याकान् घटान् तेभ्यो दद्यात्। ततो गोदानविधिना कपिलादानं विधाय प्रार्थयेत्—

नमस्ते कपिले देवि संसारार्णवतारिणि।
मया दत्ता द्विजेन्द्राय प्रीयतां मे जनार्दनः॥

इति संप्रार्थ्य आचार्याय दद्यात्। उत्तराङ्गत्वेन पुनर्देवं सम्पूज्य शय्यादानविधिना सति संभवे शय्यादानं विधाय भूय-

(१) ब्रह्मादिमण्डलदेवताहोमस्तु सर्वतोभद्रमण्डलब्रह्मादिमण्डलदेवतास्थापनपक्षे एव कर्तव्यो न तु केवलं तण्डुलराशिकरणपक्षे।

सीं सङ्कल्प्य कृताञ्जलिर्भूत्वा देवं प्रार्थयेत्—

मयाऽद्यास्मिन् व्रते देव यदपूर्णं कृतं विभो ।
सर्वं भवतु सम्पूर्णं त्वत्प्रसादाद्रमापते ॥

दण्डवत्प्रणम्य क्षमाप्य न्यूनातिरिक्तानीत्यादिना विसृज्य सोपस्करां प्रतिमां ॐ विष्णुर्मे प्रीयतामिति आचार्याय दत्त्वा भूयसीं संविभज्य दत्त्वा अच्छिद्रं वाचयित्वा अभिषेकमन्त्रपाठान्ते आचार्यादीन् ब्राह्मणान् भोजयित्वा प्रणिपत्य क्षमाप्य तदनुज्ञया स्वयमपीष्टबन्धुभिः सह भुञ्जीतेति ।

अथ रामनवमीव्रतोद्यापनविधिः स्कन्दपुराणे—

शृणु देवि प्रवक्ष्यामि विस्तरेण यथाविधि ।
रामव्रतोद्यापनकं भक्त्या च तदनुग्रहात् ॥
सुवर्णप्रतिमां कुर्यात्ससीतारामलक्ष्मणम् ।
हनुमत्प्रतिमां तत्र चतुर्थांशेन हाटकैः ॥
सुवर्णस्य प्रमाणं तु कलाष्टकमुदीरितम् ।
अशक्तश्चेत्पलेनैव तदर्धार्धेन वा पुनः ॥
श्रीरामस्य प्रतिकृतौ वित्तशाठ्यं न कारयेत् ।
रजतेनासनं कुर्यान्माषैः षोडशसंमितैः ॥
पीतवस्त्रेण संवेष्ट्य स्थापयेत्तण्डुलोपरि ।
तण्डुलानां प्रमाणं तु भवेद् द्रोणचतुष्टयम् ॥
शुचौ देशे गृहे तीर्थे मण्डपं कारयेत्सुधीः ।
तोरणानि चतुर्द्वारं बन्धयेदाम्रपल्लवैः ॥
भूमौ गोमयलिप्तायां सर्वतोभद्रसंज्ञकम् ।
रचयेत्सप्तधान्येन नानारङ्गैः सुशोभितम् ॥
कुम्भानष्टौ च पूर्वादौ स्थापयेदव्रणान् शुभान् ।
कुम्भमेकं मध्यदेशे स्थापयेत्तण्डुलोपरि ॥
शुद्धोदकेन सम्पूज्य पञ्चरत्नैः सपल्लवैः ।

नारिकेलफलान्यष्टावेकं रामाय दापयेत् ॥
आचार्यं वरयेत्तत्र वेदशास्त्रविशारदम् ।
ब्रह्मादिकृत्विजां चात्र वरणं कारयेत्ततः ॥
मधुपर्केण सम्पूज्य वस्त्रालङ्कारभूषणैः ।
ऋत्विजः षोडशाष्टौ च वरयेद्वेदपारगान् ॥
स्नात्वा नित्यं विधायादौ पूजयेद्गणनायकम् ।
पुण्याहं वाचयित्वा तु पूजयेद्रामचन्द्रकम् ॥
ततोऽग्निं च प्रतिष्ठाप्य स्वशाखोक्तविधानतः ।
विष्णुसूक्तेन होतव्यं मूलमन्त्रेण वा पुनः ॥
नवग्रहांश्च दिक्पालानत्रानुक्तांश्च होमयेत् ।
पुरुषसूक्तेन होतव्याः समिदाज्यचरुस्तिलाः ॥
अष्टोत्तरसहस्रं तु राममन्त्रेण होमयेत् ।
होमान्ते पूजनं कुर्याद्रामचन्द्रादिदेवताः ॥
पूजयित्वा ततो हुत्वा बलिं पूर्णाहुतिं तथा ।
श्रेयः संपाद्य दानं च अभिषेकं समाचरेत् ॥
रामं नत्वाऽर्चयित्वा च प्रार्थयित्वा पुनः पुनः ।
आचार्यं पूजयेत्पश्चात्सुवर्णैर्वस्त्रधेनुभिः ॥
प्रतिमादानमन्त्रेण आचार्याय निवेदयेत् ।
नतोऽस्मि देवदेवेश शुद्धबुद्धिमहात्मभिः ॥
यश्चिन्त्यसे कर्मपाशाद्द् हृदि नित्यं मुमुक्षुभिः ।
मायया गुणमय्या त्वं सृजस्यवसि लुम्पसि ॥
अतस्त्वत्पादभक्तोऽस्मि त्वद्भक्तिस्तु श्रियोऽधिका
भक्तिमेव हि वाञ्छन्ति त्वद्भक्ताः सारवेदिनः ॥
अतस्त्वत्पादकमले भक्तिरेव सदाऽस्तु मे ।
संसारामयतप्तानां भैषज्यं भक्तिरेव ते ॥
सीतासौमित्रिहनुमद्भक्तयुक्त नरेश्वर ।

दानेनानेन मे राम भुक्तिमुक्तिप्रदो भव ॥
प्रतिमादानसिद्ध्यर्थं शक्त्या स्वर्णं तु दापयेत् ।
दानं यद्दक्षिणाहीनं तत्सर्वं निष्फलं भवेत् ॥
ब्राह्मणान् शतसाहस्रं भोजयेन्मधुसर्पिषा ।
पक्कान्नैः पायसैः खाद्यैर्लड्डुकैः शर्करान्वितैः ॥
ऋत्विग्भ्यो दक्षिणां दद्याद् भूयसीं दक्षिणां ददेत् ।
तदन्ते तिलपात्रं च घृतपात्रं च दापयेत् ॥
शय्यां च रथदानादिदशदानानि शक्तितः ।
अशक्तश्चेत्स्वर्णमेकं दत्त्वा रामं नमेत्पुनः ॥
तिलकं कारयेत्पश्चादभिषिञ्चेत्सपल्लवैः ।
द्विजैस्तु आशिषो देया नत्वा स्तुत्वा विसर्जयेत् ॥
उमामहेश्वरौ पूज्यौ भोजयेद्बटुकं तथा ।
कुमारीणां शतं भोज्यं योगिराजं च भोजयेत् ॥
क्षेत्रपालबलिं दत्त्वा ध्यात्वा रामं सदा जपेत् । इति ।

अथ रामनवमीव्रतोद्यापनप्रयोगः—तत्रोद्यापनकर्ता पूर्वदिवसे कृतैकभक्तादिनियमो द्वितीयदिवसे प्रातःस्नानादि नित्यकृत्यं विधाय एकादशीव्रतोद्यापनप्रयोगोक्तप्रकारेण मण्डपनिर्माणादि ब्रह्मवरणान्तं कुर्यात् । तत्र गणेशपूजनसङ्कल्पे एकादशीव्रतोद्यापनस्थाने रामनवमीव्रतोद्यापनेत्यूहः कार्यः । प्रधानसङ्कल्पस्तु ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमनेकजन्मार्जितसकलपापक्षयार्थं श्रुतिस्मृतिपुराणोक्तफलावाप्तये विशेषतश्चतुर्वर्गसिद्धिद्वारा ॐ तत्सत् श्रीरामचन्द्रदेवप्रीतये चतुर्दशवर्षपर्यन्तमनुष्ठितस्य श्रीरामनवमीव्रतस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च उद्यापनाख्यं कर्म करिष्ये इति ।

तत आचार्यः सर्वतोभद्रमण्डलदेवतास्थापनपूजनं कृत्वा कलशं संस्थापयेत् । ततो यजमानस्तत्र श्रीरामचन्द्रप्रति-

मामग्न्युत्तारणपूर्वकं निधाय रामनवमीव्रतपूजाविधानेन पूजयेत्। ततो गीतनृत्यवाद्यकथाभिस्तां रात्रिमतिवाहयेत्। द्वितीयदिने नित्यकृत्यं विधाय आचार्योऽग्निस्थापनादि तत्पूजान्तं कर्म कृत्वा यजमानद्वारा द्रव्यत्यागसङ्कल्पं कारयेत्—ॐ अद्येहेत्यादि अमुकोऽहं श्रीरामनवमीव्रतोद्यापनहोमकर्मणा यक्ष्ये। तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, श्रीरामचन्द्रदेवमाज्येन चरुणा समित्तिलैश्च मूलमन्त्रेण विष्णुसूक्तेन पुरुषसूक्तेन वाऽष्टोत्तरसहस्रसंख्यया यथासंख्यं वा, तथा दशावरणदेवता नवग्रहान् प्रत्येकमष्टाष्टसंख्यया एकैकयाहुत्या वा आज्येन, अधिदेवताः प्रत्यधिदेवता दशदिक्पालान् वास्तोष्पतिं क्षेत्राधिपतिं च प्रत्येकं चतसृभिरेकया वा नाममन्त्रेण आज्येन, ब्रह्मादिमण्डलदेवताः प्रत्येकमेकयाहुत्या आज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं च आज्येन यक्ष्ये। एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐ तत्सद्यथादैवतमस्तु न मम।

ततो ब्रह्मणाऽन्वारब्ध आचार्यो मनसा प्रजापतिं ध्यात्वा ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम। ॐ इन्द्राय स्वाहा इदमिन्द्राय०। ॐ अग्नये स्वाहा इदमग्नये०। ॐ सोमाय स्वाहा इदं सोमाय०। ततः प्रधानं साङ्गम् आवरणदेवतादिप्रजापत्यन्तदेवताश्च हुत्वा पूर्णाहुत्यन्तं कर्मानुष्ठाय श्रीरामचन्द्रादनुत्तराङ्गत्वेन सम्पूज्य नाममन्त्रेण उमामहेश्वरौ च सम्पूज्य ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं कृतैतद्रामनवमीव्रतोद्यापनकर्माङ्गभूतहोमकर्मणः साङ्गतासिद्ध्यर्थमिदं सुवर्णं तन्निष्क्रयीभूतद्रव्यं वा आचार्यब्रह्मभ्यां यथांशेन विभज्य दातुं समुत्सृजे। ॐ तत्सन्न मम। वस्त्रालङ्कारादिभिराचार्यब्रह्माणौ पूजयित्वा दद्यात्।

ततो गोदानं शय्यादानं च तत्तद्विधिना आचार्यादिभ्यो दत्त्वा प्रतिमादानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रुतिस्मृत्युदितफलावाप्तये चतुर्दशवर्षपर्यन्तं कृतस्य श्रीरामनवमीव्रतस्य साङ्गतासिध्यर्थं व्रतोद्यापनकर्मणि सुपूजितामिमां सौवर्णीं श्रीरामप्रतिमां सोपस्करां श्रीरामचन्द्रप्रीतये आचार्याय दास्ये । ॐ तत्सन्न मम । आचार्यं सम्पूज्य मन्त्रेणानेन दद्यात्—

ॐ नतोऽस्मि""""भुक्तिमुक्तिप्रदो भव ।

प्रतिमादानप्रतिष्ठासिद्धये यथाशक्ति सुवर्णं संकल्प्य दद्यात् । घृतपात्रदानं तिलपात्रदानं च यथाविधि विधाय तदभावे सुवर्णं दत्त्वा कुमारीः सम्पूज्य भोजयित्वा क्षेत्रपालबलिं दत्त्वा बटुकं योगिराजं च संपूज्य भोजयित्वा भूयसीं दक्षिणां दद्यात्—ॐ विष्णुः३ श्रीरामनवमीव्रतोद्यापनकर्मणि न्यूनातिरिक्तपरिपूर्त्यर्थं श्रीरामचन्द्रदेवप्रीत्यर्थमिमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दातुमहमुत्सृजे । ॐ तत्सत् । तथा यथोपपन्नेन सिद्धान्नेन सहस्रशतादिसंख्याकान् ब्राह्मणान् भोजयिष्ये । ॐ तत्सत् इति संकल्प्य भूयसीं दक्षिणां यथाशतो विभज्य दत्त्वा ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणां दत्त्वा स्वयं च भुञ्जीत ।

इति रामनवमीव्रतोद्यापनप्रयोगः ।

अथ वैशाखस्नानविधिः—

तुलामकरमेषेषु प्रातः स्नानं विधीयते ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥

इति विष्णुस्मृतिपाद्मवचनात्सौरमासः । अन्यत्पक्षद्वयमप्युक्तं तत्रैव पाद्मे—

मधुमासस्य शुक्लायामेकादश्यामुपोषितः ।
पञ्चदश्यां च भो वीर मेषसंक्रमणे तु वा ॥

वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया ।
मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् ॥
वैशाखं..........भवपापहन्' इति ।

एवं स्नाने कृते तस्योद्यापनं कार्यम् । तदुक्तं तत्रैव—

मासमेवं बहिः स्नात्वा नद्यादौ विमले जले ।
एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा ॥
उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः ।
मण्डलं कारयेदादौ कलशं तत्र विन्यसेत् ॥

निष्केण वा तदर्धेन तदर्धार्धेन वा पुनः ।
शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितम् ॥

लक्ष्मीयुक्तं जगन्नाथं पूजयेदासने बुधः ।
भूषणैश्चन्दनैः पुष्पैर्दीपैर्नैवेद्यसंचयैः ॥
एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् ।
श्वोभूते कृतमैत्रोऽथ ग्रहवेद्यां ग्रहान्यजेत् ॥

होमं कुर्यात्प्रयत्नेन पायसेन विचक्षणः ।
तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः ॥

अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
प्रताद्विष्णुरनेनैव इदं विष्णुरनेन वा ॥
व्रतसंपूर्तिसिद्ध्यर्थं धेनुमेकां पयस्विनीम् ।
पादुकोपानहौ छत्रं गुरवे व्यजनं तथा ॥
शय्यां सोपस्करां दद्याद्दीपिकां दर्पणं तथा ।
ब्राह्मणान् भोजयेत् त्रिंशत्तेभ्यो दद्याच्च दक्षिणाम् ॥

कलशान् जलसम्पूर्णांस्तेभ्यो दद्याद्वस्त्रांस्तथा ।
एवं कृते माधवस्य चोद्यापनविधौ शुभे ॥
फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात् । इति ।

अथ वैशाखस्नानप्रयोगः--तत्र प्रातर्नद्यादौ गत्वा स्नानं विधाय नित्यकर्म समाप्य गृहमागत्य पूजास्थानमुपविश्य 'शुक्लाम्बरधरं विष्णुम्' इति प्रार्थ्य सुमुखश्चेति गणेशं नत्वा ॐ विष्णुः ३ अद्येहेत्यादि अमुकगोत्रः सकलपापक्षयपूर्वकश्रुतिस्मृति-पुराणोक्तफलावाप्तये मेषसंक्रान्तिमारभ्य वृषसंक्रान्तिपर्यन्तं प्रा-तर्मध्याह्नसायंत्रिकालपूर्वकं हविष्याशनेन वैशाखस्नानं करिष्ये। व्रतस्वीकारः—

इदं व्रतं मया देव गृहीतं पुरतस्तव।
निर्विघ्नं सिद्धिमायातु प्रसादान्मधुसूदन॥
प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः।
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात्॥

इति जलमुत्सृज्य—

अज्ञानतिमिरान्धस्य ज्ञानेनानेन केशव।
प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव॥

इति तूष्णीं पठेत्। मध्याह्नस्नानं विधाय—

निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम्।
माधवे मेषगे भानौ मुरारे मधुसूदन॥
प्रातःस्नानेन मे देव यथोक्तफलदो भव।
यथा ते माधवे मासे वल्लभो मधुसूदन॥
प्रातःस्नानेन मे तस्मिन् फलदो भव पापहन्॥

इति स्नात्वाऽऽचम्य—

वैशाखे माधवप्रीतः स्नातोऽस्मिन् विमले जले।
एष अर्घो मया दत्तो गृहाण मधुसूदन॥

इति अर्घ्यं समर्प्य वाससी परिधाय गृहमागत्य मधुसूदन-पूजां कुर्यात्। मधुसूदनप्रतिमां 'हिमस्य त्वा' इति मन्त्रेणाग्न्यु-त्तारणपूर्वकं पूर्वोक्तमन्त्रैः पञ्चामृतैः संस्नाप्य दीपं प्रज्वलय्य

आचम्य गणेशाय पुष्पाञ्जलिं दत्त्वा अर्घं संस्थाप्य सूर्यायार्घ्यं दत्त्वा भूतोत्सादनादि नित्यपूजावत् कृत्वा पुनरर्घं संस्थाप्य प्राणा· नायम्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकश्रु· तिस्मृतिपुराणोक्तफलावाप्तये श्रीमधुसूदनस्य यथामिलितोपचा· रैः प्रातःकाले मध्याह्ने सायंकाले वा पूजनं करिष्ये। 'एतंते' 'मनोजूतिः' इति प्रतिष्ठाप्य ॐभूर्भुवःस्वः मधुसूदन इहागच्छेह तिष्ठ इति स्थापयेत्। ध्यानम्—

दक्षिणाधस्तनकरादारभ्यैतत्प्रदक्षिणम्।
शङ्खचक्राम्बुजगदा बिभर्त्ति मधुसूदनः॥

स्त्रीशूद्रादिभिर्नाममन्त्रेण पूजनं कार्यम्। ॐसहस्रशीर्षा० आवाहनम्। ॐपुरुष एवेदꣳसर्वं० आसनम्। ॐएतावा· नस्य० पाद्यम्। ॐत्रिपादूर्ध्वं०अर्घ्यम्। ॐततो विराड० आचमनम्। ॐतस्माद्यज्ञात्सर्वहुतः सम्भृतं० स्नानम्। ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः०वस्त्रम्। ॐ तस्मादश्वाऽअ० यज्ञोपवीतं०। ॐ तं यज्ञं बर्हिषि० गन्धं०। ॐ यत्पुरुषं व्यदधुः० पुष्पाणि०। ॐ ब्राह्मणोऽस्य० धूपं०। ॐचन्द्र· मामनसो० दीपम्०। ॐनाभ्याऽआसीद० नैवेद्यं०। ॐयत्पुरुषेण हविषा० आचमनम्०। ॐ इदं फलं० फलम्०। ताम्बूलं०। ॐ सप्तास्यासन्० प्रदक्षिणाः०। ततो ऽर्घं दद्यात्—

वैशाखे मेषमार्तण्डे स्नातोऽहं विमले जले।
एष अर्घो मया दत्तो गृहाण मधुसूदन॥ इति।

ततो नाममन्त्रेण नीराजनं प्रदर्श्य ॐयज्ञेन यज्ञ० इति पुष्पाञ्जलिं समर्पयेत्। एवं मासपर्यन्तं प्रत्यहं पूजयित्वा सहस्र· नामादिस्तोत्रैर्मौनेन सत्कथालापनेन वैशाखमासं निनयेत्। वृषसंक्रान्तौ मधुसूदनं संपूज्य अद्येहेत्यादि अमुकोऽहं श्रीमधुसू·

दनप्रीत्यर्थं कृतस्य वैशाखस्नानस्य साङ्गफलप्राप्त्यर्थमिमां सुपूजितां श्रीमधुसूदनप्रतिमां सपरिच्छदां ब्राह्मणाय दास्ये। श्रीमधुसूदनप्रतिमादानप्रतिष्ठासिद्ध्यर्थमिदं सुवर्णं प्रत्याम्नायं वा ब्राह्मणाय दास्ये। तथा कृतस्य वैशाखस्नानस्य साङ्गतासिद्ध्यर्थमिमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये। ॐ तत्सत् न मम। ब्राह्मणान् संपूज्य दद्यात्। शक्तश्चेत्समलंकृतां गां च दद्यात्। ब्राह्मणाश्च अभिषेकतिलकमन्त्रपाठादिकं कुर्युः। ततो ब्राह्मणान् क्षमापयेत्—

युष्मत्प्रसादाद्देवेशः प्रसन्नो मम सर्वदा।
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं तथा॥
तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः।
मनोरथाश्च सफलाः सन्तु नित्यं समर्चनात्॥
देहान्ते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभम्॥

इति ब्राह्मणान् प्रार्थ्य त्रिंशत्संख्याकान् ब्राह्मणान् भोजयिष्ये इति संकल्प्य—

वैशाखस्नानस्य साङ्गतासिद्ध्यर्थं छत्रोपानद्दानं कुर्यात्—

असिपत्रवने मार्गे क्षुरधारासमन्विते।
तीक्ष्णतां तत्र तरति छत्रोपानत्प्रदो नरः॥ इति।

ततो ब्राह्मणान् भोजयित्वा तेभ्योऽच्छिद्रं गृहीत्वा स्वयं बन्धुभिः सह भुञ्जीतेति।

अथ वैशाखस्नानोद्यापनप्रयोगः—तत्रोद्यापनकर्ता उक्तविधिना मासपर्यन्तं स्नानं प्रत्यहं विधाय मेषसंक्रान्तियुतवैशाखमासस्यान्तिमदिनात्पूर्वस्मिन्नहनि कृतनित्यक्रिय एकादश्युद्यापनप्रयोगोक्तविधिना मण्डपनिर्माणादि गणेशपूजान्तं कुर्यात्। तत्र एकादशीव्रतोद्यापनशब्दस्थाने वैशाखस्नानोद्यापन

इत्यूहः कार्यः । ततः प्रधानसङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयकामः श्रीमधुसूदनदेवप्रीतये कृतस्य वैशाखस्नानस्य सम्पूर्णतासिद्धये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेनेत्यादि सर्वतोभद्रमण्डलदेवतास्थापनपूजनान्तं विधाय सर्वतोभद्राभावे केवलतण्डुलराशिकरणान्तं वा विधाय कलशोपरि अष्टदलाद्यलङ्कृते सिंहासने लक्ष्मीसहितां सौवर्णीं श्रीमधुसूदनप्रतिमां पूर्ववत्संस्थाप्य पूजयेत् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं वैशाखस्नानव्रतोद्यापनकर्मणि यथोक्तफलावाप्तये श्रीमधुसूदनदेवप्रीतये सुवर्णप्रतिमायां सलक्ष्मीकस्य श्रीमधुसूदनदेवस्य यथामिलितोपचारैः पूजनं करिष्ये इति सङ्कल्प्य स्नानप्रयोगोक्तविधिना सर्वं पूजनविधिं समाप्य तत्कथाश्रवणतद्ध्यानजपादिभिर्दिनमतिवाह्य सायंसन्ध्यादिविध्यन्ते पुनः पूजां धूपार्तिक्यं च विधाय मङ्गलवादित्रनृत्यगीतादिभिस्तां रात्रिं जागरणेन निनयेत् ।

अथ प्रभाते सर्वं नित्यकर्मविधिं समाप्य आचार्योऽग्निस्थापनादि तत्पूजान्तं कर्म कृत्वा यजमानेन द्रव्यत्यागसङ्कल्पं कारयेत्—अद्येहेत्यादि अमुकोऽहं वैशाखस्नानव्रतोद्यापनहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, तथैतत्पायसद्रव्येण तिलाज्येन वा यवाज्येन वा पायसातिलयवाज्यद्रव्येण वा अष्टोत्तरसहस्रसंख्यया अष्टोत्तरशताहुतिसंख्यया वा श्रीमधुसूदनदेवं प्रतद्विष्णुरिति मन्त्रेण इदं विष्णुरिति मन्त्रेण वा, नवग्रहान् प्रत्येकमष्टाष्टसंख्यया एकैकया वाहुत्या आज्येन, दशदिक्पालान् वास्तोष्पतिं क्षेत्राधिपतिं च प्रत्येकं चतसृभिरेकया वा नाममन्त्रेण आज्येन, ब्रह्मादिमण्डलदेवताः प्रत्येकमेकयाऽऽहुत्या आज्येन, अग्निं स्विष्टकृतमित्यादि....प्रजापतिं च आज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सत् यथादैवतमस्तु-

न मम। तत आचार्यो ब्रह्मणाऽन्वारब्धो देवताभिध्यानवत्सर्वं होमं विधाय ब्रह्मणे पूर्णपात्रं यजमानो दद्यात्। ततो मधुसूदनपूजनमुत्तराङ्गत्वेन विधाय पूर्णाहुतिं हुत्वा होमसाङ्गतासङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कृतैतद्वैशाखस्नानव्रतोद्यापनकर्माङ्गभूतहोमकर्मणः साङ्गतासिद्ध्यर्थमिदं सुवर्णमाचार्याय दातुं समुत्सृजे। ॐ तत्सत् न मम।

ततो गोदानम्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं वैशाखस्नानव्रतोद्यापनकर्मणः साङ्गफलप्राप्तये गोदानं ( गोमूल्यदानं ) करिष्ये इति सङ्कल्प्य ब्राह्मणं गोप्रत्याम्नायद्रव्यं च सम्पूज्य आचार्याय दद्यात्। एवं पादुकोपानच्छत्रदीपिकादर्पणाद्युपस्करसहितां शय्यां शय्यादानविधिना पुरोहिताय सम्पूज्य दद्यात्। ततः प्रतिमां पूजितां चाचार्याय पूर्वोक्तविधिना दद्यात्।

अथ घटदानसङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं वैशाखस्नानव्रतोद्यापनकर्मणः साङ्गतासिद्ध्यर्थं श्रीमधुसूदनदेवप्रीतये इमान् सुपूजितान् सवस्त्रान् सयवान् सदक्षिणांस्त्रिंशद्घटान् ब्राह्मणेभ्यो दातुमुत्सृजे। ॐ तत्सन्न मम। त्रिंशद्ब्राह्मणेभ्यः सम्पूज्य दद्यात्। न्यूनातिरिक्तपरिपूर्त्यै तिलपात्रदानं च विधाय अच्छिद्रं वाचयित्वा भूयसीदानादि सर्वं स्नानप्रयोगवदनुतिष्ठेत्।

अथ नृसिंहचतुर्दशीव्रतोद्यापनविधिर्नृसिंहपुराणे—

ततो मध्याह्नवेलायां नद्यादौ विमले जले।
गृहे वा देवखाते वा तडागे वा नभोगते॥
वैदिकैरेव मन्त्रैस्तु स्नानं कुर्याद्विचक्षणः।
मृत्तिकागोमयाभ्यां च तथा धात्रीफलैश्च ह॥
तिलैश्च सर्वपापघ्नैः स्नानं कृत्वा विधानतः।
शुचि वासः परीधाय नित्यकर्म समारभेत्॥

ततो गृहं समागत्य स्मरन्मां भक्तियोगतः ।
गोमयेन विलिप्याथ कुर्यादष्टदलं शुभम् ॥
कलशं तत्र संस्थाप्य ताम्रं रत्नसमन्वितम् ।
तस्योपरि न्यसेत्पात्रं वंशजं व्रीहिपूरितम् ॥
हैमी तु तत्र मन्मूर्तिः स्थाप्या लक्ष्म्या सहैव तु ।
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
यथाशक्त्यथवा कुर्याद्वित्तशाठ्यविवर्जितः ।
पञ्चामृतेन संस्नाप्य पूजनं तु समारभेत् ॥
ततो ब्राह्मणमाहूय तमाचार्यमलोलुपम् ।
कुर्याच्छास्त्रसमायुक्तं शान्तं दान्तं जितेन्द्रियम् ॥
तेनैव कारयेत्पूजां दृष्ट्वा शास्त्रानुसारतः ।
आचार्यवचनाद्धीमान् पूजां कुर्याच्च मद्व्रते ॥
मण्डपं कारयेत्तत्र पुष्पस्तबकशोभितम् ।
ऋतुकालोद्भवैः पुष्पैः पूजयेत्स्वस्थमानसः ॥
उपचारैः षोडशभिर्मन्त्रैर्वेदोद्भवैस्तथा ।
ततः पौराणिकैर्मन्त्रैः पूजनीया विशेषतः ॥
एवं पूजां समाप्याथ रात्रौ जागरणं चरेत् ।
गीतवादित्रशब्दैश्च पुराणश्रवणादिभिः ॥
ततः प्रभातसमये स्नानं कुर्यादतन्द्रितः ।
पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः ॥
वैष्णवं च चरेद् यागं मदग्रे स्वस्थमानसः ।
ततो दानानि देयानि वक्ष्यमाणानि चानघ ॥
पात्रेभ्यश्च द्विजातिभ्यो लोकद्वयजिगीषया ।
सिंहः स्वर्णमयो देयो मम सन्तुष्टिकारकः ॥
गोभूतिलहिरण्यानि देयानि च फलेप्सुभिः ।
शय्या सतूलिका देया सप्तधान्यसमन्विता ॥

अन्यानि च यथाशक्त्या देयानि मम तुष्टये ।
वित्तशाठ्यं न कुर्वीत यथोक्तफलकाङ्क्षया ॥
ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।
एवं व्रतमनुष्ठाय प्रतिमादानमाचरेत् ॥
सङ्कल्प्य विधिवद् दद्यादाचार्यायार्चिताय च ॥ इति ।

अस्य प्रयोगो रामनवमीव्रतोद्यापनप्रयोगानुसारेण ऊहं कृत्वाऽनुष्ठेयोऽस्माभिश्च क्वचिदेवास्यानुष्ठानसमाचारादुपेक्षित इति बोध्यम् ।

**अथ ज्येष्ठामायां वटसावित्रीव्रतोद्यापनविधिः**

स्कान्दे—

ज्येष्ठमासे तु सम्प्राप्ते अमायां च पतिव्रता ।
स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्चेद् बहूदकैः ॥
सूत्रेण वेष्टयेद् भक्त्या गन्धपुष्पाक्षतैः शुभैः ।
नमो वैवस्वतायेति भ्रामयन्ती प्रदक्षिणम् ॥
रात्रौ कुर्वीत नक्तं च अब्दमेकं समाहिता ।
तथैव वटवृक्षं च पक्षे पक्षे प्रपूजयेत् ॥
सम्प्राप्ते तु पुनर्ज्येष्ठे लघुभुग्द्वादशीं नयेत् ।
दन्तानां धावनं कृत्वा नियमं कारयेत्ततः ॥
जागरं तत्र कुर्वीत गीतवादित्रमङ्गलैः ।
सुवासिन्यस्ततः पूज्या दिवसे दिवसे शुभाः ॥
सिन्दूरं कुङ्कुमं चैव ताम्बूलं च सुगन्धकम् ।
तथा दद्याच्च शूर्पाणि भक्ष्यं सौभाग्यमष्टकम् ॥
सन्तिष्ठेच्च दिवारात्रौ कामक्रोधविवर्जिता ।
दिनत्रयेऽपि कर्तव्यमेवमर्घ्यादिपूजनम् ॥
ततश्चतुर्थदिवसे उद्यापनविधिं चरेत् ॥ इति ।

अथ वटसावित्रीव्रतोद्यापनप्रयोगः—तत्रोद्यापनानुष्ठात्री वर्षपर्यन्तं नक्तभोजनप्रतिपक्षवटवृक्षसेचनादिनियमयुता सम्भृतोद्यापनसम्भारा नद्यादौ स्नात्वा पूजामण्डपे स्वासने उपविश्य दीपं प्रज्वाल्य आचम्य गणेशपूजनान्तं विधाय प्रधानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी अहं श्रुत्यादिषूक्तफलावाप्तये भर्तुरायुष्यारोग्याद्यभिवृद्धये आत्मनश्च इह जन्मनि जन्मान्तरेषु चावैधव्यसिद्धये धनसन्तानाद्यभिवृद्धये एतावत्कालपर्यन्तं कृतस्य वटसावित्रीव्रतस्य साद्गुण्यार्थं साङ्गफलप्राप्तये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेनेत्यादिसङ्कल्पमारभ्य सर्वतोभद्रमण्डलदेवतास्थापनपूजनान्तं सर्वतोभद्रमण्डलाभावपक्षे च केवलं तण्डुलराश्यन्तमेव वा विधाय तदुपरि कलशं संस्थाप्य तदुपरि ब्रह्मणः सत्यवत्सहितसावित्र्याश्च प्रतिमां संस्थाप्य पूजयेत् । तत्र संकल्पः—ॐ विष्णुः ३ अमुकी देव्यहं कृतसंकल्पसिद्धये वटसावित्रीव्रतोद्यापनकर्मपूर्वाङ्गत्वेन सुवर्णादिप्रतिमासु साङ्गायाः श्रीसावित्रीदेव्या यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य वटसावित्रीपूजाप्रयोगोक्तविधिना ध्यानादि धर्मराजप्रार्थनान्तं सर्वं कर्म कृत्वा तां रात्रिं नृत्यगीततत्कथाश्रवणादिभिरतिवाह्य द्वितीयदिने प्रभाते सर्वं नित्यकर्मविधिं समाप्य आचार्योऽग्निस्थापनादि तत्पूजनान्तं कर्म कृत्वा यजमानया द्रव्यत्यागसंकल्पं कारयेत् । ॐ विष्णुः ३ अमुकी अहं वटसावित्रीव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, सावित्रीमष्टोत्तरशतसंख्यया सावित्रीमन्त्रेण ब्रह्मधर्मराजौ च प्रत्येकमष्टाविंशतिसंख्यया नाममन्त्रेण घृतपायसद्रव्येण, सर्वतोभद्रमण्डलपक्षे ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्या नाममन्त्रेण, अग्निं स्विष्टकृतं चाज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं,

वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाऽऽज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सद् यथादैवतमस्तु न मम । ततो ब्रह्मणाऽन्वारब्ध आचार्यः पूर्ववत्सर्वं होमं विधाय ततः संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कृत्वा अग्निपूजनादित्र्यायुषकरणान्ते होमसाङ्गतां सङ्कल्प्य दत्त्वा उत्तराङ्गत्वेन सपरिवारां सावित्रीं ग्रहांश्च सम्पूज्य सावित्रीं प्रार्थयेत्—

रूपं देहि यशो देहि सौभाग्यं देहि देवि मे ।
पुत्रान् देहि धनं देहि सर्वजन्मसु सर्वदा ॥
यथा ते न वियोगोऽस्ति भर्त्रा सह सुरेश्वरि ।
तथा मे सुमहाभागे कुरु त्वं जन्मजन्मनि ॥

ब्रह्मा मुरारिरित्यादिना ग्रहांश्च सम्प्रार्थ्य प्रणम्य गच्छ गच्छेत्यादिना अग्निं विसृज्य—

ॐ गच्छ गच्छ सुरश्रेष्ठे स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वरि ॥

इति सावित्रीं च विसृज्य 'यान्तु देवगणा' इति ब्रह्मादीन् विसर्जयेत् ।

ततो यथाशक्ति द्विजदाम्पत्यानि वस्त्रभूषादिभिः संपूज्य वायनदानसंकल्पं कुर्यात् । ॐ विष्णुः ३ अमुकी अहं वटसावित्रीव्रतोद्यापनकर्माणि यथोक्तफलावाप्तये सौभाग्यादिद्रव्ययुतानि द्वादश यथासंख्यं वा शूर्पाणि ब्राह्मणेभ्यो विभज्य दास्ये । ब्राह्मणान् संपूज्य दद्यात्—

उपायनमिदं द्रव्यं व्रतसंपूर्तिहेतवे ।
वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥

ततः प्रतिमादानम्—ॐ विष्णुः ३ अमुकी देव्यहं वटसावित्रीव्रतोद्यापनकर्मणः साङ्गफलप्राप्तये श्रीसावित्रीदेव्याः प्रसादसिद्धये इमां सुपूजितां सौवर्णीं सावित्रीब्रह्मणोः प्रतिमां सोप-

स्कराममाचार्याय दास्ये ॐ तत्सत् । आचार्यं सम्पूज्य दद्यात्—

सावित्रीयं मया दत्ता पूजिता विधिना सती ।
ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम् ॥

आचार्यः प्रतिग्रहवाक्यं वदेत्—

मया गृहीता सावित्री त्वया दत्ता सुशोभना ।
यावच्चन्द्रश्च सूर्यश्च भर्त्रा त्वं सुखिनी भव ॥

ततो यथोक्तविधानेन शय्यादानगोदानादिकं विधाय भूयसीसंकल्पं कुर्यात्-ॐ विष्णुः ३ अमुकी देव्यहं श्रुतिस्मृत्याद्युक्तफलावाप्तये कृतस्य वटसावित्रीव्रतोद्यापनकर्मणः साङ्गफलप्राप्तये इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये तथा यथोपपन्नेनान्नेनामुकसंख्याकान् ब्राह्मणांश्च भोजयिष्ये ॐ तत्सत् इति संकल्प्य भूयसीं विभज्य दद्यात् । ततोऽच्छिद्रं वाचयित्वा ब्राह्मणानुज्ञया तीर्थग्रहणान्ते अभिषेकतिलकरक्षाबन्धनघृतच्छायामन्त्रपाठादिकं कारयेत् । ततः सपत्नीकं गुरुं सुवासिनीब्राह्मणांश्च भोजयित्वा दक्षिणां दत्त्वा दण्डवत्प्रणम्य गुरुं प्रार्थयेत्—

यन्मया कृत्यवैकल्याद् व्रतेऽस्मिन दुराधिष्ठितम् ।
तत्सर्वं पूर्णतां यातु युवयोरर्चनेन तु ॥

अन्यसुवासिनीर्ब्राह्मणांश्च प्रार्थयेत् तेनैव मन्त्रेण । गुर्वादयश्च मन्त्राशिषं दद्युः—

सावित्री वरदा तुभ्यं भवतात्सर्वदा शुभे ।
व्रतं वै सुव्रतं चास्तु विधिना समनुष्ठितम् ॥
पुत्राणां बहुता भर्ता परमायुरनामयः ।
पुत्रपौत्रैश्च संवृद्धं वर्धतां तव सत्कुलम् ॥ इति ।

ततः—

नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् ।

स्वयं दशपदं गच्छेत् स्ववेश्म पुनराविशेत् ॥
भुञ्जीत वासरान्ते तु नक्तं शान्ता तपस्विनी ।
अर्घ्यं दद्यादरुन्धत्यै दृष्ट्वा चैत्र प्रणम्य च ॥

अरुन्धत्यर्घ्यमन्त्रः—

अरुन्धति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे ।
अर्घ्यमेतन्मया दत्तं फलपुष्पसमान्वितम् ॥
पुत्रान् देहि सुखं देहि गृहाण प्रणतप्रिये ॥ इति ।

ततः सखीभिर्ब्राह्मणैः सह भुञ्जीतेति ।

अथ संकष्टचतुर्थीव्रतोद्यापनविधिः स्कान्दे—

एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजे ।
यावज्जीवं तु वा वर्षाण्येकविंशति पार्वति ॥
अशक्तावेकवर्षं वा प्रतिवर्षमथापि वा ।
उद्यापनं तु कर्तव्यं चतुर्थ्यां श्रावणेऽसिते ॥
स्वीकारश्च तथा कार्यः संकष्टहरणे तिथौ ।
गाणपत्यं तथाऽऽकार्य सर्वशास्त्रविशारदम् ॥
श्रद्धया प्रार्थयेत्रादौ तेनोक्तं विधिमाचरेत् ।
एकविंशति विप्राश्च वस्त्रालङ्कारभूषणैः ॥
पूजयेद्गोहिरण्याद्यैर्हुत्वाऽऽदौ विधिनाऽनलम् ।
होमयेन्मोदकान् पश्चात्तिलजान घृतसंयुतान् ॥
अष्टोत्तरसहस्रं वा नोचेदष्टोत्तरं शतम् ।
अष्टाविंशतिसंख्याकैर्मोदकैर्वा सशर्करैः ॥
अशक्तोऽष्टौ शुभान् स्थूलान् जुहुयाज्जातवेदसि ।
पुष्पमण्डपिका कार्या गणेशाह्लादकारिणी ॥
पूजयेत्तत्र गणपं भक्तसंकष्टनाशनम् ।
गीतवादित्रनिनदैर्भक्तिभावपुरस्कृतैः ॥
पुराणवेदाध्ययनैस्तोषयेच्छ्रीगणेश्वरम् ।

एवं जागरणं कार्यं शक्त्या दानादिकं तथा ॥
आचार्यं तु सपत्नीकं भूषयेद्वस्त्रभूषणैः।
उपानच्छत्रगोदानकमण्डलुजलादिभिः ॥
यथाशक्ति प्रकर्तव्यं दारिद्र्याभावमिच्छता।
एकविंशतिविप्रांश्च भोजयेन्नामभिर्मम ॥

गजास्यो १ विघ्नराजश्च २ लम्बोदर ३ शिवात्मजौ ४।
वक्रतुण्डः ५ शूर्पकर्णः ६ कुब्ज ७ श्चैव गणेश्वरः ८ ॥
विघ्ननाशो ९ हि विकटो १० वामनः ११ सर्वदैव तु।
सर्वार्त्तिनाशी १२ भगवान् १३ विघ्नहर्ता १४ च धूम्रकः १५॥
सर्वदेवाधिदेव १६ श्च एते षोडश वै स्मृताः।
कपिल १७ श्चैकदन्त १८ श्च भालचन्द्रो १९ गजाननः २० ॥
गणप २१ श्चैकविंशाश्च सर्व एते गणेश्वराः।
दुर्गोपेन्द्रश्च रुद्रश्च कुलदेव्याऽधिकं भवेत् ॥
पञ्चसंख्यैर्विशेषेण मोदकैर्वायनं स्मृतम्। इति।

अथ सङ्कष्टचतुर्थीव्रतोद्यापनप्रयोगः--उद्यापनकर्ता पूर्वदिने कृतामलकस्नानैकभक्तादिनियमः श्रावणकृष्णचतुर्थ्यां प्रातर्दन्तधावनपूर्वकं कृष्णतिलोदकैः स्नात्वा नित्यकर्मान्ते व्रतस्वीकारसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सपरिवारस्य मम श्रीविनायकदेवप्रीतिपूर्वकसर्वसंकष्टनिरासार्थं सोद्यापनं संकष्टहरचतुर्थीव्रतं करिष्ये। जलपूर्णं ताम्रपात्रं करयोः कृत्वा मन्त्रं पठेत्—

निराहारोऽस्मि देवेश यावदुद्यापनं भवेत्।
भोक्ष्यामि पूजयित्वा त्वां सङ्कष्टात्तारयस्व माम् ॥

तज्जलं देवाग्रे भूमौ निक्षिपेत्।

ततो मध्याह्ने नद्यादौ शुभैः कृष्णतिलैः स्नात्वा माध्याह्निकं विधाय पूजामण्डपे स्वासने उपविश्य आचम्य दीपप्रज्वा-

लनादि गणेशपूजनान्तं कुर्यात् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणसङ्कष्टहरचतुर्थीव्रतोद्यापन- कर्मणि निर्विघ्नतासिद्ध्यर्थं श्रीगणपतिप्रीतये पूर्वाङ्गत्वेन श्रीगण- पतिपूजनं करिष्ये इति । ततः प्रधानसङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं विद्यारोग्यधनपुत्रादिप्राप्ति- द्वारा सपरिवारस्य मम सर्वसंकष्टनिवारणार्थं संकष्टहरश्रीविना- यकप्रीतये एतावत्कालपर्यन्तं कृतस्य सङ्कष्टहरचतुर्थीव्रतस्य सा- ङ्गतासिद्ध्ये सम्पूर्णफलप्राप्तये च उद्यापनं करिष्ये । तत्पूर्वाङ्ग- त्वेनेत्यादिसङ्कल्पमारभ्य सर्वतोभद्रमण्डलदेवतास्थापनपूज- नान्तं तदभावपक्षे च केवलतण्डुलराश्यन्तमेव वा विधाय तदुपरि कलशं संस्थाप्य तदुपरि पात्रलिखिताष्टदलकमलेऽग्न्युत्तारणसंस्कृ- तां सौवर्णीं श्रीविनायकप्रतिमां संस्थाप्य चन्द्रोदये सङ्कष्टचतुर्थीव्रत पूजाविधानेन पूजयेत् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सङ्कष्टहरचतुर्थीव्रतोद्यापनकर्माणि यथोक्तफलावाप्तये श्रीसङ्कष्टहरविनायकप्रीतये सुवर्णप्रतिमायां यथामिलितोपचारैः श्रीविनायकपूजनं करिष्ये ।

एवमाचार्यब्रह्मवरणान्ते गजास्याद्येकविंशतिब्राह्मणानां व- रणं कुर्यात्—ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं संकष्टहरचतु- र्थीव्रतोद्यापनकर्माणि गजास्याद्येकविंशतिब्राह्मणानां वरणं करिष्ये इति संकल्प्य उत्तरवृद्ध्यासनेषूपविष्टान् ब्राह्मणान् अस्मिन् संकष्ट- हरचतुर्थीव्रतोद्यापनकर्माणि गजास्यत्वेन त्वामहं वृणे । वृतोऽ- स्मीति प्रत्युक्तिः । एवं विघ्नराजत्वेन, लम्बोदरत्वेनेत्याद्येक- विंशतिब्राह्मणानुत्तरवृद्ध्यासनेषूविष्टान् वृत्वा नमोऽस्त्वनन्तायेति पूजयित्वा प्रार्थयेत्—

अस्य यज्ञस्य निष्पत्त्यै भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैश्च कर्तव्यं शान्तिकं विधिपूर्वकम् ॥

इति विशेषः ।

एवं सर्वपूजनविधिं समाप्य तत्कथाश्रवणतद्ध्यानजपादिभिर्मङ्गलवादित्रनृत्यगीतादिभिश्च रात्रिशेषमतिवाह्य द्वितीयदिने नित्यक्रियाकरणान्ते आचार्योऽग्निस्थापनादितत्पूजनान्तं कर्म कृत्वा यजमानेन द्रव्यत्यागसङ्कल्पं कारयेत् । अद्येहेत्यादि अमुकोऽहं सङ्कष्टचतुर्थीव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, श्रीविनायकं घृतशर्करामिश्रितमोदकद्रव्येणाष्टोत्तरसहस्रसंख्यया अष्टोत्तरशतसंख्यया वा गणानांत्वामन्त्रेण, ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्याज्येन नाममन्त्रेण, अग्निं स्विष्टकृतं चाज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सद् यथादैवतमस्तु न मम । ततो ब्रह्मणाऽन्वारब्ध आचार्यो यथाऽभिध्यानं सर्वं होमं विधाय संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कृत्वा अग्निपूजनादित्र्यायुषकरणान्ते यजमानो होमसाङ्गतां सङ्कल्प्य दत्त्वा आशिषः प्रतिगृह्य गजास्याद्येकविंशतिब्राह्मणान् पूजयेत् । ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सङ्कष्टहरचतुर्थीव्रतोद्यापनकर्मणि गजास्यादिनामकैकविंशतिब्राह्मणानां प्रत्येकं वस्त्रालङ्करणगोनिष्क्रयीभूतसुवर्णफलमोदकादिभिः पूजनं करिष्ये । ॐ गजास्याय नमः इति गन्धाक्षतपुष्पमालाभिः संपूज्य इदं वस्त्रयुगुलमिदमाभरणमिदं गोनिष्क्रयीभूतं सुवर्णं च समर्पयामि नमः । एवमेव विघ्नराजाय नमः २ लम्बोदराय० ३ शिवात्मजाय० ४ वक्रतुण्डाय० ५ शूर्पकर्णाय० ६ कुब्जाय० ७ गणेश्वराय० ८ विघ्ननाशाय० ९ विकटाय १० वामनाय० ११ सर्वार्तिनाशिने० १२ भगवते० १३ विघ्नहर्त्रे० १४ धूम्राय० १५ सर्वदेवाधिदेवाय० १६ कपिलाय० १७ एकदन्ताय० १८ भालचन्द्राय० १९ गजाननाय० २०

गणपाय० २१ इति मन्त्रैः प्रत्येकं सम्पूज्य तत उत्तराङ्गत्वेन पूजाविधिना विनायकं प्रार्थनान्तं सम्पूज्य तदङ्गत्वेन स्थण्डिले चन्द्रमसं प्रतिष्ठाप्य अर्घ्यदानान्तं विधाय भगवन्तं प्रार्थयेत्—

महासंकष्टदग्धोऽहं गणेश शरणं गतः ।
तस्मान्मनोरथं पूर्णं कुरु सर्वेश्वर प्रभो ॥

गजास्यादिरूपान् ब्राह्मणांश्च प्रार्थयेत् ।

विहीनमतिरिक्तं वा द्रव्यहीनं मया कृतम् ॥
तत्सर्वं पूर्णतां यातु विप्ररूप गणेश्वर ॥

ततः शय्यादानविधिना शय्यादानं गोदानविधिना गोदानं प्रतिमादानविधिना प्रतिमादानं च विधाय आचार्यादिभ्यः प्रतिपाद्य भूयसीं दक्षिणां संकल्प्य दद्यात् । ततो गजास्यादिब्राह्मणानन्यांश्च ब्राह्मणान यथाशक्ति भोजयेत् ।

अथ जन्माष्टमीव्रतोद्यापनविधिर्भविष्ये—

पूर्णां तिथिमनुप्राप्य चित्तवित्तादिसंयुतः ।
पूर्वेद्युरेकभक्ताशी स्वपेन्मां संस्मरन् हृदि ॥
प्रातरुत्थाय संस्मृत्य पुण्यश्लोकान् समाहितः ।
निर्वर्त्यावश्यकं कर्म ब्राह्मणान् स्वस्ति वाचयेत् ॥
गुरुमानीय धर्मज्ञं वेदवेदाङ्गपारगम् ।
वृणुयादृत्विजश्चैव वस्त्रालङ्करणादिभिः ॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
वित्तशाठ्यं परित्यज्य शक्त्या वापि महीपते ॥
सौवर्णी प्रतिमा कार्या पाद्यार्घ्याचमनीयकम् ।
यत्नात्संपाद्य विधिवत्पूजोपकरणं तथा ॥
गोचर्ममात्रं संलिप्य मध्ये मण्डलमाचरेत् ।
ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् ॥
मण्डपं रचयेत्तत्र कदलीस्तम्भमण्डितम् ।

चतुर्द्वारसभोपेतं फलपुष्पादिसंयुतम् ॥
वितानं तत्र बध्नीयाद्विचित्रं चैव शोभनम् ।
मण्डले स्थापयेत्कुम्भं ताम्रं वा मृन्मयं शुचिम् ॥
तस्योपरि न्यसेत्पात्रं राजतं वैणवं तु वा ।
वाससाच्छाद्य कौन्तेय पूजयेत्तत्र मां बुधः ॥
उपचारैः षोडशभिर्मन्त्रैः पूजाविधीरितैः ।
ध्यात्वा वाह्यामृतीकृत्य स्वागतादिभिरादरात् ॥
देवकीं वसुदेवं च रोहिणीं सबलां तथा ।
सात्यकिं चोद्धवाक्रूरावुग्रसेनादियादवान् ॥
नन्दं यशोदां तत्कालप्रसूतां गोपगोपिकाः ।
कालिन्दीं कालियं चैव पूजयेन्नाममन्त्रतः ॥
नीराजयेत्ततो भक्त्या मङ्गलं समुदीरयन् ।
जयमङ्गलनिर्घोषैर्देवदेवं समर्चयेत् ॥
दत्त्वा पुष्पाञ्जलिं चैव प्रदक्षिणपुरःसरम् ।
प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वः पुनःपुनः ॥
स्तुत्वा नानाविधैः स्तोत्रैः प्रार्थयीत जगत्पतिम् ।
ततस्तु दापयेदर्घ्यमिन्दोरुदयतः शुचिः ॥
कृष्णाय प्रथमं दद्याद्देवकीसहिताय च ।
नारिकेलेन शुद्धेन दद्यादर्घ्यं विचक्षणः ॥
कृष्णाय परया भक्त्या शङ्खे कृत्वा विधानतः ।
शङ्खे कृत्वा ततस्तोयं सपुष्पकुशचन्दनम् ॥
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ।
इत्थं सम्पूज्य देवेशं रात्रौ जागरणं चरेत् ॥
गीतनृत्यादिना चैव पुराणश्रवणादिभिः ।
प्रत्यूषे विमले स्नात्वा पूजयित्वा जगद्गुरुम् ॥
पायसेन तिलाज्यैश्च मूलमन्त्रेण भक्तितः ।

अष्टोत्तरशतं हुत्वा ततः पुरुषसूक्ततः ॥
इदं विष्णुरिति प्रोक्त्वा जुहुयाद्वै घृताहुतीः ।
होमशेषं समाप्याथ पूर्णाहुतिपुरःसरम् ॥
आचार्यं पूजयेद्भक्त्या भूषणाच्छादनादिभिः ।
गामेकां कपिलां दद्याद्व्रतसम्पूर्तिहेतवे ॥
पयस्विनीं सुशीलां च सवत्सां सगुणां तथा ।
स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनिकायुताम् ॥
रत्नपुच्छां ताम्रपृष्ठां कण्ठे घण्टासमन्विताम् ।
वस्त्रच्छन्नां दक्षिणाढ्यामेवं सम्पूर्णतां व्रजेत् ॥
कपिलाया अभावे तु गौरन्याऽपि प्रदीयते ।
ततो दद्याच्च ऋत्विग्भ्योऽन्येभ्यश्चैव यथार्हतः ॥
ब्राह्मणान भोजयेत्पश्चादष्टौ तेभ्यश्च दक्षिणाम् ।
कलशांस्तत्र सम्पूर्णान् दद्यादष्टौ समाहितः ॥
प्राप्यानुज्ञां ततस्तेभ्यो भुञ्जीत सह बन्धुभिः ।
एवं कृते महाराज व्रतोद्यापनकर्मणि ॥
निष्पापस्तत्क्षणादेव जायते विबुधोपमः । इति ॥

अथ जन्माष्टमीव्रतोद्यापनप्रयोगः—तत्रोद्यापनं चिकीर्षुः चित्तवित्तसंपत्संपन्नो वित्तशाठ्यमकुर्वन् पदार्थसंपादनं कुर्यात् । तत्र सूचनिका—परिभाषोक्तप्रकारेण पञ्चगुञ्जात्मकमाषेण चतुःषष्टिमाषात्मकं पलम् । वित्ततारतम्येन पलेन वा तदर्धेन तदर्धार्धेन वा निर्मिता सर्वलक्षणसम्पन्ना सौवर्णी श्रीकृष्णप्रतिमा, तत्स्थापनार्थं परिभाषोक्तलक्षणस्ताम्रमयो मृन्मयो वा कुम्भः, कुम्भोपरि प्रतिमास्थित्यै रौप्यं वैणवं वा कुम्भमुखन्यासपात्रम्, प्रतिमाच्छादनार्थमुत्तमं वस्त्रयुग्मं, प्रतिमापूजनाय सर्वा षोडशोपचारसामग्री, मण्डपनिर्माणाय कदलीस्तम्भवस्त्रवितानपुष्पमालापञ्चपल्लवफलादीनि, गणेशपूजनादिपूर्व-

पञ्चाङ्गसामग्री, आचार्यब्रह्मणोर्वरणाय वस्त्रालङ्कारादि, ऋत्विग्वरणसामग्री, भोजनार्थमष्टब्राह्मणवरणाय वस्त्रयज्ञोपवीतमालालङ्कारादि, तेभ्यो दक्षिणादानाय अन्नफलद्रव्यपरिपूर्णा वस्त्राच्छन्ना अष्टौ कलशाः, होमार्थं गव्यमाज्यं तिलाः पायससंसिद्धये गव्यं पयः, पञ्चभूसंस्कारादिपूर्णाहुत्यन्ता कुशकण्डिकाविधानोक्ता सर्वा सामग्री, गोदानाय गोदानप्रकारोक्तसर्वसामग्रीसम्पन्ना कपिला, अन्या वा सवत्सा गौः इति पदार्थसंपादनम्।

तत्रोद्यापनकर्ता सम्पूर्णां शुद्धां जन्माष्टमीतिथिं सम्प्राप्य पूर्वदिने कृतैकभक्तादिनियमो ब्रह्मचर्यभूशय्यादिना नियतः श्रीकृष्णं हृदि संस्मरन् स्वपेत्। परदिने प्रातरुत्थाय शुचिर्भूत्वा समाहितो गुरूनिष्टदेवतां पुण्यश्लोकांश्च संस्मृत्य आवश्यकं नित्यकर्म निर्वर्त्य दीपं प्रज्वाल्य स्वस्तिवाचनपुरःसरं गणेशपूजनं विदध्यात्। तत्र सङ्कल्पः— ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणजन्माष्टमीव्रतोद्यापनकर्मणि निर्विघ्नतासिद्धये भगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये इति। ततः प्रधानसङ्कल्पं कुर्यात्— ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ज्ञाताज्ञातमनोवाक्कायकर्मसंचितसकलपापक्षयार्थं चतुर्वर्गसिद्धिद्वारा श्रीकृष्णदेवप्रीतये श्रीकृष्णजन्माष्टमीव्रतस्य साङ्गफलप्राप्तये च जन्माष्टमीव्रतोद्यापनं करिष्ये। तत्पूर्वाङ्गत्वेनेत्यादिसंकल्पमारभ्य सर्वतोभद्रमण्डलदेवतास्थापनपूजनान्तं तदभावपक्षे केवलमण्डले तण्डुलराश्यन्तमेव वा विदध्यात्। तत्र ब्रह्मवरणानन्तरं भोजनार्थमष्टब्राह्मणवरणम्। वेदादिविद्यासंपन्नान् कुलीनान् सुशीलानष्टौ ब्राह्मणानासनेषूपवेश्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमस्मिन् जन्माष्टमीव्रतोद्यापनकर्मणि विध्युक्तफलावाप्तये भोजनार्थं कलशाष्टकप्रतिग्रहार्थं चाष्टानां ब्राह्मणानां पूजनपूर्वकं वरणं करि-

ष्ये । ब्राह्मणानर्घ्यादिभिः संपूज्य एभिर्गन्धाक्षतपुष्पमालादक्षिणावासोभिर्जन्माष्टमीव्रतोद्यापनकर्मणि भोजनार्थं कलशप्रतिग्रहार्थं च भो ब्राह्मणा युष्मान् वृणे । ॐ वृताः स्मः इति प्रत्युक्तिः । ततः प्रार्थयेत्—

अस्य यज्ञस्य निष्पत्त्यै भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैश्च कर्तव्यं शान्तिकं विधिपूर्वकम् ॥

इति विशेषः । ततस्तदुपरि कलशं संस्थाप्य तदुपरि रौप्यं वैणवं वा पात्रमाधाय तत्र स्वासने कृताग्न्युत्तारणां श्रीकृष्णप्रतिमां वासोद्वयाच्छादितां संस्थाप्य जन्माष्टमीव्रतपूजाविधानेन पूजयेत् । तत्र संकल्पः— ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकचतुर्वर्गसिद्धिद्वारा श्रीवासुदेवप्रीतये श्रीकृष्णजन्माष्टमीव्रतोद्यापनाङ्गत्वेन सुवर्णप्रतिमायां सपरिवारस्य श्रीकृष्णदेवस्य यथामिलितोपचारैः पूजनं करिष्ये । ततो ध्यानादिमन्त्रपुष्पाञ्जल्यन्तं षोडशोपचारैः सम्पूज्य चन्द्रोदये जाते प्रथमं श्रीकृष्णाय विशेषार्घ्यं दद्यात्—शुद्धोदकगङ्गाजलगन्धपुष्पाक्षतशुद्धनारिकेलपयोदूर्वायुतमर्घ्यं शङ्खे सम्पाद्य जानुभ्यामवनीं गत्वाऽर्घ्यं शिरस्याधाय—

जातः कंसवधार्थाय भूभारोत्तारणाय च ।
पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ॥
कौरवाणां विनाशाय दैत्यानां निधनाय च ।
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ॥

इति दद्यात् । ततश्चन्द्रायार्घ्यदानम्—

शङ्खे कृत्वा ततस्तोयं सपुष्पकुशचन्दनम् ।
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥

तत्र मन्त्रः—

क्षीरोदार्णवसंभूत आत्रिगोत्रसमुद्भव !

गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥
ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः।
नमस्ते रोहिणीकान्त गृहाणार्घ्यं नमोऽस्तु ते ॥

एवमर्घ्यान्तं संपूज्य रात्रिशेषं जपस्तोत्रपुराणपठनश्रवण-भगवद्गुणकीर्तनगायनादिभिर्नयेत्।

अथ प्रभाते स्नानादिनित्यकृत्यं विधाय यजमानः श्रीकृष्णं षोडशोपचारैः पूर्वोक्तविधिना पूजयेत्। अथाचार्यः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य अग्नेरीशानभागे कलशोपरि नवग्रहान् संपूज्य ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कृत्वाऽग्निं प्रज्वलय्य पूजयेत्।

अथ यजमानो द्रव्यदेवताऽभिध्यानपूर्वकं द्रव्यत्यागसङ्कल्पं कुर्यात्। ॐ विष्णुः ३ अमुकोऽहं श्रीकृष्णजन्माष्टमीव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये। तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, श्रीकृष्णं पायसेन तिलाज्येन मूलमन्त्रेणाष्टोत्तरशतसंख्याकाहुतिभिः केवलाज्येन च पुरुषसूक्तेन इदं विष्णुरिति च मन्त्रेणाष्टोत्तरशतसंख्याकाहुतिभिः मण्डलदेवतास्थापनपूजनपक्षे ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्या नाममन्त्रेणाज्येन, अग्निं स्विष्टकृतं चाज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये। एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम्। ॐ तत्सत् यथादैवतमस्तु न मम।

अथाचार्यो ब्रह्मणाऽन्वारब्धो मनसा प्रजापतिं ध्यायन् आघारावाज्यभागौ च हुत्वा मूलमन्त्रेण पायसतिलाज्यैरष्टोत्तरशतं हुत्वा पुरुषसूक्तेन इदं विष्णुरित्यनेन चाष्टोत्तरशताहुतीराज्येन हुत्वा स्विष्टकृदादिप्रजापत्यन्तं हुत्वा पूर्णाहुतिं जुहुयात्। ततो यजमानो होमसाङ्गतां स-

कल्प्य आचार्यादिभ्यो दत्त्वा उत्तराङ्गत्वेन सपरिवाराय श्रीकृष्णाय पुष्पाञ्जलिं समर्प्य प्रणम्य तथा ब्रह्मादिमण्डलदेवताभ्यो नवग्रहेभ्यश्च पुष्पाञ्जलिं दत्त्वा प्रणम्य ॐ क्षमस्वमिति क्षमाप्य मन्त्रहीनमित्याद्यन्ते ॐ शान्तिरस्तु शिवं चास्तु इत्युक्त्वा विसर्जयेत् । ततः प्रतिमां विधिना आचार्याय दत्त्वाऽष्टौ कलशान् वृतेभ्यो ब्राह्मणेभ्यो विधिना दत्त्वा गोदानं विधाय आचार्याय 'ॐ कृष्णो मे प्रीयतां न मम' इति दद्यात् । ततो भूयसीं सङ्कल्प्य विभज्य दत्त्वा अभिषेकतिलक-आशीर्वादरक्षाबन्धनादि ब्राह्मणेभ्यः प्रतिगृह्य अच्छिद्रं वाचयित्वा ब्राह्मणानुज्ञया सतुलसीदलं तीर्थोदकं पीत्वा शिरसा च प्रतिगृह्य ब्राह्मणान् प्रणमेत् । तत आचार्यादीन् ब्राह्मणान् सम्भोज्य तैरनुज्ञातो बन्धुभिः स्वजनैः सह स्वयं भुञ्जीत । इति ।

अथ हरितालिकाव्रतोद्यापनविधिर्भविष्योत्तरे—

चतुःस्तम्भं चतुर्द्वारं कदलीस्तम्भमण्डितम् ।
घण्टिकाचामरयुतं कमलैरुपशोभितम् ॥
चन्दनागुरुकर्पूरैर्लेपितं मण्डपं शुभम् ।
मध्ये वितानं बध्नीयात्पञ्चवर्णैरलङ्कृतम् ॥
तन्मध्ये कारयेत्पद्मं पञ्चवर्णैः सुशोभनैः ।
तस्योपरि न्यसेद्व्रीहीन् द्रोणेन परिसम्मितान् ॥
सौवर्णं राजतं ताम्रं कलशं विन्यसेत्ततः ।
पञ्च रत्नानि निक्षिप्य सर्वौषधिफलैः समम् ॥
तस्योपरि न्यसेत्पात्रं सौवर्णं राजतं च वा ।
वृषारूढं महादेवं रजतेन विनिर्मितम् ॥
सर्वावयवसंयुक्तां गौरीं हेम्ना विनिर्मिताम् ।
पूजयेत्तत्र गन्धाद्यैः पुष्पैर्नानाविधैः शुभैः ॥
रात्रौ जागरणं कुर्यात् कथाश्रवणपूर्वकम् ।

ततः प्रभातसमये कृत्वा स्नानादि कर्म च ॥
पूर्ववच्चार्चयेद्देवं पश्चाद्धोमं च कारयेत् ।
आचार्यस्तु स्वगृह्योक्तविधिनाऽग्निं च स्थापयेत् ॥
प्रारभेच्च ततो होमं नवग्रहपुरःसरम् ।
तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान् ॥
जुहुयाद्रुद्रमन्त्रेण गौरीमन्त्रेण वेदवित् ।
अष्टोत्तरशतं वाऽपि अष्टाविंशतिमेव वा ॥
एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् ।
सुवर्णरत्नवासोभिर्गां च दद्याद्यथाविधि ॥
काञ्चनानि च रौप्याणि ताम्रकाणि तथैव वा ।
वेणुमृन्मयपात्राणि पूर्णानि विविधैः फलैः ॥
सौभाग्यद्रव्ययुक्तानि स्वर्णरौप्ययुतानि च ।
पक्वान्नवस्त्रताम्बूलकङ्कणादियुतानि च ॥
एवं षोडशसंख्यानि ब्राह्मणेभ्यः प्रदापयेत् ।
दत्त्वा ब्राह्मणयोषिद्भ्यः पारणं तदनन्तरम् ॥
अन्येभ्यो द्विजवर्येभ्यो दक्षिणां च प्रयत्नतः ।
भूयसीं परया भक्त्या प्रदद्याच्छिवतुष्टये ॥
उद्दिश्य पार्वतीशं च सर्वं कुर्यादतन्द्रिता ।
बन्धुभिः सह भुञ्जीत नियता च परेऽहनि ॥ इति ।

अथ हरितालिकाव्रतोद्यापनप्रयोगः । हस्तनक्षत्रसोमवारयुतहरितालिकातृतीयां तदसम्भवे हरितालिकातृतीयामेव वा केवलां प्राप्य तत्पूर्वेऽह्नि एकभक्तहविष्याशनभूशय्याब्रह्मचर्यादिनियमान्विता गौरीमहेश्वरं सञ्चिन्तयन्ती स्वपेत् । व्रतदिने प्रातरुत्थायाऽऽवश्यकं विधाय गुरुमिष्टदेवतां पुण्यश्लोकांश्च संस्मृत्य नद्यादौ विमले जलाशये गत्वा तिलामलकैः स्नानं विधाय गृहानागत्य नित्यकर्म समाप्य स्वासने उपविश्याचम्य

ताम्रपात्रे अर्घ्यं संपाद्य व्रतोद्यापनसंकल्पं कुर्यात्-ॐ विष्णुः ३ अद्येहेत्यादि अमुकसंवत्सरे दक्षिणायने वर्षर्तौ भाद्रपदमासे शुक्लपक्षे हरितालिकातृतीयायां शुभपुण्यतिथौ अमुकगोत्रा अमुकराशिरमुकी देव्यहं मम समस्तपापक्षयपूर्वकं सप्तजन्मसुराज्यसौभाग्यादिविवृद्धये श्रीगौरीमहेश्वरप्रसादासिद्धिद्वारा व्रतसंपूर्णफलप्राप्तये सोपवासं हरितालिकाव्रतं तदुद्यापनं च करिष्ये। ततः सजलं ताम्रपात्रं करयोः कृत्वा—

अद्य स्थित्वा निराहारा श्वोभूते परमेश्वरि।
करिष्ये पारणं गौरि व्रतं मे सफलं कुरु॥
उद्यापनं करिष्येऽहं व्रतसंपूर्तिहेतवे।
त्वत्प्रसादान्महेशानि सम्पूर्णं भवतु व्रतम्॥

इत्युच्चार्य जलं भूमौ निक्षिपेत्।

ततो मध्याह्नस्नानं विधाय मण्डपनिर्माणादिसर्वोपचारसामग्रीं यथाविधि सम्पादयेत्। ततः प्रदोषे स्वासने उपविश्याचम्य गणेशपूजनं संस्कारदीपकोक्तपद्धतिमनुसृत्य विदध्यात्। तत्र संकल्पे विशेषः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं करिष्यमाणहरितालिकाव्रतोद्यापनकर्मणि निर्विघ्नतासिद्धये भगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये। ततः प्रधानसंकल्पं कुर्यात्। ॐ विष्णुः ३ अद्येहेत्यादि अमुकी अहं मम समस्तपापक्षयपूर्वकं सप्तजन्मसुराज्यसौभाग्यादिविवृद्धये श्रीगौरीमहेश्वरपूजनं करिष्ये। तत्पूर्वाङ्गत्वेनेत्यादिसंकल्पमारभ्य सर्वतोभद्रमण्डलदेवतास्थापनपूजनान्तं तदभावपक्षे केवलव्रीहिराश्यन्तमेव वा विधाय तत्र कलशं संस्थाप्य तत्र पूर्णपात्रे प्रतिमाद्वयमग्न्युत्तारणपूर्वकं संस्थाप्य हरितालिकाव्रतपूजाविधानेन पूजयेत्। ततो निशीथे पुनःसंपूज्य कथाश्रवणमङ्गलगायनोत्सवैः रात्रिं निनयेत्। अथ प्रभाते आवश्यकान्ते प्रातःस्नानादि नित्यं वि-

धाय यथोक्तविधानेन देवीं सम्पूजयेत् । तत आचार्यः अग्नि-स्थापनादि तत्पूजनान्तं कर्म कुर्यात् । ततः उद्यापनानुष्ठात्री देवताभिध्यानपूर्वकं द्रव्यत्यागसंकल्पं कुर्यात्--ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहम् अस्मिन् हरितालिकाव्रतोद्याप-नाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, गौरीमहेश्वरौ तिलयवाज्येनाष्टोत्तरशतसंख्याकाहुतिभिरष्टाविंश-तिसंख्याकाहुतिभिर्वा प्रत्येकं रुद्रमन्त्रेण गौरीमन्त्रेण च, नवग्र-हान् तिलयवाज्येनाष्टाष्टसंख्याकाहुतिभिस्तत्तन्मन्त्रेण, अग्निं स्विष्टकृतं च हुतशेषेण, ब्रह्मादिमण्डलदेवतास्तत्पक्षे प्रत्येकमे-कैकयाऽऽहुत्याज्येन नाममन्त्रेण, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सद् यथादैवतमस्तु न मम । ततो ब्रह्मणा-ऽन्वारब्धः पूर्ववत्सर्वं होमं विधाय संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कृत्वा होमसाङ्गतां सङ्कल्प्य विभज्य आचार्यादिभ्यो द-द्यात् । ततो देवमुत्तराङ्गत्वेन सम्पूज्य नत्वा क्षमाप्य विसर्जयेत् । ततः प्रतिमादानं शय्यादानं गोदानं च कुर्यात् । ततो दम्पत्य-ष्टकाय सुपूजितानि सर्वसौभाग्यद्रव्ययुतानि षोडशपात्राणि द-द्यात् । तथा भूयसीं दत्त्वा यथाशक्ति ब्राह्मणान् सुवासिनीश्च भोजयित्वा तदनुज्ञया स्वयं भुञ्जीत ।

अथ ऋषिपञ्चमीव्रतोद्यापनविधिर्भविष्ये—

कृत्वा व्रतं विधानोक्तं सप्तवर्षं कुरूद्वह ।
ततश्चोद्यापनं कुर्यादुद्यापनविधानतः ॥
आचार्यान् वरयेत्सप्त वेदवेदाङ्गपारगान् ।
प्रतिमाः सप्त कुर्वीत सुवर्णेन स्वशक्तितः ॥
जटिलान् साक्षसूत्रांश्च कमण्डलुसमन्वितान् ।

संस्थाप्य कलशे श्वेतान् पूजयेत् सुसमाहिता ॥
तत्र कुर्यात्पूर्वदिने प्रयत्नादेकभक्तकम् ।
प्रातरुत्थाय सुस्नाता ततो गुरुगृहं व्रजेत् ॥
प्रार्थयेत्तं ममाचार्यो भवोद्यापनकर्मणि ।
ततः पूर्वोक्तविधिना मध्याह्नादि समाचरेत् ॥
निर्माय सर्वतोभद्रं मण्डपं च विधानतः ।
वितानं पञ्चवर्णं च फलपुष्पसमान्वितम् ॥
बध्नीयादुपरि श्रीमत्सम्भारान् संविधाय च ।
संस्थाप्य सप्तकलशान् ऋषींस्तत्र निधाय च ॥
मध्याह्ने पूजयेद् भक्त्या पूर्वोक्तविधिना नृप ।
रात्रौ जागरणं कुर्यात् पुराणश्रवणादिभिः ॥
ऋत्विग्भिः सहिता वाथ स्वयमेव समाहिता ।
कृतनित्यक्रिया प्रातर्जुहुयात् तिलसर्पिषा ॥
वैदिको वाऽथ पौराणो अधिकारात् मनुः स्मृतः ।
सहस्तोमाः सप्तऋषयो नाममन्त्रैश्च वा पृथक् ॥
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ।
पुनः पूजां ततः कृत्वा गुरुं सम्पूजयेत्ततः ॥
स्वर्णाङ्गुलीयवासोभिः कुण्डलामृतभोजनैः ।
सप्त गावश्च दातव्या वस्त्रालङ्कारसंयुताः ॥
दद्यादेकां सवत्सां च गुरवे गां पयस्विनीम् ।
पूजयेदृत्विजः सप्त वासोभिर्दक्षिणादिभिः ॥
कलशानुपवीतानि दद्यात्तेभ्यः सुभक्तितः ।
आचार्यं च सपत्नीकं प्रणिपत्य क्षमापयेत् ॥
भोजयेद् ब्राह्मणान् भक्त्या दीनानाथांश्च तर्पयेत् ।
सोपस्करास्ताः प्रतिमा आचार्येभ्यो निवेदयेत् ॥
लब्ध्वानुज्ञां तु भुञ्जीत इष्टैर्बन्धुजनैः सह । इति ।

अथ ऋषिपञ्चमीव्रतोद्यापनप्रयोगः । तत्रोद्यापनकर्त्री पूर्वदिने चतुर्थ्यां कृतैकभक्तादिनियमा सती कृतसप्तवर्षऋषिपञ्चमीव्रता ऋषिपञ्चम्यां कृतशौचस्नाननित्यनियमा गुरुगृहं गत्वा गुरुं प्रार्थयेत्—

भो गुरो त्वं ममाचार्यो व्रतोद्यापनकर्मणि ।
प्रार्थये प्रणिपत्याहं कृपां कुरु ममोपरि ॥ इति ।

ततः स्वगृहमागत्य मध्याह्नस्नानसामग्रीं सम्पाद्य नद्यादौ गत्वा ऋषिपञ्चमीव्रतविधानोक्तविधिना मध्याह्नस्नानं विधाय गृहस्येशाने भागे सुस्थले सुलिप्तायां रङ्गवल्ल्यादिशोभितायां भूमौ तोरणकदलीस्तम्भफलपुष्पमालापञ्चवर्णवितानशोभितं मण्डपं निर्माय तदुपरि पञ्चवर्णं वितानं बद्ध्वा तन्मध्ये सर्वतोभद्रमण्डलं विलिख्य तदुपरि सप्तधान्यं संस्थाप्य पूर्वोक्तविधिना गणेशपूजनं कुर्यात्। तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं करिष्यमाणऋषिपञ्चमीव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्ध्ये श्रीभगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये । ततः प्रधानसङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकीदेव्यहं मम रजस्वलावस्थायां ज्ञाताज्ञातकृतसम्पर्कजनितदोषपरिहारार्थं शास्त्रोक्तफलावाप्तये सप्तवर्षपर्यन्तम् एतावत्कालपर्यन्तं वा कृतस्य ऋषिपञ्चमीव्रतस्य साङ्गफलप्राप्तये तदुद्यापनं करिष्ये, तत्र ब्राह्मणद्वारा पुण्याहं वाचयिष्ये इति सङ्कल्प्य चतुर्भिर्ब्राह्मणैः पुण्याहं वाचयित्वा तेभ्यश्च दक्षिणां दत्त्वा आशिषः प्रतिगृह्णीयात्। ततः पूर्वोक्तविधिना आचार्यं ब्रह्माणं सप्त ब्राह्मणांश्च वृणुयात् । तत आचार्यो ब्रह्मादिमण्डलदेवतावाहनपूजनान्ते तत्र धान्योपरि कलशस्थापनविधिना सप्त कलशान् संस्थाप्य तदुपरि पूर्णपात्रेषु सप्तऋषिप्रतिमा अग्न्युत्तारणपूर्वकं संस्थाप्य प्रतिष्ठाप्य प्राणप्रतिष्ठां विदध्यात् । तत उद्यापनकर्त्री

ऋषिपञ्चमीव्रतपूजाविधानोक्तप्रकारेण ध्यानावाहनादिषोडशोपचारैः विशेषार्घ्यदानप्रार्थनान्तं सम्पूज्य दिनशेषं रात्रिं च कथाश्रवणसत्कीर्तनजागरणैर्निनयेत् ।

अथ प्रातः कृतनित्यक्रिया सप्तऋषीन् सम्पूज्य होमविधानं कारयेत् ।तत्र आचार्यः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य अग्नेरीशाने कलशोपरि वरुणसहितान् नवग्रहान् संस्थाप्य सम्पूज्य ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कुर्यात् । तत उद्यापनकर्त्री देवताभिध्यानपूर्वकं द्रव्यत्यागं सङ्कल्पयेत्—ॐ विष्णुः ३ अद्येहत्यादि अमुकी देव्यहम् अस्मिनृषिपञ्चम्युद्यापनकर्मणि होमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, कश्यपात्रिभरद्वाजविश्वामित्रगौतमजमदग्निवसिष्ठारुन्धतीः तिलाज्येन तत्तन्मन्त्रैः अष्टोत्तरसहस्राहुतिभिः अष्टोत्तरशताहुतिभिर्वा, मण्डलदेवतास्थापनपूजनपक्षे ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्या नाममन्त्रेण आज्येन, ब्रह्मवरुणसहितादित्यादिनवग्रहान् तत्तन्मन्त्रेणाज्येन, अग्निं स्विष्टकृतं च हुतशेषेण, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सद्यथादैवतमस्तु न मम ।

अथाचार्यो ब्रह्मणान्वारब्ध आघाराज्यभागादि नवाहुत्यन्तं सर्वं होमं विधाय संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कुर्यात् । तत उद्यापनकर्त्री होमसाङ्गतां सङ्कल्प्य आचार्यादिभ्यो यथांशं विभज्य दद्यात् । तत उत्तराङ्गत्वेन सप्तर्षीन् ग्रहांश्च सम्पूज्य प्रार्थयेत्—

एते सप्तर्षयः सर्वे भक्त्या सम्पूजिता मया ।
सर्वं पापं व्यपोहन्तु ज्ञानतोऽज्ञानतः कृतम् ॥
इमे ते ऋषयः सप्त सर्वपापप्रणाशनाः ।

अस्माकं सन्तु सततं समीहितफलप्रदाः ॥

ब्रह्मा मुरारिरित्यादि च । ततो व्रतोद्यापनसाङ्गतासिद्धये गोदानविधिना गोदानं विधाय सपत्नीकमाचार्यं गन्धाक्षतपुष्पमालाङ्गुलीयकवासोभिः सम्पूज्य गां दत्त्वा प्रणमेत् । अथ क्षमापनम्—

न्यूनातिरिक्तकर्माणि मया यानि कृतानि च ।
क्षमध्वं तानि सर्वाणि यतो यूयं क्षमाधनाः ॥

अथ विसर्जनम्—

न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि ।
क्षम्याणि चैतानि मम क्षमध्वं प्रयात तुष्टाः पुनरागमाय ॥

यान्तु देवगणाः० । ततः प्रतिमादानसङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहम् ऋषिपञ्चमीव्रतोद्यापनकर्मणः साङ्गतासिद्धये सप्तर्षिप्रतिमासहितान् सोपस्करानिमान् कलशान् सप्ताचार्येभ्यो दास्ये । कश्यपादिसप्ताचार्यान् सम्पूज्य यथाक्रमेण दद्यात् ।

कलशान् फलसंयुक्तान् प्रतिमादक्षिणान्वितान् ।
दास्यामि द्विजवर्येभ्यो व्रतसम्पूर्तिहेतवे ॥
भवन्तः प्रतिगृह्णन्तु ज्योतीरूपास्तपोधनाः ।
उभयोस्तारकाः सन्तु कलशानां प्रदानतः ॥

सति सम्भवे तेभ्यश्च सप्त गा दद्यात् । ब्राह्मणाश्च प्रतिगृह्याशिषं दद्युः । ततो भूयसीं सङ्कल्प्य दत्त्वा ब्राह्मणभोजनं सङ्कल्प्य अच्छिद्रं वाचयित्वा कायेन वाचा इत्यादिना कर्मेश्वरार्पणं कुर्यात् । आचार्यादिभ्य आशिषः प्रतिगृह्य आचार्यादीन् ब्राह्मणान् भोजयित्वा तदनुज्ञया स्वयं भुञ्जीत ।

अथानन्तचतुर्दशीव्रतोद्यापनविधिर्भविष्ये—

आदौ मध्ये तथा चान्ते व्रतस्योद्यापनं चरेत् ।

यदा वित्तस्य चित्तस्य सम्पत्तिः शुभकालता ॥
तदा चोद्यापनं कुर्यात् शुभे लग्ने शुभे दिने ।
चतुर्दशसु वर्षेषु मुख्यमुद्यापनं स्मृतम् ॥
मासि भाद्रपदे प्राप्ते परिपूर्णव्रते ततः ।
शुक्लायां च त्रयोदश्यां ब्रह्मचारी व्रती ततः ॥
एकभक्तेन नियमं कुर्याद् भक्तिसमन्वितः ।
ततः प्रातश्चतुर्दश्यां स्नात्वा तीर्थे शुभे शुचिः ॥
सङ्कल्पयेद्रमाकान्तं देशकालावनुस्मरन् ।
ततो नद्यां देवखाते तीर्थे प्रस्रवणे तथा ॥
सर्वौषधैः सर्वगन्धैस्तिलकल्कैस्थामलैः ।
वेदोक्तविधिना स्नायात् सन्तर्प्य पितृदेवताः ॥
ततो गृहं समागत्य वेदीं कृत्वा सुशोभनाम् ।
तन्मध्ये उपविश्याथ देशकालौ स्मरेत्ततः ॥
गणेशं पूजयित्वाथ पुण्याहं वाचयेद्द्विजैः ।
आचार्यं च सपत्नीकं वरयेद्वेदपारगम् ॥
ब्रह्माणं च सदस्यं च ऋत्विजश्च चतुर्दश ।
सर्वान् वस्त्रैरलङ्कारैर्जलपात्रादिनाऽर्चयेत् ॥
विधाय मण्डपं तत्र वितानाद्युपशोभितम् ।
तत्रालिखेन्मण्डलकं पञ्चवर्णैः सुशोभनैः ॥
विरच्य सर्वतोभद्रं मण्डपान्तः सुशोभितम् ।
तन्मध्ये पङ्कजे धान्यं यथाशक्ति न्यसेत्ततः ॥
सौवर्णं राजतं वाऽपि ताम्रजं वाऽपि मृन्मयम् ।
तस्योपरि न्यसेत् कुम्भमव्रणं सुनवं दृढम् ॥
तस्मिञ्जलं गन्धपुष्पफलपल्लवमृत्तिकाः ।
क्षिप्त्वा रत्नं हिरण्यं च वस्त्रयुग्मेन वेष्टयेत् ॥
सौवर्णं राजतं ताम्रं मृन्मयं वंशजं तथा ।

पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभम् ॥
लिखेदष्टदलं तत्र चन्दनेन सुगन्धिना ।
पद्मं सुशोभनं मध्येऽनन्तमूर्तिं विधाय च ॥
पलेन वा तदर्धेन माषकेणाऽपि वा कृताम् ।
सौवर्णीं रमया युक्तां शङ्खचक्रगदाब्जकाम् ॥
आवाहनाद्युपचारैः पूजयेत्सुसमाहितः ।
ब्रह्मादिदेवतास्तस्मिन्नावाह्यापि च पूजयेत् ॥
पञ्चामृतेन स्नपनं ततश्च वसनद्वयम् ।
पट्टकूलादिकं पीतमर्पयित्वा चरेद्व्रती ॥
पुष्पधूपैस्तथा दीपैर्नैवेद्यैश्च प्रपूजनम् ।
पुनः पुष्पाणि सङ्गृह्य पूजयेन्नामभिः क्रमात् ॥
एवं सम्पूज्य विधिना रात्रौ जागरणं चरेत् ।
गीतवादित्रनृत्यादिपुराणश्रवणान्वितम् ॥
ततः प्रभातसमये स्नात्वाचार्यादिभिः सह ।
अनन्तं पूजयेत् प्राग्वत् जुहुयात् पश्चिमे ततः ॥
कुण्डे वा स्थण्डिले कुर्यादग्निस्थापनपूर्वकम् ।
आज्यभागान्तमाचार्यः स्वगृह्योक्तविधानतः ॥
ततोऽश्वत्थसमिद्भिस्तदभावेऽन्याभिरेव च ।
दुग्धमध्वाज्यदधिभिस्तिलैर्वा पायसेन च ॥
आज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं वाष्टाविंशतिं जुहुयात्क्रमात् ॥
पुरुषसूक्तेन जुहुयादतो देवेति वा पुनः ।
इदं विष्णुर्विचक्रमे स्त्रीणां वै नाममन्त्रतः ॥
प्रणवादिचतुर्थ्यन्तनमोन्तानन्तनामतः ।
स्वाहान्तैश्चैव जुहुयाच्चतुर्दशभिरादरात् ॥
शतमष्टोत्तरं यावत् प्रत्येकं जुहुयाच्चरुम् ।

चरुहोमस्तथा कार्यो मन्त्रैरेतैर्विचक्षणैः ॥
अनन्ताय च कालाय अहोरात्राय वै पुनः ।
अर्धमासाय मासाय ऋतुभ्यश्च तथा पुनः ॥
संवत्सराय स्वाहेति कपिलाय ततः पुनः ।
सङ्कर्षणाय च ततस्ततः कालात्मने तथा ॥
उषसे चैव काष्ठायै मुहूर्तेभ्यस्ततः परम् ।
शेषाय च ततः पश्चादाहुतिं तु चतुर्दशीम् ॥
समिदादिभिरेवं च प्रत्येकं जुहुयात्क्रमात् ।
एवं स्विष्टकृदादीनि पूर्णपात्रान्तमाचरेत् ॥
जपेत्पुरुषसूक्तं तु स्मृत्वाऽनन्तं सुरोत्तमम् ।
पूर्णाहुतिं च जुहुयाद्धोमान्ते विश्वमित्यृचा ॥
होमशेषं समाप्याथ कृत्वा त्र्यायुषमेव च ।
ततो वै लोकपालांश्च ग्रहान् पूज्य यथाक्रमम् ॥
पूजयित्वा हरिं देवमाचार्यं पूजयेत्ततः ।
परिपूज्य सपत्नीकं वस्त्रालङ्कारभूषणैः ॥
वस्त्रालङ्कारभूषाद्यैस्ततो धेनुं समर्चयेत् ।
पयस्विनीं सुशीलां च वस्त्रालङ्कारभूषिताम् ॥
स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठेन शोभिताम् ।
कांस्यदोहां रत्नपुच्छां निष्ककण्ठीं सवत्सकाम् ॥
गोदानस्य विधानेन स्वाचार्याय निवेदयेत् ।
गोदानस्य प्रतिष्ठार्थं दद्यात्स्वर्णं यथाविधि ॥
सोपस्करमनन्तं च ब्राह्मणाय निवेदयेत् ।
ऋत्विजः पूजयित्वाऽथ तेभ्यो दद्याच्च दक्षिणाम् ॥
चतुर्दशैव कुम्भांश्च पक्वान्नपरिपूरितान् ।
वस्त्रोपवीते दद्याच्च अनन्तः प्रीयतामिति ॥
आचार्यादीन् भोजयित्वा पूर्णतां वाचयेत्ततः ।

अथाऽनन्तं विसृज्याऽपि गृह्णीयादाशिषस्ततः ॥
भक्तियुक्तो नमस्कृत्य ब्राह्मणेभ्यः क्षमापयेत् ।
ततो हृष्टो बन्धुयुतो भुञ्जीयात्सुसमाहितः ॥ इति ।

अथ अनन्तचतुर्दशीव्रतोद्यापनप्रयोगः । तत्रोद्यापनकर्ता व्रतग्रहणादिनावधिकचतुर्दशवर्षसमाप्तिदिनत्रयोदश्यां कृतैकभक्तब्रह्मचर्यभूशय्यादिनियमो भाद्रशुक्लचतुर्दश्यां ब्रह्मचर्योपवासयुतो यथासम्भवं पुण्यतीर्थादौ सर्वौषधिसर्वगन्धतिलकामलकैः स्नात्वा स्नानाङ्गतर्पणं विधाय गृहमागत्य मृदा वेदिं कृत्वा तत्र सर्वतोभद्रमण्डलं विलिख्य पञ्चरङ्गैर्यथावत् परिपूर्य मण्डपं सुशोभितं विधाय दीपं प्रज्वलय्य पवित्रपाणिः स्वासने उपविश्याचम्य गणेशपूजनादि पूर्वाङ्गपञ्चकं विदध्यात् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणानन्तचतुर्दशीव्रतोद्यापनकर्मणि निर्विघ्नतासिद्ध्यर्थं श्रीमद्भगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये । ततः प्रधानसङ्कल्पः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं चतुर्दशवर्षाण्यनुष्ठितस्य अनन्तव्रतस्य साङ्गफलप्राप्तये श्रीमदनन्तदेवप्रीतये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेनेत्यादि कलशस्थापनान्तं सर्वं कर्म एकादशीव्रतोद्यापनप्रयोगमनुसृत्य कुर्यात् । तत्र विशेषः आचार्यब्रह्मवरणानन्तरं चतुर्दश ब्राह्मणान् वृणुयात् । ॐविष्णुः ३ अद्येह अमुकोऽहं करिष्यमाणानन्तचतुर्दशीव्रतोद्यापनकर्मणि चतुर्दशसूत्रानन्तयुतान् कलशान् प्रतिग्रहीतुं युष्मान् वृणे इति । ततः कलशोपरि सौवर्णं राजतं ताम्रं मृन्मयं वंशजं वा पात्रं विन्यस्य तत्र चन्दनेन अष्टदलं विलिख्य सूत्रानन्तान् सौवर्णीमनन्तप्रतिमां चाग्न्युत्तारणपूर्वकं संस्थाप्य अनन्तचतुर्दशीव्रतपूजाविधिना सम्पूजयेत् । ततो गीतवादित्रनृत्यादिभिः तां रात्रिं निनयेत् ।

अथ पौर्णमास्यां प्रातः स्नानादि नित्यकर्म विधाय अनन्तदेवं सम्पूज्य प्रणमेत् । अथाचार्यः देवस्य पश्चिमतः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य देवस्येशाने कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कुर्यात् ।

अथ यजमानः द्रव्यदेवताभिध्यानपूर्वकं द्रव्यत्यागसङ्कल्पं कुर्यात् । ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहम् अनन्तव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिम् , इन्द्रम् , अग्निम् , सोमं चाज्येन, श्रीमदनन्तदेवम् अश्वत्थसमिदाज्यतिलयवपायसद्रव्येण प्रत्येकमष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशत्याहुतिभिः प्रत्यृचं पुरुषसूक्तेन अतोदेवेतिमन्त्रेण इदं विष्णु रितिमन्त्रेण वा अनन्तादिचतुर्दशदेवताः चरुद्रव्येण प्रत्येकमेकैकयाऽऽहुत्या, ब्रह्मादिमण्डलदेवतापक्षे नाममन्त्रेण प्रत्येकमेकैकयाऽऽहुत्याऽऽज्येन, अग्निं स्विष्टकृतं हुतशेषेण, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐ तत्सत् यथादैवतमस्तु न मम ।

ततो ब्रह्मणाऽन्वारब्ध आचार्यः आघारावाज्यभागौ च हुत्वा प्रत्यृचं पुरुषसूक्तेन अतोदेवेति मन्त्रेण वा इदं विष्णुरिति मन्त्रेण वा स्त्रीणां नाममन्त्रेण वा यथासंख्यं प्रधानहोमं विधाय चरुणा चतुर्दशाहुतीर्जुहुयात्—ॐ अनन्ताय नमः स्वाहा ॐ कालाय० ॐ अहोरात्राय० ॐ अर्धमासाय० ॐ मासाय० ॐ ऋतुभ्यो० ॐ संवत्सराय० ॐ कपिलाय० ॐ सङ्कर्षणाय० ॐ कालात्मने० ॐ उषसे० ॐ काष्ठायै० ॐ मुहुर्तेभ्यो० ॐ शेषाय० । ततः स्विष्टकृदादि होमशेषं समाप्य पूर्णपात्रदानान्तं विधाय लोकपालान् ग्रहांश्च पञ्चोपचारैः सम्पूज्य बलिदानं च कृत्वा गीतवादित्रनिनदैः पूर्णाहुतिं जुहुयात् ।

ततो यजमानो होमसाङ्गतां दत्त्वा उत्तराङ्गत्वेन श्रीमदनन्तदेवं सम्पूज्य क्षमापयेत्—

क्रियाहीनं भक्तिहीनं द्रव्यहीनं तथैव च ।
मन्त्रहीनं कृतं यच्च परिपूर्णं तदस्तु मे ॥

तत आचार्यं सम्पूज्य गोदानविधिना गोदानं शय्यादानविधिना शय्यां च प्रतिमादानविधिना प्रतिमां च दत्त्वा चतुर्दशसूत्रानन्तादियुतान् कलशान् वृतेभ्यो ब्राह्मणेभ्यो दद्यात् । ततो भूयसीदक्षिणां विभज्य दत्त्वा सिद्धान्नेन सपत्नीकमाचार्यं चतुर्दश ब्राह्मणांश्च भोजयित्वा तदनुज्ञया स्वयं भुञ्जीत ।

अथ महालक्ष्मीव्रतोद्यापनविधिर्भविष्ये—

अथ कृष्णाष्टमीं प्राप्य कुर्यादुद्यापनं व्रती ।
चतस्रः प्रतिमाः कार्याः सौवर्ण्यः श्रीस्वरूपिकाः ॥
सन्ध्यात्रयं च श्रीश्चेति चतस्रः प्रतिमाः स्मृताः ।
स्नपनं कारयेत्तासां पञ्चामृतविधानतः ॥
वस्त्रमण्डपिका कार्या माल्याभरणशोभिता ।
त्रिभूमिः काञ्चनश्लक्ष्णा नानादीपैश्च शोभिता ॥
एवं सम्भृतसंभारो नक्तकाले जितेन्द्रियः ।
स्नातः शुक्लाम्बरधरो व्रती पूजागृहं विशेत् ॥
तत्रोपविश्य पूर्वास्यश्चारुधौतासनोपरि ।
पूजां कृत्वा विधानोक्तां प्रार्थनान्तां विधानतः ॥
विधिवच्च कथां श्रुत्वा रात्रौ जागरणं चरेत् ।
ततो निशीथे सम्प्राप्तेऽभ्युदितेऽमृतदीधितौ ॥
कृत्वा तु स्थण्डिले पद्मे चन्द्रं सम्पूजयेत्ततः ।
दद्यादर्घं च सम्प्रीत्या व्रती तस्मै समाहितः ॥
मन्त्रेणानेन विप्रेन्द्र शङ्खेनाम्बुफलादिना ।
क्षीरोदार्णवसम्भूत चन्द्र लक्ष्मीसहोदर ॥

पीयूषधामन् रोहिण्या सहितोऽर्घ्यं गृहाण मे ।
प्रार्थयीत ततश्चन्द्रं लक्ष्मीं च द्विजसत्तम ॥
मन्त्रैरेतैर्महाभाग प्राञ्जलिः प्रणतः स्थितः ।
नमोऽस्तु ते निशानाथ क्षीरोदार्णवसम्भव ॥
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ।
क्षीरोदार्णवसम्भूते कमले कमलालये ॥
प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये ।
पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च ॥
त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले ।
रात्रिशेषं ततो नीत्वा गीतवादित्रमङ्गलैः ॥
प्रातर्नानाविधा पूजा कार्या तौर्यत्रिकान्विता ।
श्रीसूक्तेन तथा वह्नौ पद्मानि जुहुयाच्छुचिः ॥
पायसञ्चैव बिल्वानि तदलाभे तथा घृतम् ।
ग्रहेभ्यश्चैव होतव्यं समिच्चरुतिलादिकम् ॥
चन्दनं तालपत्रं च पुष्पमालादिकं तथा ।
एवं निर्वर्त्य होमं तु पुनः पूजां समाचरेत् ॥
विष्णोर्वक्षेति त्रिः प्रार्थ्य देवीं त्रिभुवनेश्वरीम् ।
उत्तार्य दोरकं बाहोर्लक्ष्मीपार्श्वे निवेदयेत् ॥
लक्ष्मि देवि गृहाण त्वं यन्मया दोरकं धृतम् ।
व्रतं सम्पूर्णतां यातु कृपा कार्या मयि त्वया ॥
नवे शरावे भक्ष्याणि क्षिप्त्वा बहुविधानि च ।
प्रत्येकं षोडशैतानि पूगपूर्णानि चैव हि ॥
वस्त्रेण तानि सञ्छाद्य वृती दद्यात् समन्त्रकम् ।
क्षीरोदार्णवसम्भूता लक्ष्मीश्चन्द्रसहोदरा ॥
व्रतेनानेन सन्तुष्टा प्रीयतां विष्णुवल्लभा ।
इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति च ॥

इन्दिरा तारकोभाभ्यामिन्दिरायै नमो नमः ।
ततो विसर्जयेद्देवीं मन्त्रेणानेन स व्रती ॥
पङ्कजं देवि सन्त्यज्य मम वेश्मनि संविश ।
यथा सदारपुत्रोऽहं सुखी स्यां त्वत्प्रसादतः ॥
चतस्रः प्रतिमास्तास्तु ब्राह्मणाय निवेदयेत् ।
दद्यादुपायनादीनि श्रोत्रियाणां च योषिताम् ॥
दातव्या धेनुरेका वै हेमशृङ्गादिसंयुता ।
आचार्याय सुवर्णं च तथान्नवसनादिकम् ॥
द्विजेभ्यः षोडशभ्यश्च प्रदद्यादशनादिकम् ।
दक्षिणां च यथाशक्ति चातुर्वर्ण्याय चैव हि ॥
एवं कृत्यं तु निर्वर्त्य व्रती भोजनमाचरेत् ।
श्रद्धया परयोपेतः पूर्णमित्थं भवेद् व्रतम् ॥ इति ।

अथ महालक्ष्मीव्रतोद्यापनप्रयोगः । भाद्रशुक्लाष्टमीमारभ्य प्रत्यहं पूजनकथाश्रवणादिनियमवान् षोडशाहे आश्विनकृष्णाष्टम्यां सम्भृतसम्भारः शुचिः शुक्लवासा नक्तकाले स्वासने उपविश्य दीपं प्रज्वलय्याचम्य ताम्रपात्रे अर्घ्यं सम्पाद्य गणेशपूजनं विधाय व्रतोद्यापनसङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोहं यथोक्तफलावाप्तये ममालक्ष्मीपरिहाराय महालक्ष्मीप्रसादसिद्धये भाद्रशुक्लाष्टमीमारभ्य षोडशदिनपर्यन्तं कृतस्य महालक्ष्मीव्रतस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च उद्यापनं करिष्ये । तदङ्गत्वेन आचार्यब्रह्मणोः षोडशब्राह्मणानां च पूजनपूर्वकं वरणं करिष्ये । तत आचार्यं ब्रह्माणं च वृत्वा षोडशब्राह्मणवरणं कुर्यात् । एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासोऽलङ्करणैः अस्मिन् महालक्ष्मीव्रतोद्यापनकर्मणि भक्ष्यादिपरिपूर्णषोडशपात्रग्रहणाय युष्मान् वृणे । ततः सर्वतोभद्रोपरि कलशस्थापनविधिना कलशं संस्थाप्य तत्र प्रतिमा-

मग्न्युत्तारणपूर्वकं संस्थाप्य प्रतिष्ठाप्य महालक्ष्मीपूजोक्तविधिना प्रार्थनान्तां पूजां विधाय कथां शृणुयात् । ततश्चन्द्रोदये जाते स्थण्डिले पद्मं विलिख्य तत्र रोहिणीयुतं चन्द्रं "एतन्ते" "मनोजूतिः" इत्याद्यन्ते ॐ भूर्भुवःस्वः रोहिणीसहित शशाङ्क इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ध्यायेत्—

हिमकुन्दतुषाराभं क्षीरोदार्णवसम्भवम् ।
ध्यायामि सततं सोमं शम्भोर्मुकुटभूषणम् ॥

ॐ रोहिणीसहिताय चन्द्रमसे नमः इति मन्त्रेण आवाहनादिषोडशोपचारैः सम्पूज्य—

शङ्खे तोयं समादाय फलपुष्पाम्बुसंयुतम् ।
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥

चन्द्रार्घ्यदानमन्त्रः—

ॐ क्षीरोदार्णवसम्भूत चन्द्र लक्ष्मीसहोदर ।
पीयूषधामन् रोहिण्या सहितोऽर्घ्यं गृहाण मे ॥

अथ चन्द्रप्रार्थनामन्त्रः—

ॐ नमोऽस्तु ते निशानाथ क्षीरोदार्णवसम्भव ।
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥

अथ लक्ष्मीप्रार्थना—

ॐ क्षीरोदार्णवसम्भूते कमले कमलालये ।
प्रयच्छ सर्वकामान्मे विष्णुवक्षःस्थलालये ॥
पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च ।
त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले ॥

एवं सम्प्रार्थ्य रात्रिशेषं जागरणेन गीतवादित्रमङ्गलैः सह निनयेत् । अथ प्रभाते स्नानादि नित्यकर्म विधाय महालक्ष्म्याः पूजां विदध्यात् । तत आचार्यः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य अग्नेरीशाने कलशोपरि ब्रह्मविष्णुसहि-

तादित्यादिनवग्रहानावाह्य सम्पूज्य ब्रह्मोपवेशनादिपर्युक्षणान्ते अग्नेः पूजनं कुर्यात् । अथ यजमानः द्रव्यदेवताभिध्यानपूर्वकं द्रव्यत्यागसङ्कल्पं कुर्यात् —ॐ विष्णुः ३ अमुकोऽहं श्रीमहालक्ष्मीव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, महालक्ष्मीं पद्मपायसबिल्वाज्यद्रव्येण श्रीसूक्तेन षोडशाहुतिभिः, ब्रह्मवरुणसहितादित्यादिनवग्रहान् तिलाज्येन प्रत्येकमेकैकयाऽऽहुत्या तत्तन्नाममन्त्रेण, अग्निं स्विष्टकृतं हुतशेषेण, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐ तत्सत् यथादैवतमस्तु न मम इति । ततो ब्रह्मणाऽन्वारब्ध आचार्य आघारावाज्यभागौ च हुत्वा श्रीसूक्तमन्त्रैः स्वाहान्तैः षोडशसंख्याकं प्रधानहोमं विधाय तिलाज्येन ग्रहेभ्यश्च हुत्वा भूरादि पूर्णाहुत्यन्तं कर्म समापयेत् । ततो यजमान उत्तराङ्गत्वेन श्रीमहालक्ष्मीं यथाविधि सम्पूज्य—

ॐ विष्णोर्वक्षसि पद्मे च शंखे चक्रे तथाम्बरे ।
लक्ष्मि नित्या यथाऽसि त्वं मयि नित्या तथा भव ॥

इति त्रिवारं सम्प्रार्थ्य भाद्रशुक्लाष्टम्यां धृतं दोरकं बाहोरुत्तार्य-

लक्ष्मि देवि गृहाण त्वं यन्मया दोरकं धृतम् ।
व्रतं सम्पूर्णतां यातु कृपा कार्या मयि त्वया ॥

इति मन्त्रेण श्रीमहालक्ष्म्या दक्षिणपार्श्वे निवेदयेत् । अथ वायनदानसङ्कल्पः—षोडशविधभक्ष्यफलादियुतान् वस्त्राच्छन्नान् सदक्षिणान् षोडशशरावान् सम्प्रोक्ष्य हिरण्यगर्भेति सम्पूज्य ॐ विष्णुः ३ अमुकोऽहं श्रीमहालक्ष्मीव्रतोद्यापनकर्मणः साद्गुण्यार्थमिमान षोडश शरावान् षोडशब्राह्मणेभ्यो दास्ये ॐ तत्सत् । ब्राह्मणान् सम्पूज्य—

क्षीरोदार्णवसम्भूता लक्ष्मीश्चन्द्रसहोदरा ।
व्रतेनानेन सन्तुष्टा प्रीयतां विष्णुवल्लभा ॥
इन्दिरा प्रतिगृह्णाति इन्दिरा वै ददाति च ।
इन्दिरा तारकोभाभ्यामिन्दिरायै नमो नमः ॥

इति मन्त्रेण दद्यात् ।

अथ विसर्जनम्—

पङ्कजं देवि सन्त्यज्य मम वेश्मनि संविश ।
यथा सदारपुत्रोऽहं सुखी स्यां त्वत्प्रसादतः ॥

ततः सपत्नीकमाचार्यं सम्पूज्य गोदानविधिना गोदानं विधाय प्रतिमासहितं तस्मै दद्यात् । ततः सौभाग्यवतीभ्यः श्रोत्रिययोषिद्भ्यश्च यथाशक्ति सौभाग्यवस्तुजातं वायनत्वेन दत्त्वा भूयसीं सङ्कल्प्य चातुर्वर्ण्याय विभज्य षोडश ब्रह्मादिब्राह्मणान् सम्भोज्य कर्मेश्वरार्पणं कृत्वा ब्राह्मणानुज्ञया स्वयमपीष्टजनबन्धुभिः सह भुञ्जीत ।

अथ कार्तिकस्नानविधिः । पद्मपुराणे—

नाडीद्वयावशिष्टायां रात्रौ गच्छेज्जलाशयम् ।
तिलदर्भाक्षतैः पुष्पगन्धाद्यैः सहितः शुचिः ॥
मानुषे देवखाते च नद्यामथ च सङ्गमे ।
क्रमाद्दशगुणं स्नानं तीर्थे तद्द्विगुणं स्मृतम् ॥
विष्णुं स्मृत्वा ततः कृत्वा सङ्कल्पं स्नानस्य तु ।
तीर्थादिदेवताभ्यश्च क्रमादर्घं प्रदापयेत् ॥
नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेऽस्तु हृषीकेश गृहाणार्घं नमोऽस्तु ते ॥
वैकुण्ठे च प्रयागे च तथा बदरिकाश्रमे ।
यतो विष्णुर्विचक्रमे स त्रेधा निदधे पदम् ॥
अतो देवा अवन्तानो वेधा सन्निदधे पदम् ।

तैरेव सहितः सर्वैर्मुनिदेवमखान्वितैः ॥
कार्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्दन ।
प्रीत्यर्थं तव देवेश दामोदर मया सह ॥
ध्यात्वाऽहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः ।
तव प्रसादात्पापं मे दामोदर विनश्यतु ॥
नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने ।
गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन ॥
स्मृत्वा भागीरथीं विष्णुं शिवं सूर्यं जले विशेत् ।
नाभिमात्रे जले तिष्ठन् व्रती स्नायाद्यथाविधि ॥
तिलामलकचूर्णेन गृही स्नानं समाचरेत् ।
विधवानां यतीनां च तुलसीमूलमृत्स्नया ॥
सप्तमीदर्शनवमीद्वितीयादशमीषु च ।
त्रयोदश्यां च न स्नायाद् धात्रीफलतिलैः सह ॥
आदौ कुर्यान्मलस्नानं मन्त्रस्नानं ततः परम् ।
स्त्रीशूद्राणां न वेदोक्तैर्मन्त्रैस्तेषां पुराणजैः ॥
त्रिधाभूद्देवकार्यार्थं यः पुरा भक्तिभावतः ।
स विष्णुः सर्वपापघ्नः पुनातु कृपया च माम् ॥
विष्णोराज्ञामनुज्ञाप्य कार्तिके व्रतकारकान् ।
रक्षन्ति देवास्ते सर्वे मां पुनन्तु सवासवाः ॥
वेदमन्त्राः सबीजाश्च सरहस्या मखान्विताः ।
कश्यपाद्याश्च मुनयो मां पुनन्तु सदैव ते ॥
गंगाद्याः सरितः सर्वास्तीर्थानि जलदा नदाः ।
ससप्तसागराः सर्वे मां पुनन्तु सदैव ते ॥
पतिव्रतास्त्वदित्याद्या यक्षाः सिद्धाः सपन्नगाः ।
ओषध्यः पर्वताश्चापि मां पुनन्तु त्रिलोकजाः ॥
एभिः स्नायाद्व्रती मन्त्रैर्हस्तन्यस्तपवित्रकः ।

देवर्षिमानवान् पितॄँस्तर्पयेच्च यथाविधि ॥
यावन्तः कार्तिके मासि वर्तन्ते पितृतर्पणे ।
तिलाः संख्याकृताब्दानि पितरः स्वर्गवासिनः ॥
ततो जलाद्विनिष्क्रम्य शुचिवस्त्रावृतो व्रती ।
प्रातःकालोदितं कर्म समाप्याच्र्य हरिं पुनः ॥
तीर्थानि देवान् संस्मृत्य पुनरर्घं प्रदापयेत् ।
गन्धपुष्पफलैर्युक्तं भक्त्या तत्परमानसः ॥
व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥
ततस्तु ब्राह्मणान् भक्त्या पूजयेद्वेदपारगान् ।
गन्धपुष्पैश्च ताम्बूलैः प्रणमेच्च पुनः पुनः ॥
तीर्थानि दक्षिणे पादे वेदास्तन्मुखमाश्रिताः ।
सर्वाङ्गेऽवस्थिता देवाः पूजितास्ते तदर्चने ॥
अव्यक्तरूपिणो विष्णोः स्वरूपं ब्राह्मणा भुवि ।
नावमान्या नो विरोध्याः कदाचिच्छुभमिच्छता ॥
ततो हरिप्रियां देवीं तुलसीमर्चयेद्व्रती ।
प्रदक्षिणानमस्कारान् कुर्यादेकाग्रमानसः ॥
देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः ।
नमो नमस्ते तुलसि पापं हर हरिप्रिये ॥
ततो विष्णुकथां श्रुत्वा पौराणीं स्थिरमानसः ।
तं ब्राह्मणं मुनिं विप्रं पूजयेद् भक्तिमान् व्रती ॥ इति

तथा कार्तिकस्नानव्रतोद्यापनविधिः पद्मपुराणे—

ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती ।
सततं पूर्णतार्थाय विष्णुप्रीत्यर्थमेव च ॥
तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां शुभाम् ।
तुलसीमूलदेशे वै सर्वतोभद्रमुत्तमम् ॥

तस्योपरिष्टात्कलशं पञ्चरत्नसमन्वितम् ।
पूजयेत्तत्र देवेशं सौवर्णं गुर्वनुज्ञया ॥
रात्रौ जागरणं कुर्यात् गीतवाद्यादिमङ्गलैः ।
ततस्तु पूर्णमास्यां वै सपत्नीकान् द्विजोत्तमान् ॥
त्रिंशन्मितानथैकं वा स्वशक्त्या वा निवेदयेत् ।
ततस्तान्भोजयेद् भक्त्या पायसान्नादिना व्रती ॥
अतो देवा इति द्वाभ्यां जुहुयात्तिलपायसम् ।
ततो गां कपिलां दद्यात् पूजयेद् विधिवद् गुरुम् ॥
सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् ।
युष्मत्प्रसादाद्देवेशः प्रसन्नोऽस्तु सदा मम ॥
व्रतादस्माच्च यत् पापं सप्तजन्मकृतं मया ।
तत्सर्वं नाशमायातु स्थिरा मे चास्तु सन्ततिः ॥
इति क्षमाप्य तान् विप्रान् प्रसाद्य च विसर्जयेत् ।
तामर्चां गुरवे दद्यात् गवा युक्तां तदा व्रती ॥
ततः सुहृद्गुरुयुतः स्वयं भुञ्जीत भक्तिमान् । इति ।

अथ कार्तिकस्नानप्रयोगः—स्नानं चिकीर्षुः यथाचारमाश्विनशुक्लैकादश्यां पूर्णमास्यां तुलासंक्रान्तौ वा मुहूर्तावशिष्टायां रात्रौ तिलदर्भाक्षतपुष्पगन्धादियुतस्तीर्थादौ गत्वा प्रातःस्नानं प्रातःसन्ध्यां च विधाय पवित्रपाणिः शुक्लाम्बरधरमिति विष्णुं स्मृत्वा ॐ विष्णुः ३ अद्येह अमुकोऽहं सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीराधादामोदरप्रीतये अद्यप्रभृति हरिबोधिनीपर्यन्तं कार्तिकपौर्णमासीपर्यन्तं वृश्चिकसंक्रान्तिपर्यन्तं वा हविष्याशनेन द्विदलान्नेन वा प्रातर्मध्याह्नसायंत्रिकालमर्घ्यदानपूर्वकं कार्तिकस्नानं करिष्ये इति सङ्कल्प्य स्नानं कृत्वा—

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ॥

इति गन्धपुष्पाक्षतैर्युतमर्घ्यं दत्त्वा--

कार्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्दन ।
प्रीत्यर्थं तव देवेश दामोदर मया सह ॥
ध्यात्वाऽहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः ।
तव प्रसादात्पापं मे दामोदर विनश्यतु ॥

इति स्नात्वा ततोऽर्घ्यद्वयं पुनर्दद्यात् । तत्र मन्त्रौ—

नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥
व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥ इति ।

ततः देवर्षिपितृतर्पणं विदध्यात् । ततः अर्घ्यं संस्थाप्य भूतोत्सादनविधिं नित्यपूजावदनुष्ठाय प्राणानायम्य ॐ विष्णुः ३ अद्येह अमुकोहं कृतसङ्कल्पसिद्ध्यर्थं कार्तिकस्नानाङ्गं राधादामोदरयोः पूजनं करिष्ये। सुवर्णप्रतिमां हिमस्य त्वेत्यग्न्युत्तारणपूर्वकं पञ्चामृतैः संस्नाप्य "एतन्ते" "मनोजूतिः" ॐ भूर्भुवःस्वः राधादामोदर इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठापयेत् । ध्यानम्—

दक्षिणाधस्तनकरादारभ्यैतत्प्रदक्षिणम् ।
पद्मशङ्खगदाचक्रयुतो दामोदराऽच्युत ॥

ततः नाममन्त्रेण पुरुषसूक्तमन्त्रैः आवाहनादि पुष्पमालान्तं समर्पयेत् ।

**अथाङ्गपूजा—ॐ दामोदराय नमः पादौ पूजयामि । ॐ केशवाय नमः कटिं० । ॐ नारायणाय नमः उदरं० । ॐ वामनाय० कण्ठं० । ॐ श्रीधराय नमः बाहू० । ॐ गोविन्दाय मुखं० । ॐ सहस्राक्षाय० नेत्रे० । ॐ सर्वेश्वराय० ललाटं० । ॐ वि-**

ष्णवे० शिरः । ॐ दामोदराय० सर्वाङ्गं० । ततो नाममन्त्रैः पुरुषसूक्तमन्त्रैश्च धूपदीपादिमन्त्रपुष्पाञ्जल्यन्तं समर्प्य क्षणं ध्यात्वा सफलमर्घ्यं दद्यात् । जानुभ्यामवनिं गत्वा—

ॐ नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः ।
नमस्ते सहस्रपदे पुरुषाय नमो नमः ॥
सहस्रनाम्ने देवेश प्रसीद त्वं ममाच्युत ।
अर्घ्यं गृहाण भगवन् सर्वकामप्रदो भव ॥
अक्षया सन्ततिर्मेऽस्तु दामोदर नमोऽस्तु ते ।

इत्यर्घ्यं दद्यात् । एवं प्रत्यहं पूजां कुर्यात् ।

ततः—

देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः ।
नमो नमस्ते तुलसि पापं हर हरिप्रिये ॥

इति मन्त्रेण तुलसीं पूजयेत् । ततो ब्राह्मणान् सम्पूज्य यथाशक्तिदक्षिणादिभिः सन्तोषयेत् । दिनशेषं हरिकथाश्रवणादिभिरतिवाह्य सायं पुनः प्रतिमायाः पञ्चोपचारपूजां विदध्यात् । एवं मासपर्यन्तं विधाय अन्ते उद्यापनं कुर्यात् ।

अथ कार्तिकस्नानोद्यापनप्रयोगः—तत्रोद्यापनकर्ता उक्तविधिना मासपर्यन्तं स्नानं प्रत्यहं विधाय कार्तिकमासस्य अन्तिमदिनात् पूर्वस्मिन्नहनि कृतनित्यक्रियः तुलस्या उपरि मण्डपिकां कृत्वा तन्मूलदेशे सर्वतोभद्रमण्डलं विरच्य तदुपरि कलशं संस्थाप्य एकादश्युद्यापनप्रयोगोक्तविधिना गणेशपूजान्तं कुर्यात् । ततः प्रधानसङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयकामः श्रीराधादामोदरप्रीतये कृतस्य कार्तिकस्नानस्य सम्पूर्णतासिद्धये साङ्गफलावाप्तये च उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेन इत्यादि सर्वतोभद्रमण्डलदेवतास्थापनपूजनान्तं तदभावे केवलतण्डुलराशिकरणान्तं वा विधाय तदु-

परि कलशविधिना कलशं संस्थाप्य तत्र सौवर्णीं राधादामोदर-प्रतिमां पूर्वोक्तविधिना संस्थाप्य पूजयेत् । तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कार्तिकस्नानव्रतोद्यापनकर्मणि यथोक्तफलावाप्तये श्रीराधादामोदरप्रीतये श्रीराधादामोदरयोः षोडशोपचारैः पूजनं करिष्ये इति सङ्कल्प्य स्नानप्रयोगोक्तविधिना सर्वं पूजनविधिं समाप्य तत्कथाश्रवणतद्ध्यानजपादिभिर्दिनमतिवाह्य सायंसन्ध्यादिविध्यन्ते पुनः पूजां धूपार्तिक्यं च विधाय मङ्गलवादित्रनृत्यगीतादिभिः तां रात्रिं निनयेत् । अथ प्रभाते पौर्णमास्यां नित्यकर्मान्ते पूजां विधाय तत आचार्योऽग्निस्थापनादि तत्पूजान्तं कर्म कृत्वा यजमानो द्रव्यदेवताभिध्यानपूर्वकं द्रव्यत्यागसङ्कल्पं कुर्यात् । अद्येहेत्यादि अमुकोऽहं कार्तिकस्नानव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, श्रीराधादामोदरं तिलपायसेन अतो देवा इदं विष्णुरिति मन्त्राभ्यां प्रत्येकमष्टोत्तरशतमष्टाविंशतिसंख्याकाहुतिभिर्वा, अग्निं स्विष्टकृतमित्यादिप्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐ तत्सद् यथादैवतमस्तु न मम । तत आचार्यो ब्रह्मणाऽन्वारब्ध आघारावाज्यभागौ च हुत्वा प्रधानहोमं कुर्यात् । तत्र मन्त्रौ-ॐ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ॥१॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳫंसुरे स्वाहा ( य० सं० ५-१६ ) ॥ २ ॥ इति । ततः स्विष्टकृदादि होमशेषं समापयेत् । ततो यजमानः साङ्गताम् आचार्यादिभ्यो दत्त्वा उत्तराङ्गत्वेन पुनर्देवं तुलसीं च सम्पूज्य गुरुं व्रतोपदेष्टारं वस्त्रालंकरणादिभिः सम्पूज्य तस्मै कपिलां गां स्वलङ्कृतां गोदानविधिना दद्यात् । अन्यांश्च ब्राह्मणान्

वस्त्रालङ्करणदक्षिणादिभिः सम्पूज्य क्षमापयेत् प्रार्थयेच्च—

युष्मत्प्रसादाद्देवेशः प्रसन्नोऽस्तु सदा मम ।
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ॥
तत्सर्वं नाशमायातु स्थिरा मे चाऽस्तु सन्ततिः ।
मनोरथास्तु सफलाः सन्तु नित्यं समर्चनात् ॥
देहान्ते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभम् ।

ततो मन्त्रहीनमित्यादिदेवविसर्जनान्तं कर्मेश्वरार्पणं कृत्वा सपरिच्छदां प्रतिमामाचार्याय दत्त्वा भूयसीं सङ्कल्प्य विभज्य दत्त्वा आचार्यादीन् प्रति सम्भवे त्रिंशद्दम्पतींश्च भोजयित्वा तदनुज्ञया स्वयमपि भुञ्जीत ।

अथ तुलसीविवाहविधिर्विष्णुयामले—

आदावेवाथ तुलसीं वने वा स्वगृहेऽपि वा ।
मासत्रयेण संवर्ध्य ततो यजनमारभेत् ॥
सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्तिके मासि भीष्मपञ्चदिनेषु वा ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डं वेदीं विवाहवत् ॥
ब्राह्मणं देशिकं चैव चतुरश्च तथा द्विजाः ।
ग्रहयज्ञं पुरः कृत्वा मातृणां यजनं ततः ॥
कृत्वा नान्दीमुखश्राद्धं सौवर्णं स्थापयेद्धरिम् ।
कृत्वा च रौप्यतुलसीं लग्ने त्वस्तमिते रवौ ॥

गोधूलिलग्ने इत्यर्थः ।

सम्पूज्यालंकृतां तां च प्रदद्याद्विधिना हरेः ।
वासःश्रुतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ।
यदाबध्नान्निति मन्त्रेण कङ्कणं पाणिपल्लवे ॥
विवाहकर्मवत्सर्वं कर्तव्यं देशिकोत्तमैः ।
कोऽदादिति मन्त्रेण करग्राहो विधीयते ॥

कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकम् ।
आचार्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥

स्विष्टकृतोऽनन्तराः । ॐ नमो भगवते केशवाय स्वाहा... अधोक्षजाय० ।

यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः ।
प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुना सह ॥

तुलस्या इति शेषः ।

तुलसीपाणिग्रहणे वेदिकायां विभावसौ ।
शतकुम्भं जपेत्सूक्तं पावमानैर्विशेषतः ॥
जीवसूक्तं पुनर्जप्त्वा नवसूक्तं तथैव च ।
पठेयुः शान्तिकाध्यायान् तथा वैष्णवसंहिताम् ॥
गायन्ति मङ्गलं नार्यो भेरीतूर्यादिनिःस्वनैः ।
शङ्खझल्लरिनिर्घोषैर्मङ्गलं विधिमाचरेत् ॥
दद्यात्पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
ब्रह्मणे वृषभं दद्यादाचार्यं परिधाप्य च ॥
गां पदं च तथा शय्यामाचार्याय प्रदापयेत् ।
ऋत्विग्भ्यो दापयेत् वस्त्राण्यन्येषां चैव दक्षिणाम् ॥
ब्राह्मणान्भोजयेत्पश्चात् सर्पिःक्षीरैः सशर्करैः ।
एवं प्रतिष्ठितां देवीं विष्णुना च समर्पयेत् ॥ इति ।

अथ तुलसीविवाहप्रयोगः—तत्र विवाहवत्सर्वं मण्डपं वेदीं च सम्पाद्य तुलस्या दामोदरस्य हरिद्रासुगन्धतैलादिभिर्मङ्गलस्नानं कारयित्वा स्वासने उपविश्य दीपं प्रज्वलय्याचम्य प्राणानायम्य सुमुखश्चेत्यादि पठित्वा गणेशाय पुष्पाञ्जलिं समर्प्य सूर्यायार्घ्यं दत्त्वा पुनरर्घ्यं संस्थाप्य भूतोत्सादनं कृत्वा सङ्कल्पं कुर्यात्–ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणतुलसीविवाहकर्मणि निर्विघ्नतासिद्ध्यै श्रीगणेशस्य पूजनं

करिष्ये इति सङ्कल्प्य गणेशं यथाविधि सम्पूज्य प्रधानसङ्कल्पं कुर्यात्-ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ममाखिलविविधपातकशमनपूर्वकाभीष्टसिद्धिद्वारा श्रीराधादामोदरप्रीत्यर्थं तुलसीविवाहं करिष्ये। तत्पूर्वाङ्गत्वेन अखण्डदीपस्थापनं मातृपूजानान्दीश्राद्धपुण्याहवाचनानि ग्रहपूजनं च करिष्ये इति सङ्कल्प्य संस्कारदीपकोक्तरीत्या अखण्डदीपस्थापनं मातृपूजानान्दीश्राद्धपुण्याहवाचनकलशस्थापनपूर्वकं ग्रहपूजनं च विधाय पञ्चघोषपूर्वकं शिबिकादिना आगतं श्रीमद्भगवन्तं वरमानेतुं कतिचित्पदानि गत्वा द्वारमानाय्य द्वारे यथाशक्ति पुष्पाञ्जलिसमर्पणपूर्वकं यानादवतार्य स्वस्तिकादिशोभितायां शुद्धायां भूमौ स्वासने प्राङ्मुखम् अवस्थाप्य स्वयमुदङ्मुख उपविशेत्। आचम्य प्राणानायम्य--

आपद्घनध्वान्तसहस्रभानवः...............पादपांसवः ॥

इति आचार्यपादौ प्रक्षाल्य तथैव भगवत्पादौ प्रक्षालयेत्। ततः वाग्दानसङ्कल्पं कुर्यात्--ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणतुलसीविवाहाङ्गभूतं वाग्दानं करिष्ये इति सङ्कल्प्य कुङ्कुमाक्तानि पञ्चपूगीफलान्यादाय अमुकगोत्रः अमुकप्रवरोऽमुकशर्माहं व्याघ्रपदगोत्रोत्पन्नाय व्याघ्रपदगार्ग्यवासिष्ठेतित्रिप्रवराय देवमीढवर्मणः प्रपौत्राय शूरसेनवर्मणः पौत्राय वसुदेववर्मणः पुत्राय अनेककोटिब्रह्माण्डनायकाय दामोदराय श्रीधराय वराय आलम्बायनगोत्राम् आलम्बायनदेवलगौतमेतित्रिप्रवरां विश्वकर्मणःप्रपौत्रीं प्रजापतेः पौत्रीम् ईश्वरस्य पुत्रीं तुलसीं कन्यां शुभमुहूर्ते दास्ये इति वाचा सम्प्रददे। तत्प्रतिग्रहार्थमेभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यभूषणाद्युपचारैस्त्वामहं वृणे। वृतोऽस्मीति प्रत्युक्तिः। ततः पुनरर्घं संस्थाप्य वरणसङ्कल्पं कुर्यात्। ॐ विष्णुः ३ अद्येहेत्यादि अमुकोहं करिष्यमाणतुल-

सीदानप्रतिग्रहार्थं द्वारदेशागतस्य दामोदरवरस्य पूजनपूर्वकं वरणं करिष्ये । तत्पूर्वाङ्गत्वेन तुलसीविवाहकर्मणि आचार्यकर्मकर्तुमाचार्यस्य पूजनं वरणं च करिष्ये । प्रथममाचार्याय भूमिदेवाग्रेति मन्त्रेणाऽर्घं दत्त्वा गन्धद्वारामिति गन्धान् दत्त्वा ॐ नमोऽस्त्वनन्तायेति अक्षतपुष्पमालादिभिः सम्पूज्य अद्भिः क्षीरेण कुशाग्रैर्दध्ना बदरेण तण्डुलैर्यवैः सर्षपैश्च सम्पादिताष्टाङ्गेनार्घेण आचार्यसम्मुखः—अर्घोऽर्घोऽर्घः प्रतिगृह्यताम् । ॐ अहं प्रतिगृह्णामीत्याचार्यः । ततः वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलयज्ञोपवीतद्रव्यवासोऽलङ्करणपुष्पमालाभिस्तुलसीविवाहकर्मणि आचार्यत्वेन त्वामहं वृणे । ॐ वृतोऽस्मीति प्रतिवचनम् । आचार्यस्तु० इति सम्प्रार्थ्य पुनरर्घं दद्यात् । ॐ अर्घः ३ प्रतिगृह्यताम्, अहं प्रतिगृह्णामि इत्याचार्यः । ततः पूर्ववत् अष्टाङ्गार्घमादाय——

ॐ आगतोऽसि वरश्रेष्ठ सर्वकामार्थसिद्धये ।
प्रतिग्रहसमर्थोऽसि अर्घं गृह्ण नमोऽस्तु ते ॥

ॐ असौ यस्ताम्रो० ॐ असौ योऽवसर्पति० एवमर्घं दत्त्वा नमोऽस्त्वनन्तायेति सम्पूज्य वरणसामग्रीं हस्ते गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतताम्बूलपादुकेत्यादिभिः करिष्यमाणतुलसीदानप्रतिग्रहार्थं व्याघ्र० गोत्रं वैयाघ्रपद० त्रिप्रवरं श्रीदामोदरं वरत्वेन त्वामहं वृणे ॐ वृतोऽस्मि । तत आचार्यो यजमानाय तिलकाशीर्वचनं कुर्यात् । ततो वाद्यघोषपुरःसरं शान्तिपाठं पठन्तो विवाहस्थलं प्रविशेयुः । तत्र रक्तकम्बलादिना तुलसीदामोदरयोर्मध्ये अन्तःपटं विधाय प्राङ्मुखीं दामोदरप्रतिमां पश्चिमाभिमुखीं रौप्यमयीं तुलसीमवस्थाप्य स्वयं दाता उदङ्मुखो भूत्वा स्वासने उपविश्य मधुपर्केण अर्चयेत् । आ-

घस्य प्राणानायम्य अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहमागतं दामोदरं श्रीधरं वरं मधुपर्केण अर्चयिष्ये इति सङ्कल्प्य संस्कारदीपकोक्तरीत्या विष्टरदानादि मधुपर्कदानान्तं कृत्वा बहिःशालायां विवाहवेद्यां पञ्चभूसंस्कारपूर्वकमग्निस्थापनं कृत्वा श्रीदामोदराय वस्त्रचतुष्टयं दाता दद्यात्। तत्र वस्त्रद्वयं तुलसीपरिधानार्थं बोध्यम्। ॐ जरां गच्छ० या अकृन्तन्० इति मन्त्रद्वयेन तुलस्या वस्त्रद्वयपरिधानं कारयेत्। "यदाबध्नन्" इत्यनेन कङ्कणं च पाणिपल्लवे बध्नीयात्। ततः परस्परं समञ्जेतम् इति प्रेष्य तुलसीदामोदरौ सम्मुखीकुर्यात्। उभयपक्षीया ब्राह्मणा मङ्गलाष्टकपाठं कुर्युः। अत्र समाचारात् परिधास्यै० यशसा० इति मन्त्राभ्यां दामोदरस्य वस्त्रद्वयपरिधानं कारयेत्।

समाचारात् छोलिकाभरणं कृत्वा लग्नदानं च विधाय तुलसीदानसङ्कल्पं कुर्यात्--कुशातिलयवजलान्यादाय पत्नीहस्तेन सन्ततजलधारां दापयेत्। तुलसीशाखां कांस्यपात्रोपरि हस्ते धृत्वा ॐ विष्णुः ३ अद्येहेत्यादि देशकालकीर्तनान्ते अमुकोऽहं सपत्नीकः व्याघ्रपदगोत्रस्य वैयाघ्रपदगार्ग्यवासिष्ठेतित्रिप्रवरस्य देवमीढवर्मणः प्रपौत्राय, व्याघ्रपद० वैयाघ्रपद० शूरसेनवर्मणः पौत्राय, व्याघ्रपद० वैयाघ्रपद० वसुदेववर्मणः पुत्राय व्याघ्र० गोत्राय वैयाघ्रप० प्रवराय अनन्तकोटिब्रह्माण्डनायकाय दामोदराय श्रीधराय वराय आलम्बायनगोत्रस्य आलम्बायनदैवलगौतमेति त्रिप्रवरस्य विश्वकर्मणः प्रपौत्रीम्, आलम्बायन० आलम्बायनदैवल० प्रजापतेः पौत्रीम्, आलम्बायन० आलम्बायनदै० ईश्वरस्य पुत्रीम् आलम्बायनगोत्राम् आलम्बायन० त्रिप्रवरां संवर्धितां श्रीरूपिणीं तुलसीं कन्यां यथाशक्त्यलङ्कृतां यथाश-

कल्पुपकल्पितयौतकयुतां प्रजापतिदेवतां मम जन्मप्रभृति उपार्जि-तकायिकवाचिकमानसिकात्रिविधपापक्षयपूर्वकसमस्तपितॄणां नि-रतिशयानन्दब्रह्मलोकावाप्त्यादिकन्यादानफलपुत्रपौत्राद्यनवच्छि-न्नसन्ततिलक्ष्मीप्राप्त्यादितुलाकल्पोक्तफलासिद्धि—एकविंशति-पुरुषोद्धरणवैकुण्ठभुवनगमनतत्रत्यविपुलभोगोपभुक्त्यनन्तरं वि-ष्णुसायुज्यप्राप्त्यर्थं तुभ्यं सम्प्रददे इत्युक्त्वा सकुशाक्षतजलं तुलसीपल्लवं दक्षिणहस्ताङ्गुष्ठत्वेन परिकल्प्य दामोदर-हस्ते दद्यात् ।

कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥

इति दानवाक्यं पठेत् । ततस्तुलसीदामोदरयोः पूजनं कृत्वा प्रार्थयेत्—

त्रैलोक्यनाथ देवेश सर्वभूतदयानिधे ।
दानेनानेन सुप्रीतः सदा शान्तिं प्रयच्छ मे ॥

तत आचार्यः ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्याम्पूष्णो हस्ताभ्याम्–प्रजापतये कन्यां प्रतिगृह्णामि–ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॐ स्वस्ति इत्युक्त्वा दक्षाङ्गुष्ठत्वेन परिकल्पितं तुलसीपल्लवं गृहीत्वा का-मस्तुतिं पठेत्–ॐ कोऽदात्कस्मा अदात्कामोऽदात्का-मायादात । कामो दाता कामः प्रतिग्रहीता कामैत-त्ते (य० सं० ७-४८) इति । ततो यजमानः कन्यादानप्र-तिष्ठां कुर्यात् । तिलकुशयवजलानि सुवर्णं चादाय ॐ अद्येह अमुकोऽहं तुलसीरूपकन्यादानकर्मणः फलप्रतिष्ठासिद्ध्यर्थमि-दं सुवर्णमग्निदैवतं दामोदराय वराय तुभ्यं सम्प्रददे न मम इत्यु-क्त्वा दद्यात् । आचार्यः ॐ स्वस्तीति वदेत् । अथाचारात्पु-रोहिताद्विर्द्रव्यपूगीफलसर्षपाक्षतहारिद्राभिस्तुलसीदामोदरयो-

वस्त्राञ्चलग्रन्थिं यज्ञोपवीतेन दृढं बद्ध्वा "एतन्त" इत्यादि पठित्वा ॐ भूर्भुवःस्वः अञ्चलग्रन्थे सुप्रतिष्ठितो भव इति प्रतिष्ठाप्य गन्धादिभिः पूजयेत्। अन्ते मोचयेत्। तत आचार्यो विवाहवेदिं गत्वा ब्रह्मोपवेशनादि पर्युक्षणान्तं कृत्वा अग्निप्रणीतयोर्मध्ये प्रोक्षणीं संस्थाप्य अग्निं पञ्चोपचारैः सम्पूज्य जिह्वापूजनं रेखापूजनं कृत्वा आघारावाज्यभागौ महाव्याहृतीः सर्वप्रायश्चित्तं राष्ट्रभृद्धोमं जयाहोमम‌भ्यातानहोमं च कृत्वा प्राजापत्यं हुत्वा स्विष्टकृद्धोमं च कृत्वा ॐ नमो भगवते वासुदेवाय स्वाहेति मन्त्रेण नवाहुतीर्हुत्वा ॐ केशवाय नमः स्वाहा ॐ नारायणाय नमः स्वाहा ॐ माधवाय० ॐ गोविन्दाय० ॐ विष्णवे० ॐ मधुसूदनाय० ॐ त्रिविक्रमाय० ॐ वामनाय० ॐ श्रीधराय० ॐ हृषीकेशाय० ॐ पद्मनाभाय० ॐ दामोदराय० ॐ उपेन्द्राय० ॐ वासुदेवाय० ॐ अनिरुद्धाय० ॐ अच्युताय० ॐ अनन्ताय० ॐ गदिने० ॐ चक्रिणे० ॐ विश्वक्सेनाय ॐ वैकुण्ठाय० ॐ जनार्दनाय० ॐ मुकुन्दाय० ॐ अधोक्षजाय नमः स्वाहेति—चतुर्विंशत्याहुतीर्जुहुयात्। सपत्नीको यजमानो विष्णुना सह तुलस्याश्चतस्रः प्रदक्षिणाः कुर्यात्। अनन्तरं शतकुम्भसूक्तं नवर्चं पावमानं जीवसूक्तं नवसूक्तं शान्तिकाध्यायं वैष्णवसंहितां च जपेत्। नार्यो मङ्गलगीतकानि कुर्युः शङ्खभेरीझल्लर्यादिवाद्यघोषं च कारयेत्।

तत आचार्यः पूर्णाहुतिं कृत्वा तुलसीमूर्धनि ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्॥ इत्यनेन आपोहिष्ठेत्यादित्र्यृचेन च अभिषिञ्चेत् हरिद्रासिन्दूरादिदानं च कुर्यात्। ततः संस्रवप्राशनादि प्रणीताविमोकान्तं

कुर्यात् । ततो यजमानो ब्रह्मणे वृषभं तन्निष्क्रयं वा दत्त्वा आचार्यं वस्त्रादिना संभूष्य गां पदं शय्यां च यथासम्भवं दद्यात् । अन्ते रौप्यतुलसीप्रतिमासहितां दामोदरप्रतिमां च पुनः सम्पूज्य दद्यात् । ऋत्विग्भ्यो दक्षिणामितरेभ्यो भूयसीं च दत्त्वा मिष्टान्नेन ब्राह्मणान् भोजयेत् । तत आचार्यस्तुलसीसहितं दामोदरं शिबिकारूढं कृत्वा मङ्गलवाद्यघोषपुरस्सरं ब्राह्मणैः सह स्वगृहं नयेत् । स्वगृहे च जीवन्तिकापूजनपूर्वकनृत्यगीतवाद्यपुरस्सरं भोजनोत्सवं कुर्वीत ।

अथ भीष्मपञ्चकव्रतविधिः स्मृतिकौस्तुभे देवीपुराणे—

एकादश्यां तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् ।
प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती ॥
नद्यां निर्झरगर्ते वा समालभ्य च गोमयम् ।
यवव्रीहितिलैः सम्यक् पितॄन्सन्तर्पयेत् क्रमात् ॥
स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः ।
ततः सम्पूजयेद्देवं सर्वपापहरं हरिम् ॥
स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतेन च ।
तथैव पञ्चगव्येन गन्धचन्दनवारिणा ॥
चन्दनेन सुगन्धेन कुङ्कुमं नागकेशरम् ।
कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् ॥
अर्चयेद्रुचिरैः पुष्पैर्गन्धधूपसमन्वितैः ।
गुग्गुलं घृतसंयुक्तं दद्यात्कृष्णाय भक्तिमान् ॥
दीपकं च दिवारात्रौ दद्यात्पञ्चदिनानि तु ।
नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् ॥
एवमभ्यर्च्य देवेशं स्तुत्वा चैव प्रणम्य च ।
ॐ नमो वासुदेवेति जपेदष्टोत्तरं शतम् ॥
जुहुयाच्च घृताभ्यक्ततिलव्रीहियवान् व्रती

षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च ॥
उपास्य पश्चिमां सन्ध्यां प्रणम्य गरुडध्वजम् ।
जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेन्नरः ॥
सर्वमेतद्विधानं च कार्यं पञ्चदिनेष्वपि ।
विशेषोक्तं व्रते चास्मिन् यदन्यूनं शृणुष्व तत् ॥
प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्नरः ।
द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् ॥
पूजयेत्तु तृतीयेऽह्नि नाभिं भृङ्गारकेण तु ।
बाणाबिल्वजपाभिश्च ततः स्कन्धौ समर्चयेत् ॥
ततस्तु पूजयेच्छीर्षं मालत्या चक्रपाणिनः ।
कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः ॥
अर्चयित्वा हृषीकेशमेकादश्यां समाहितः ।
त्रिः प्राश्य गोमयं सम्यगेकादश्यामुपावसेत् ॥
गोमूत्रं मन्त्रवद् भूयो द्वादश्यां प्राशयेद् व्रती ।
क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि ॥
सम्प्राश्य कायशुद्ध्यर्थं लङ्घनीयं चतुर्दिनम् ।
पञ्चमे दिवसे स्नात्वा विधिवत्पूज्य केशवम् ॥
भोजयेद्ब्राह्मणान्भक्त्या ततो दद्याच्च दक्षिणाम् ।
ततो नक्तं समश्नीयात्पञ्चगव्यपुरस्सरम् ॥
एवं सम्यक् समाप्यं स्याद्यथोक्तं व्रतमुत्तमम् । इति ।

तत्रैव भविष्योत्तरे विशेषः—

पापस्य प्रतिमा कार्या रौद्रवक्त्राऽतिभीषणा ।
खड्गहस्ताऽतिविकृता लौही दंष्ट्राकरालिनी ॥
तिलप्रस्थोपरि स्थाप्या कृष्णवस्त्राभिवेष्टिता ।
रक्तवस्त्रकृतापीडा ज्वलत्काञ्चनकुण्डला ॥
सम्पूज्या परया भक्त्या धर्मराजस्य नामभिः ।

इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
यदन्यजन्मनि कृतमिह जन्मनि वा पुनः ।
पापं प्रशममायातु तव पादप्रसादतः ॥
एवं सम्पूज्य विधिवत्प्रतिमा सर्वकाञ्चनी ।
वाचकाय प्रदातव्या धर्मो मे प्रीयतामिति ॥

पाद्मे विशेषः—

स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः ।
भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः ॥
पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः ।
पञ्चरत्नं विशेषेण दद्याद्विप्राय यत्नतः ॥
वासुदेवोऽपि सम्पूज्यो लक्ष्म्या युक्तः सदा प्रभुः ।

अर्घ्यमन्त्रः—

ॐ सत्यव्रताय.............भीष्मवर्मणे ।

इत्यादिः । अत्रैकादशीशब्देन प्रसिद्धव्रतादिनग्रहणम् । प्रकरणान्तरस्थलक्षणायां मानाभावात् । तिथिश्च युग्मवाक्यात् द्वादशीविद्धैव ग्राह्या "दिक्पञ्चदशभिस्तथा" इत्युक्तवेधस्यैव दूषकत्वम् । एवं च दशम्यविद्धैकादशीमारभ्य पञ्चदिनात्मकं व्रतं चतुर्दश्यविद्धपौर्णमास्यां चेत्समाप्यते तदा नैव सन्देहः । तिथिक्षयवशेन नैवं घटते चेद् विद्धायामप्यारम्भः । प्रधानव्रतानुरोधेनाङ्गभूततिथिगुणस्य परविद्धत्वादेरनादरणीयत्वात् । एवमविद्धैकादश्यामारभ्य परविद्धपौर्णमास्यां समापने यदि तिथिवृद्धिवशेन षड्दिनापत्तिस्तदा पूर्वपौर्णमास्यामपि समाप्तिः कार्या। उपक्रमसमाप्त्योरङ्गत्वाविशेषे "वेदो वा प्रायदर्शनात्" (जै० सू० ३-३-१-२) इत्यधिकरणोक्तासञ्जातविरोधन्यायेनोपक्रमधर्मस्यैव बलवत्त्वात् ।

**अथ व्रतप्रयोगः** । प्रातः स्नानसन्ध्यादि नित्यकृत्यं वि-

धाय पवित्रपाणिराचम्य ॐ विष्णुः ३ अद्येहेत्यादि श्रीकृष्ण-प्रीतयेऽमुककामनया वा भीष्मपञ्चकव्रतं करिष्ये इति प्रतिज्ञाय वारिपूर्णं ताम्रपात्रमादायोदङ्मुखः—

इदं व्रतं मया देव गृहीतं पुरतस्तव।
त्वत्प्रसादादविघ्नेन यातु सम्पूर्णतां विभो॥

इति पठित्वा तज्जलं देवाग्रे भूमौ क्षिपेत्। ततो मध्याह्ने नद्यां निर्झरे गर्ते वा पवित्रपाणिराचम्य ॐ विष्णुः ३ भी-ष्मपञ्चकव्रताङ्गत्वेन मध्याह्नस्नानमहं करिष्य इति सङ्कल्प्य गो-मयलेपनपूर्वकं स्नात्वा यवव्रीहितिलैः क्रमेण देवमनुष्यपितॄन्स-न्तर्प्य पुनः स्नात्वा विष्णुपूजासमाप्तिपर्यन्तं मौनव्रतं धारयित्वा धौतं वासः परिधाय तिलकं कृत्वा रक्तपुष्पादियुतमर्घ्यं भी-ष्माय वक्ष्यमाणमन्त्रेण पञ्चकृत्वो दद्यात्। तत्र मन्त्रः—

सत्यव्रताय शुचये गाङ्गेयाय महात्मने।
भीष्माय तद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे॥

इति यज्ञोपवीती दद्यात्। ततः प्राचीनावीती पितृतीर्थेन सतिलमुदकं--

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्॥
वैयाघ्रपद्यगोत्राय साङ्कृत्यप्रवराय च।
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे॥

इतिपञ्चकृत्वो दद्यात्। ततो भीष्मं लक्ष्मीसहितं वासुदेवं च पञ्चोपचारैर्जले सम्पूज्य पञ्चरत्नानि तन्निष्क्रयं वा ब्राह्म-णाय दद्यात्। ततो गृहमागत्य हस्तौ पादौ च प्रक्षाल्य शुचौ देशे स्वासने उपविश्य पवित्रपाणिराचम्य व्रतसमाप्तिपर्यन्तं प-ञ्चस्वहोरात्रेष्वनवच्छिन्नं यथा स्यात्तथा दीपं प्रज्वलय्य प्रतिष्ठाप्य दीपदेवतायै नम इति पञ्चोपचारैः सम्पूज्य प्राणायामं कृत्वा

कार्तिकस्नानाङ्गपूजाप्रकारेण पुरुषसूक्तादिना देवमावाहनाद्युपचारैः सम्पूजयेत् । उपचारे विशेषस्तु पञ्चामृतस्नानाद्यभिषेकान्ते कर्पूरोशीरकुङ्कुमनागकेशरमिश्रितेन सुगन्धिचन्दनेन विष्णुं विलेपयेत् । पुष्पपूजायां सुगन्धिचन्दनलिप्तैर्मनोहरपुष्पैः पूजनम् । अङ्गपूजायां हरये नम इति मन्त्रेण कमलैः पादपूजनम् । नैवेद्ये पायसनिवेदनम् । द्वादशाक्षरस्याष्टाक्षरस्य वा मन्त्रस्याष्टोत्तरशतकृत्वो जपः सहस्रनामादिभिः स्तवनम् । अन्ते प्रणिपत्य पूजाशेषं समापयेत् ।

ततः स्वगृह्योक्तविधिना अग्निप्रतिष्ठापनादि कृत्वा घृताभ्यक्तं तिलव्रीहियवद्रव्यम् ॐ विष्णवे नमः स्वाहेति षडक्षरेण मन्त्रेण अष्टोत्तरशतं हुत्वा सुवर्णं दद्यात् । ततो गन्धद्वारामिति मन्त्रेण गोमयमादाय त्रिः प्राश्योपवसेत् । अशक्तौ शाकं नीवारादिकं वा भक्षयेत् । सायंकाले सन्ध्यामुपास्य विष्णुं पञ्चोपचारैः सम्पूज्य द्वादशाक्षरमष्टाक्षरं वा मन्त्रमष्टोत्तरशतकृत्वः प्रजप्य श्रीविष्णुं प्रणम्य रात्रौ भूमिशायी भवेत् । इति प्रथमाह्निकम् ।

एवमेव पञ्चस्वपि दिनेषु कुर्यात् । तत्रायं विशेषः—द्वितीयदिनेऽङ्गपूजायां बिल्वपत्रैर्जानुदेशं पूजयेत् । गोमयस्थाने गोमूत्रं गायत्र्याऽऽदाय त्रिः प्राश्नीयात् । तृतीयदिनेऽङ्गपूजायां भृङ्गराजेन नाभिपूजनम् । ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ (य० सं०१२-११२) इति क्षीरमादाय त्रिः प्राश्नीयात् । चतुर्थदिनेऽङ्गपूजायां करवीरपुष्पैः स्कन्धपूजनम् । ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखा करत् प्रण आयूंषि तारिषत् ॥ (य०सं०२३-३२) इति मन्त्रेण दध्यादाय त्रिः प्राश्नीयात् । पञ्चमदिने पौर्णमास्यामङ्गपूजायां मालत्या शिरः-

पूजनम्। होमान्ते पापपुरुषप्रतिमादानम्। तत्र लौहीं पापप्रतिमां खड्गचक्रहस्तां कृष्णवस्त्रवेष्टितां प्रस्थतिलोपरिस्थां कृत्वा यमाय नम इत्यादिधर्मराजचतुर्दशनामभिः करवीरैः सम्पूज्य—

यदन्यजन्मनि कृतमेतज्जन्मनि वा पुनः।
तत्सर्वं प्रशमं यातु मत्पापं तव पूजनात्॥

इति पुष्पाञ्जलिं क्षिप्त्वा धर्मो मे प्रीयतामित्युक्त्वा वाचकायान्यस्मै वा दद्यात्। ततः श्रीकृष्णप्रतिमामुत्तराङ्गत्वेनार्घ्यदानान्तं सम्पूज्य ॐ विष्णुः ३ अद्येहेत्यादि कृतस्य भीष्मपञ्चकव्रतस्य साङ्गतासिद्धये इमां सुपूजितां सौवर्णीं श्रीकृष्णप्रतिमां तथा इमां सवत्सां ससुवर्णां गां च तथा दानप्रतिष्ठासिद्ध्यर्थमिदं सुवर्णमाचार्याय सम्प्रददे ॐ तत्सन्न मम इत्याचार्यादिभ्यो यथाशक्ति गोहिरण्यादि दत्त्वा भूयसीं च दत्त्वा ब्राह्मणान् सम्भोज्य नक्तं पञ्चगव्यप्राशनं कुर्यात्। तद्यथा—पूर्वोक्तैश्चतुर्भिर्मन्त्रैर्गोमयादिचतुष्कमादाय ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि॥ (य०सं०१-३१)। इति मन्त्रेण घृतमादाय प्रणवेनाभिमन्त्र्य प्रणवेनैव त्रिः प्राश्नीयात्। ततः शाकं मुन्यन्नं भुञ्जीत। पापप्रतिमाया अदानपक्षे ब्राह्मणभोजनादिना व्रतसाङ्गता। स्त्रीशूद्राणां च पञ्चगव्यदानं तत्प्राशनं चामन्त्रकम्। जपो होमश्च ब्राह्मणद्वारा सम्पाद्यौ। द्वितीयादिदिनेषु सुवर्णस्थाने वस्त्रं गोघृतं पायसं सश्वेतकृष्णवस्त्रं च देयानि। ताम्बूलाभ्यङ्गादिवर्जनसत्यवदनादिनियमाः सर्वेषां समाना एव।

इति भीष्मपञ्चकव्रतपूजनप्रयोगः।

अथ विष्णुलक्षवर्तिव्रतम्। इदमेव माणिक्यवर्तिव्रतमप्युच्यते। तद्विधिर्विष्णुरहस्ये—

युधिष्ठिर उवाच—

देवदेव जगन्नाथ संसारार्णवतारक

वद मे सर्वपापघ्नं व्रतं सर्वव्रतोत्तमम् ॥
यस्याचरणमात्रेण जनानां सर्वकामदम् ।
अस्ति किञ्चित्तव मतं यदि देव दयानिधे ॥

श्रीकृष्ण उवाच—

लक्षवर्तिव्रतं वच्मि सर्वकामफलप्रदम् ।
विष्णुवर्तीति विख्यातं शृणु राजन्समासतः ॥
शुभे तिथौ शुभे लग्ने ताराचन्द्रे च शोभने ।
सम्यग्विशोध्य कार्पासं तृणधूलिविवर्जितम् ॥
तस्य सूत्रं विधायाशु चतुरङ्गुलिका मता ।
पञ्चसूत्रयुता वर्तिर्विष्णुवर्तीति कथ्यते ॥
एवं कुर्याल्लक्षसंख्या गोघृतेन परिप्लुताः ।
उद्दीपयेच्च विष्ण्वग्रे कांस्यराजतपात्रके ॥
कालो हि कार्तिको माघो मासो वैशाख एव वा ।
सहस्रगुणितं ज्ञेयं व्रतमेतद्धि कार्तिके ॥
तस्मात्कोटिगुणं ज्ञेयं माघे मासि व्रतोत्तमम् ।
तस्मादनन्तगुणितं फलं वैशाखमासि वै ॥
एतन्मासत्रये कार्यं यस्मिन्मासे समाप्यते ।
तस्मान्मासद्वयात्पूर्वं प्रारब्धव्यं व्रतं त्विदम् ॥
अन्ते मासि प्रकुर्वीत समाप्तिं च विचक्षणः ।
सहस्रवर्तिभिः कुर्यादारार्तिं विष्णवेऽन्वहम् ॥
अथवा प्रत्यहं देयाः सहस्रद्वयसंमिताः ।

तथा विष्णुलक्ष्मीव्रतोद्यापनविधिस्तत्रैव—

एवं दिनानि पञ्चाशदन्ते चोद्यापनं चरेत् ॥
यस्मिन्मासे समाप्तिः स्यात्पूर्णिमायां च कारयेत् ।
उद्यापनं विधानेन व्रतसम्पूर्तिकारणम् ॥
अत उद्यापनविधिं शृणु राजन्समासतः ।

कृतेन येन सकलं फलं प्राप्नोति मानवः ॥
कार्तिक्यामथवा माघ्यां वैशाख्यां वा शुभे दिने ।
प्रातः स्नात्वा शुचिर्भूत्वा पञ्चगव्यं तु प्राशयेत् ॥
ततस्तिस्रो रुक्ममयीः प्रतिमाः कारयेद् व्रती ।
श्रिया च सहितं देवं मध्यगं पूजयेद्धरिम् ॥
तद्दक्षिणे चतुर्वक्त्रं सावित्र्या सहितं तथा ।
उत्तरे चोमया शम्भुं पुरतो गरुडं तथा ॥
अथवा प्रतिमां विष्णोः सौवर्णीं माषमात्रतः ।
कारयेद्गरुडारूढां लक्ष्म्या सह सुलक्षणाम् ॥
पुष्पमण्डपिकां कृत्वा वितानादिसुशोभिताम् ।
विधाय सर्वतोभद्रं पञ्चवर्णं यथाविधि ॥
कलशस्तत्र तु स्थाप्यः सपिधानः सवस्त्रकः ।
रौप्यस्ताम्रो मृन्मयो वा वस्त्रयुग्मेन वेष्टितः ॥
प्रतिमाः स्थापयेत्कुम्भे पूर्णपात्रेण संयुते ।
वस्त्रद्वयेन संवेष्ट्य पूजयेत्कलशोपरि ॥
आचार्यं वरयेत्पूर्वं पञ्चऋत्विक्समन्वितम् ।
अथवाऽऽचार्यब्रह्माणौ साग्निकानृत्विजो दश ॥
स्वस्ति संवाच्य सम्पूज्य गणेशं मातृकास्तथा ।
अनुष्ठायाभ्युदयिकं पुण्याहं वाचयेत्ततः ॥
अष्टकर्णिकया युक्तं वेद्यां पद्मं तु संलिखेत् ।
स्थापिते तत्र कलशे पूजयेत्प्रतिमाः शुभाः ॥
राजतं दीपपात्रं च स्वर्णवर्तिसमन्वितम् ।
स्थापयेत्तत्र शय्यादिच्छत्रचामरदर्पणान् ॥
सुवर्णप्रतिमायां तु अग्न्युत्तारणपूर्वकम् ।
प्राणप्रतिष्ठया स्थाप्य प्राणांस्तस्यां समाहितः ॥
आवाहनादिपुष्पान्तां पूजां कुर्याद्यथाविधि ।

सम्पूजयेत्ततोऽङ्गानि देवस्य नामभिः पृथक् ॥
कालो विष्णुस्तथा वह्नी रविर्दामोदरो हरिः ।
रुद्रः शेषो जगद्व्यापी तेजोरूपी निशाकरः ॥
निरञ्जनः फलाध्यक्षो विश्वरूपी जगत्प्रभुः ।
स्वप्रकाशः स्वयंज्योतिश्चतुर्व्यूहो जनाश्रयः ॥
परब्रह्मेति द्विदशनामभिः पूजयेद्धरिम् ।
शिरो ललाटकं नेत्रे कर्णौ नासा मुखं तथा ॥
कण्ठं स्कन्धौ तथा बाहू स्तनौ वक्षस्तथोदरम् ।
नाभिं कटिं च जघनमूरू च जानुनी तथा ॥
गुल्फौ पादौ तदग्रे च क्रमशोऽङ्गानि पूजयेत् ।
धूपदीपौ तथा दत्त्वा नैवेद्यं च निवेदयेत् ॥
पूजयेच्च यथाशक्ति ब्रह्माद्या देवताः शुभाः ।
उपोष्य जागरं कुर्याच्छृणुयाद्वैष्णवीं कथाम् ॥
प्रभाते विमले स्नात्वा पुनः सम्पूज्य वै विभुम् ।
सतिलैश्च यवैः कुर्यादग्नेनयऋचा द्विजः ॥
वर्षा दशांशतः कुर्यात्तर्पणं तु विचक्षणः ।
तर्पणस्य दशांशेन होमं कुर्याद्विधानतः ॥
तर्पणोक्तेन मन्त्रेण साज्येन पायसेन च ।
पालाशीभिः समिद्भिश्च होमयेच्च ततः परम् ॥
अथवा विष्णुगायत्र्या होमस्यायं विधिः स्मृतः ।
तर्पणं दशसाहस्रं सहस्रं होममाचरेत् ॥
मार्जनं सार्धद्विशतं क्रम एष विवक्षितः ।
सौवर्णीं वर्तिकां कृत्वा पात्रे रजतसम्भवे ॥
कार्पासवर्तिसंयुक्तां तया नीराजयेद्धरिम् ।
आचार्यं पूजयित्वा तु दद्यात्तां मन्त्रतो व्रती ॥
रौप्यं विष्णुमयं दीपं गोघृतेन समन्वितम् ।

सुवर्णवर्तिसंयुक्तं विष्णोः प्रीत्यै ददामि ते ॥
त्रिंशत्पलं कांस्यपात्रं गोघृतेन प्रपूरितम् ।
सुवर्णसहितं दाम्रि सर्वशान्तिप्रदो भव ॥
अथवा तद्दशपलं तथा घृतसमन्वितम् ।
अथवा तु यथाशक्ति दद्यादावश्यकं त्विदम् ॥
घृताभावेऽपि कांस्यस्य पात्रं गोघृतपूरितम् ।
सुवर्णसहितं विष्णुदैवत्यं च सुपूजितम् ॥
रजोदोषाद्विमुक्ता स्यात्पौर्णमास्यां ददाति या ॥
भक्त्या च जगदात्मानमथ देवं क्षमापयत् ।
देवदेव जगन्नाथ भक्तानां कार्यकारक ।
त्वत्प्रसादमहं याचे शीघ्रं कार्यप्रदो भव ॥
ततो विसर्जयेद्देवं प्रणिपत्य पुनः पुनः ।
आचार्यं पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा ॥
गां प्रदद्यात्सवत्सां च सालङ्कारां गुणान्विताम् ।
घटं सप्रतिमं दद्यान्मण्डलं च निवेदयेत् ॥
शय्यादिकं निवेद्याथ ब्राह्मणान् पञ्चविंशतिः ।
भोजयेत्परया भक्त्या स्वयं भुञ्जीत वाग्यता ॥
कुरु राजन्व्रतमिदं सर्वपापप्रणाशनम् ।
भुक्त्वा यथेप्सितान् कामानन्ते सायुज्यमाप्नुयात् ॥
पार्वत्या च पुरा पृष्टं शङ्कराय महात्मने ।
तेनेदं कथितं देव्यै विष्णुवर्तिव्रतं शुभम् ॥
तया कृता विष्णुवार्तिर्लक्षसंख्या शुभावहा ।
उद्दीपिता तथा भक्त्या सन्तुष्येऽहं व्रतेन च ॥
दत्तं कैलासभवनं शङ्करेण च धारिता ।
कर्त्तव्यं तु प्रयत्नेन जनेन शुभमिच्छता ॥
येन चोद्दीपितो विष्णुः सर्वसौभाग्यदायकः ।

स भवेत्पापनिर्मुक्तो विष्णुलोके महीयते ॥ इति ।

**अथ व्रतप्रयोगः** । व्रतकर्त्री यथाविधि लक्षवर्तिका विधाय गरुडस्थां सौवर्णीं श्रीलक्ष्मीनारायणप्रतिमां यथाशक्ति निर्माय वर्तिनिमज्जनाय गोघृतं वर्तिस्थापनाय रौप्यं कांस्यं वा नवं पात्रं पञ्चामृतादिषोडशोपचारसामग्रीं च सम्पाद्य व्रतदिने प्रातरावश्यकान्ते पञ्चगव्यप्राशनपूर्वकं नद्यादौ स्नात्वा कौशेयादि परिधाय पूजास्थानमागत्य नित्यकृत्यान्ते अर्घ्यादि सम्पाद्य व्रतग्रहणसङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देवी (सभर्तृका)अहं मम जन्मप्रभृतिकायवाङ्मनोजनितदोषनिरसनाय ज्ञाताज्ञातरजःसम्पर्कादिसकलपापक्षयार्थं श्रीलक्ष्मीनारायणदेवप्रीतिद्वारा सकलसौभाग्यसन्ततिसम्पत्समृद्धये माघीं पौर्णमासीमारभ्य वैशाखीपर्यन्तं त्रैमासिकं विष्णुवर्तिलक्षव्रतं करिष्ये । अथवा पञ्चाशद्दिनात्मकं, आश्वयुजीमारभ्य कार्तिकीपर्यन्तं, पौषीमारभ्य माघीपर्यन्तं, चैत्रीमारभ्य वैशाखीपर्यन्तं मासिकं वा एकदिवसात्मकं वेति यथायथमूह्यम् । ततो जलपूर्णताम्रपात्रं करयोः कृत्वा—

लक्षवर्तिव्रतं देव करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाद्रमापते ॥
इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
तत्सर्वं सिद्धिमायातु प्रसादात्तव केशव ॥

इति पठित्वा तज्जलं भूमौ क्षिपेत् । दीपं प्रज्वलय्य प्रतिष्ठाप्य सम्पूज्य प्रतिमाया अग्न्युत्तारणं कृत्वा पूजास्थले विष्णुपीठे संस्थाप्य पूजयेत् । स्वस्तिवाचनपुरस्सरं गणेशं सम्पूज्य विशेषार्घस्थापनान्ते पूजासङ्कल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देवी (सभर्तृका) अहं कृतसङ्कल्पसिद्धये आरब्धलक्षवर्तिव्रताङ्गत्वेन सुवर्णप्रतिमायां श्रीलक्ष्मीनारा-

यणदेवस्य षोडशोपचारपूर्वकममुकसंख्याकवर्तिभिरार्तिक्यं करिष्ये इति । ततो गन्धाक्षतपुष्पैः पूर्वे-नन्दाय नमः, सुनन्दाय नमः । दक्षिणे-चण्डाय० प्रचण्डाय० । पश्चिमे-बलाय० प्रबलाय० । उत्तरे—भद्राय० सुभद्राय० । द्वारदेवताभ्यो० द्वारपालेभ्यो० इति द्वारपूजां विधाय अष्टपादे पीठे पादाधस्तात् पूर्वे-धर्माय० । दक्षिणे-ज्ञानाय० । पश्चिमे-वैराग्याय० उत्तरे-ऐश्वर्याय० । आग्नेये-अधर्माय० । नैर्ऋत्ये-अज्ञानाय० । वायव्ये-अवैराग्याय० । ईशाने-अनैश्वर्याय० । पादोपरिष्टात् पूर्वादिक्रमेण विमलायै नमः उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्व्यै० सत्यायै० अनुग्रहायै० । पीठमध्ये-ॐ नमो भगवते विष्णवे सर्वभुतात्मने वासुदेवाय योगपीठात्मने नमः। इति पीठपूजां विधाय तत्र प्रतिमां संस्थाप्य तस्यां प्रतिष्ठां प्राणप्रतिष्ठां च विधाय शङ्खं घण्टां सम्पूज्य पुष्पं गृहीत्वा शान्ताकारं भुजगशयनमित्यादि पठित्वा सपरिवाराय श्रीलक्ष्मीनारायणाय नमः ध्यानं समर्पयामि । आवाहनं—

देवेश भक्तिसुलभ सर्वावरणसंयुत ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥

आसनम्—

कार्तस्वरमयं दिव्यं नानागुणसमन्वितम् ।
अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् ॥

पाद्यम्—

यद्भक्तिलेशसंपर्कात्परमानन्दसंभवः ।
तस्मै ते चरणाब्जाय पाद्यं देवाय कल्पये ॥

अर्घ्यम्—

तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।

तापत्रयविनिर्मुक्त्यै तवाऽर्घ्यं कल्पयाम्यहम् ॥

आचमनीयम्—

कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥

स्नानम्—

गङ्गा च यमुना चैव नर्मदा च सरस्वती ।
कृष्णा च गौतमी वेणी क्षिप्रा सिन्धुस्तथैव च ॥
तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम् ।
तोयमेतत्सुखस्पर्शं स्नानीयं प्रतिगृह्यताम् ॥

पञ्चामृतस्नानम्—

पयो दधि घृतं चैव मधुशर्करयाऽन्वितम् ।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम् ॥

शुद्धोदकगन्धोदके—

परमानन्दबोधश्रीनिमग्ननिजमूर्तये ।
साङ्गोपाङ्गमिदं स्नानं कल्पयामि प्रसीद मे ॥

मूलेन स्नानाङ्गमाचमनीयम्० । वस्त्रम्—

तन्तुसन्तानसंसक्तं कलाकौशेयकल्पितम् ।
पीतवस्त्रयुगं देव कृपया परिगृह्यताम् ॥

मूलेन वस्त्राङ्गमाचमनीयम्० । यज्ञोपवीतम्—

यस्य शक्तित्रयेणेदं सम्प्रोतं सचराचरम् ।
यज्ञरूपाय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥

मूलेन यज्ञोपवीताङ्गमाचमनम्० । गन्धः—

मलयोद्भवसौरभ्यमनाघ्रातं सुनिर्मलम् ।
कुङ्कुमागरुकस्तुरीकर्पूरादिसमन्वितम् ॥

यवाक्षताः—

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः ।

मया निवेदिता भक्त्या तान् गृहाण सुरेश्वर ॥

पुष्पाणि—

सुगन्धीनि सुपुष्पाणि देशकालोद्भवानि च।
मयाऽऽनीतानि पूजार्थं प्रीत्या स्वीकुरु तानि मे ॥

तुलसी—

तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम्।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ॥

अङ्गपूजा—कालाय नमः शिरः पूजयामि। विष्णवे नमः ललाटं०। वह्नये० नेत्रे०। रवये० कर्णौ०। दामोदराय० नासिकां०। हरये० मुखं०। रुद्राय० कण्ठं०। शेषाय० स्कन्धौ०। जगद्व्यापिने० बाहू०। तेजोरूपिणे० स्तनौ०। निशाकराय० वक्षः०। निरञ्जनाय० उदरं०। फलाध्यक्षाय० नाभिं०। विश्वरूपिणे० कटिं०। जगत्प्रभवे० जघनं०। स्वप्रकाशाय० ऊरू०। स्वयंज्योतिषे० जानुनी०। चतुर्व्यूहाय० गुल्फौ०। जनाश्रयाय० पादौ०। परब्रह्मणे० पादाग्रे पूजयामि। धूपं सम्प्रोक्ष्य सम्पूज्य—

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

दीपं सम्प्रोक्ष्य सम्पूज्य—

आज्यं सद्वर्त्तिसंयुक्तं वह्निना योजितं मया।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥

नैवेद्यं सम्प्रोक्ष्य सम्पूज्य—

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्।
मया निवेदितं देव नैवेद्यं प्रतिगृह्यताम् ॥
सत्पात्रसिद्धं सुहविर्विविधानन्दलक्षणम्।

निवेदयामि भवते सानुगाय जुषाण तत् ॥

घ्राणादिमुद्राः प्रदर्श्य मध्ये पानीयम्—

मया निवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ।
परमानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥

भुञ्जानं देवं ध्यायेत्—

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समेतो
लक्ष्म्या शिञ्जद्वलयकरया सादरं वीज्यमानः ।
नर्मक्रीडाप्रहसनपरो हासयन् पङ्क्तिभोक्तॄन्
भुङ्क्ते पात्रे कनकरचिते षड्रसांश्चिद्विलासः ॥

इति ध्यात्वा यथाशक्ति मूलमन्त्रजपं विधाय गुह्यातिगुह्य-गोप्तेत्यनेन देवस्य दक्षिणाधोहस्ते जलं समर्प्य नैवेद्यशेषं—

विष्वक्सेनादयो भक्ता ब्रह्माद्या देवतास्तथा ।
श्रीमद्विष्णुप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥

इति वैष्णवेभ्यो दत्त्वा अमृतापिधानमसि स्वाहेति नैवेद्यान्तमाचमनीयं समर्प्य करोद्वर्तनार्थे गन्धं दद्यात् । इदं फलमिति फलानि, पूगीफलमित्यायुक्तमिति ताम्बूलम्, हिरण्यगर्भेति दक्षिणां च समर्पयेत् ।

ततः प्रार्थना—

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं सर्वमावरणार्चनम् ॥

नीराजनम्—प्रातः पूजायां पञ्चशतवर्तिकाः मध्याह्नपूजायां पञ्चशतवर्तिकाः अथवा एककाले सहस्रवर्तिकाः गोघृतालोडिता राजतकांस्यान्यतरपात्रे संस्थाप्य प्रज्वलय्य सम्प्रोक्ष्य सम्पूज्य नीराजयेत् । मन्त्राः—अन्तस्तेजो० चन्द्रादित्यौ च धरणी० अग्निर्ज्योतिर्ज्योतिः० अग्निनयमित्यादिषट्पदी च । ततो विशेषार्घ्यं शङ्खे गन्धाक्षतफलपुष्पतुलसीदलसहितमादाय

जानुभ्यामवनीं गत्वा पञ्चवारं दद्यात् । मन्त्राः—

नारायण जगन्नाथ लक्ष्मीकान्त दयानिधे ।
गृहाणार्घ्यं मया दत्तं व्रतसम्पूर्तिहेतवे ॥ इति ।

शेषं शङ्खोदकं देवोपरि भ्रामयित्वा तत्प्रोक्षणेनात्मानं पावयेत् । नमस्कारः—

नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥

पुष्पाञ्जलिः—

नमस्ते पुण्डरीकाक्ष वासुदेव नमोऽस्तु ते।
नमस्ते कमलाकान्त गृहाण कुसुमाञ्जलिम् ॥

क्षमापनम्--

अपराधो भवत्येव सेवकस्य पदे पदे ।
कः परं क्षमता लोके केवलं स्वामिनं विना ॥

दक्षिणाद्रव्यं सम्प्रोक्ष्य सम्पूज्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं कृतसङ्कल्पसिद्धये गृहीतविष्णुलक्षवर्तिव्रताङ्गत्वेन कृतायाः श्रीविष्णुपूजायाः साङ्गफलप्राप्तये इमां दक्षिणां ब्राह्मणाय दास्य इति सङ्कल्प्य ब्राह्मणं गन्धादिभिः सम्पूज्य दद्यात् । ततोऽर्घ्यपात्रमुद्धृत्य मन्त्रहीनमिति देवाग्रतो दत्त्वा यस्य स्मृत्येति कायेन वाचेति च कर्मेश्वरार्पणं कृत्वा आचामेत् । ततो ब्राह्मणं सम्भोज्य स्वयमपि हविष्याशनैकभक्तादि कुर्यात् । सायं शुचिर्भूत्वा देवस्य पञ्चोपचारपूजनं विधाय ब्रह्मचर्यभूशयनादिनियमेन रात्रिं निनयेत् । इत्याह्निककृत्यम् ।

एवं दैनन्दिनक्रमेण यथासङ्कल्पं मासिकत्रैमासिकादिरूपेण व्रतमनुष्ठायान्त्ये पूर्णिमायामुद्यापनमाचरेत् । तत्र पदार्थसम्पादनम्—श्रीविष्णुप्रतिमा पूर्वसिद्धैव । सावित्रीसहितस्य ब्रह्मणः

पार्वतीसहितस्य शम्भोश्चेति द्वे प्रतिमे । तत्स्थापनाय मुखाच्छादनपात्रसहितं कलशद्वयम् , मण्डपनिर्माणोपयोगि कदलीस्तम्भादि, सर्वतोभद्रार्थं पञ्चवर्णादिकं, गणेशस्थापनपूजनादिकलशस्थापनान्तपूर्वाङ्गपञ्चकसामग्री, आचार्यब्रह्मणोः पञ्चर्त्विजां दशर्त्विजां वा वरणसामग्री, नानाविधनैवेद्यादिफलादिगन्धवस्त्रादिपूजनसामग्री, तर्पणार्थे तिलयवगोदुग्धानि, होमार्थे पालाश्यः समिधो गव्यमाज्यं पायसं च तिलाज्यं वा, सुवर्णवर्तिकोपेतं राजतं दीपपात्रम् , त्रिंशत्पलं दशपलं यथासम्भवं वा ससुवर्णं गवाज्यपूरितं कांस्यपात्रं, वायनदानाय यथोक्तसामग्रीयुतं नूतनं वंशशूर्पम् , सवत्सा गौः, कर्मोपयोगिनी दक्षिणा, पञ्चविंशतिब्राह्मणभोजनसामग्री ।

अथ प्रयोगः—चतुर्दश्यां प्रातरावश्यकान्ते पञ्चगव्यप्राशनपूर्वकं विधिना स्नानं नद्यादौ विधाय कौशेयादि परिधाय गृहानागत्य नित्यकृत्यान्ते गृहैशान्यां सुभूषिते पूजास्थाने यथाविधि मण्डपं, तत्र सर्वतोभद्रं, तत्रैव वेद्यामष्टकर्णिकं कमलं विलिख्य तस्मिन्कलशं संस्थाप्य सर्वां सामग्रीं यथास्थानमाधाय कर्माङ्गदीपं प्रज्वलय्य प्रतिष्ठाप्य सम्पूज्य स्वस्तिवाचनपुरःसरं गणेशं पूजयेत् । तत्र ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं करिष्यमाणविष्णुवर्तिलक्षव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्ध्ये भगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये इति प्रतिज्ञाय यथाविधि गणेशं सम्पूज्य अर्घं संस्थाप्य पवित्रपाणिः ॐ विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं ममात्मनो जन्मप्रभृति कायवाङ्मनोजनितदोषनिरासपूर्वकज्ञाताज्ञातरजःसंपर्कादिजनितसकलपापक्षयार्थं श्रीलक्ष्मीनारायणदेवताप्रीतिद्वारा सकलसौभाग्यसन्ततिसम्पत्तिसमृद्धये एतावत्कालपर्यन्तमाचरितस्य विष्णुवर्तिलक्षव्रतस्य साद्गुण्यार्थं साङ्गफलप्राप्तये च विष्णु-

रहस्योक्तप्रकारेणोद्यापनं करिष्ये। तत्र सकलमङ्गलाभिवृद्धये गणपतिसहितगौर्यादिषोडशमातॄणां पूजनमाभ्युदयिकपुण्याहवाचनादि करिष्ये इति प्रतिज्ञाय मातृपूजनाभ्युदयिकपुण्याहवाचनादि विधाय आचार्यादीन् सम्पूज्य वरणसामग्रीं गृहीत्वा अद्येहेत्यादि अस्मिन्नुद्यापनकर्मणि आचार्यकर्म कर्तुम् एभिर्गन्धाक्षतपूगीफलवासोद्रव्यादिभिराचार्यत्वेन त्वामहं वृणे, वृतोऽस्मीति प्रत्युक्ते 'आचार्यस्तु'इत्यादिना प्रार्थयेत्। एवं ब्रह्मादीन् वृणुयात्। ततो ब्रह्मशम्भुप्रतिमयोरग्न्युत्तारणं कृत्वा मण्डपं प्रतिष्ठाप्य तत्र कलशस्थापनविधिना कलशं संस्थाप्य तदुपरि पात्रेऽष्टदलमध्ये लक्ष्मीनारायणप्रतिमां दक्षिणतः सावित्रीसहितां ब्रह्मप्रतिमामुत्तरत उमासहितशिवप्रतिमां च संस्थाप्य वस्त्रयुग्मेन संवेष्ट्य सर्वतोभद्रे ब्रह्मादिसप्तपञ्चाशन्मण्डलदेवता आवाह्य पूजासम्भारान् यथास्थानं संस्थाप्य सुमुखश्चेत्यादिविशेषार्घस्थापनान्ते ॐ विष्णुः ३ अद्येहेत्यादि अस्मिन्नुद्यापनकर्मणि लक्ष्मीसहितं विष्णुं सावित्रीयुतं ब्रह्माणमुमासहितं शिवं मण्डलदेवताश्च षोडशोपचारैः पूजयिष्ये। तत्पूर्वाङ्गत्वेन मण्डपे द्वारपूजां द्वारपालपूजां च करिष्ये इति प्रतिज्ञाय द्वारपूजनादि विष्णुध्यानान्तं पूर्वप्रकारेण कृत्वा—

विष्णोर्नाभ्यब्जसम्भूतं स्रष्टारं रक्तवर्णकम्।
सावित्रीसेवितं ध्यायेत्सर्वलोकपितामहम्॥

इति ब्रह्माणं कर्पूरगौरमिति शिवं च ध्यायेत्। सम्मुखाः सुमुखाः सौम्या० इति ध्यात्वा सपरिवारायेत्यादि आवाहनपूर्वकं पूर्ववत् नैवेद्यान्तोपचारपूजनं कृत्वा क्षमापनान्तं पूर्ववत्पूजनं समाप्य मध्यान्हसायाह्नयोः पुनः स्नानपूजनादि विधाय उपोषणजागरणसत्कथाश्रवणादिभिर्निशां निनयेत्। ततः प्रभाते पौर्णमास्यामावश्यकान्ते प्रातःस्नानादि विधाय

पूर्वोक्तेन विधानेन देवं पुनः सम्पूजयेत् ।

आचार्यः सार्त्विक् मण्डपपश्चिमभागे स्थण्डिलं निर्माय तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य तदीशाने कलशे नवग्रहानावाह्य यवकुशतिलपुष्पतुलसीदलादितर्पणसामग्रीमादाय जलाशये गृहे वा तर्पणं कुर्यात् । ॐ विष्णुः३ अद्येहेत्यादि अमुकदेव्या यजमानाया अस्मिन्विष्णुवर्तिलक्षव्रतोद्यापनकर्मणि सर्वशान्तिप्राप्तये श्रीविष्णोः प्रीतये वर्तिदशांशायुतसङ्ख्याकाञ्जलिभिस्तर्पणं करिष्ये इति प्रतिज्ञाय "ॐ अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ( य. सं. ४०-१६ ) ॐ विष्णुस्तृप्यताम्" इति मन्त्रेण यवतिलयुतजलेन पूर्वाभिमुखो देवतीर्थेन तर्पयेत् । प्रत्यञ्जलि मन्त्रावृत्तिः । ततोऽग्निसमीपमागत्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कृत्वा द्रव्यत्यागं कारयेत्—ॐ विष्णुः३ अद्येहेत्यादि अमुकगोत्रा अमुकदेवी अहं विष्णुवर्तिलक्षव्रतोद्यापनहोमकर्मणा यक्ष्ये । तत्राघाराज्यभागदेवताभ्य इदमाज्यं प्रधानदेवतायै तर्पणदशांशैकसहस्राहुतिहोमायेदं चर्वाज्यं तिलाज्यं वा मण्डलदेवताभ्यो भूरादिभ्यश्चेदमाज्यं तथा चर्वाज्यं तिलाज्यं वा स्विष्टकृते च मया परित्यक्तं यथादैवतमस्तु न मम ।

ततो ब्रह्मणान्वारब्ध आचार्य आघारावाज्यभागौ च हुत्वा ॐ इदं विष्णुरिति स्वाहान्तेन मन्त्रेण प्रधानं जुहुयात् । ब्रह्मादिमण्डलदेवता हुत्वा भूरादिपूर्णपात्रदानपूर्णाहुत्यन्तं कुर्यात् । ततश्चन्दनपुष्पतुलस्यधिवासितैर्जलैः सार्धद्विशतवारं कुशाग्रैः ॐ आपोहिष्ठेत्यादिमन्त्रेण देवमभिषिञ्चेत् । पुनः सपरिवारं देवमुत्तराङ्गत्वेन सम्पूज्य रजतदीपपात्रस्थां सौवर्णीं वर्तिकां कार्पासवर्तियुक्तां गोघृताक्तां प्रज्वलय्य सम्पूज्य देवं नीराज्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकदेव्यहं लक्षवर्ति-

व्रतसम्पूर्तिकारणीभूतं सुवर्णवर्त्युपेतमिमं रौप्यदीपं श्रीविष्णोः प्रीतये दास्य इति प्रतिज्ञाय आचार्यं सम्पूज्य सदक्षिणं दीपं दद्यात् । दानमन्त्रः—

रौप्यं विष्णुमयं दीपं गोघृतेन समन्वितम् ।
सुवर्णवर्तिसंयुक्तं विष्णोः प्रीत्यै ददामि ते ॥

कांस्यपात्रदानम्—ससुवर्णमाज्यपूरितं कांस्यपात्रं सम्पूज्य सम्प्रोक्ष्य ॐ विष्णुः३ अद्येहेत्यादि अमुकदेव्यहं ज्ञाताज्ञातरजोदोषादिदोषनिवृत्तिद्वारा श्रीविष्णोः प्रीतये लक्षवार्तिव्रतसम्पत्तिहेतु विष्णुदैवत्यं ससुवर्णमाज्यपूरितमिदं कांस्यपात्रमाचार्याय दास्ये इति प्रतिज्ञाय संपूज्य दद्यात् । दानमन्त्रः—

कांस्यपात्रमिदं देव गोघृतेन प्रपूरितम् ।
सुवर्णसहितं दद्मि सर्वशान्तिप्रदो भव ॥

ततः प्रार्थना—

देवदेव जगन्नाथ भक्तानां कार्यकारक ।
त्वत्प्रसादमहं याचे शीघ्रं कार्यप्रदो भव ॥
यद्भक्त्या देवदेवेश मया व्रतमिदं कृतम् ।
न्यूनं वाथ क्रियाहीनं परिपूर्णं तदस्तु मे ॥

इति प्रार्थ्य पुनः पुनः प्रणम्य विसर्जयेत्—मन्त्रहीनमित्यादि यान्तुदेवगणा इत्यादिभिः । शङ्खोदकं देवोपरि भ्रामयेत् आत्मानं च तज्जलेन पावयेत् । प्रतिमादानम्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकदेव्यहं विष्णुवर्तिलक्षव्रतोद्यापनकर्मणः साद्गुण्यार्थं साङ्गफलप्राप्तये श्रीविष्णोः प्रीतये सुपूजिताः सौवर्णीरिमाः ब्रह्मविष्णुमहेश्वरप्रतिमाः सोपस्करा आचार्याय दातुमहमुत्सृजे । दानमन्त्रः—

विष्णो प्रसीद देवेश ब्रह्मेश्वरसमन्वित ।
युष्मद्रूपप्रदानेन मम सन्तु मनोरथाः ॥ इति ।

ततो यथाविधि गोदानशय्यादानभूपसीदानघृतच्छाया-

भिषेकाशीर्ग्रहणरक्षाबन्धनादि विधाय आचार्यादीन् पञ्चविंशति-ब्राह्मणान् सम्भोज्य दक्षिणां दत्त्वा समाप्य तदनुज्ञया बन्धुजनैः सह स्वयं भुञ्जीत ।

इति विष्णुवर्तिलक्षव्रतोद्यापनप्रयोगः ।

अथ बिल्वलक्षवर्तिव्रतविधिर्जैमिनीये आरण्यके--

द्रौपद्युवाच—

बिल्ववर्तिविधिं ब्रूहि दुर्वासः सर्वदर्शन ।
कस्मिन्काले समारम्भः कस्मिंश्चैव समापनम् ॥

दुर्वासा उवाच—

राजपुत्रि प्रवक्ष्यामि विधानं सर्वकामदम् ।
श्रद्धावित्तं यदा स्याद्वै तदैव प्रारभेद्व्रतम् ॥
कार्पासस्य स्वहस्तेन तन्तुं निष्कास्य यत्नतः ।
स्वकीयैर्वापि विप्राद्यैरङ्गुलीत्रयसंमिता ॥
त्रिवृता शोभना चैव बिल्ववर्तिरुदाहृता ।
तां तु संवर्तयेद्वर्तिं स्वप्रदेशिनिसंमिताम् ॥
एवं लक्षमिताः कार्याः शक्तौ कोटिमिता अपि ।
घृते निमज्य वा तैले स्थापयेत्ताम्रपात्रके ॥
स्थापयेन्मृन्मये वाऽपि प्रत्यहं संख्ययाऽन्विताः ।
श्रावणे माधवे माघे कार्तिके तु विशेषतः ॥
दिने दिने त्रिसाहस्रमर्पयेद्बिल्ववर्तिकाः ।
त्र्यम्बकेश्वरमुद्दिश्य देवागारे विशेषतः ॥
गङ्गातीरेऽथवा गोष्ठे यद्वा ब्राह्मणसन्निधौ ।
प्रज्वालयेत्तु पूजान्ते शिवलोकजिगीषया ॥
नारी वा पुरुषो वाऽपि भक्तियुक्तेन चेतसा ।
एकस्मिन्नेव दिवसे ज्वालयेद्यदि सम्भृतिः ॥

तथा बिल्वलक्षवर्तिव्रतोद्यापनविधिस्तत्रैव—

एवं सम्पाद्य वैशाख्यां कार्तिक्यां वा विशेषतः ।
माघ्यां वाऽप्यथवा यस्यां कस्यांचित्पूर्णिमातिथौ ॥
प्रातः स्नात्वा शुचिर्भूत्वा कुर्यादुद्यापनं बुधः ।
गणेशं पूजयेत्स्वस्ति वाच्य नान्दीं च कारयेत् ॥
आचार्यं वरयेत्पश्चात्सर्वलक्षणसंयुताम् ।
देवागारेऽथवा गोष्ठे शुद्धे वा स्वीयमन्दिरे ॥
पुष्पमण्डपिकां कृत्वा पट्टकूलादिवेष्टिताम् ।
तन्मध्ये लिङ्गतोभद्रं रचयेल्लक्षणान्वितम् ॥
ततो वै रुद्रकोणे तु रचयेद्वेदिकां व्रती ।
वस्त्रेणाच्छादितं कृत्वा रचयेत्तत्र तण्डुलैः ॥
अष्टपत्रान्वितं पद्मं कर्णिकाभिः समान्वितम् ।
कलशं स्थापयेत्तत्र अव्रणं सजलं तथा ॥
ताम्रं वा मृन्मयं पात्रं तस्योपरि न्यसेत्सुधीः ।
तस्योपरि न्यसेद्देवमुमया सहितं शिवम् ॥
सुवर्णनिर्मितं कृत्वा वृषभेण समन्वितम् ।
रजतस्य दीपपात्रं कृत्वा शक्त्या यथाविधि ॥
सुवर्णवर्तिकां कृत्वा तन्मध्ये स्थापयेत्सुधीः ।
कृत्वा तु लिङ्गतोभद्रे ब्रह्माद्यावाहनं व्रती ॥
ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः ।
परमान्नं च नैवेद्यं भक्त्या देवाय दापयेत् ॥
उपोष्य जागरं कुर्याद्रात्रौ तत्कथया मुदा ।
ततः प्रभाते विमले जले स्नात्वा प्रसन्नधीः ॥
वर्तिसंख्यादशांशेन तर्पणं कारयेद्व्रती ।
तर्पणस्य दशांशेन होमं कुर्यात्प्रयत्नतः ॥
तिलाज्यचरुभिर्बिल्वै रुद्रमन्त्रेण सादरम् ।

अष्टोत्तरसहस्रं वा कुर्याच्छक्त्यनुसारतः ॥
नमः शम्भव इत्येव मन्त्रो रुद्राक्षरैर्मितः ।
आचार्याय प्रदातव्या गौः सवत्सा पयस्विनी ॥
विसर्जयेत्ततो देवं ब्रह्मादिसहितं पुनः ।
ब्रह्मादिमण्डलं मूर्तिं दद्यात्सोपस्करां तथा ॥
यजमानमथाचार्यस्त्वभिषिञ्चेद् गृहान्वितम् ।
दद्याच्च भूयसीं कर्म समाप्याथ विचक्षणः ॥
होमस्य तु दशांशेन ब्राह्मणान्भोजयेत्ततः ।
दत्त्वा च दक्षिणां तेभ्यो गृह्णीयादाशिषः शुभाः ॥
वर्धमानं रौप्यमयं हेमवर्तिसमन्वितम् ।

वर्धमानः=शरावः ।

अथवा कांस्यपात्रं च घृतेनापूरितं शुभम् ॥
ब्राह्मणाय प्रदातव्यं दक्षिणासहितं तथा ।
ततो भुञ्जीत तच्छेषं शिष्टैरिष्टैश्च बन्धुभिः ॥
एवं द्रुपदराजेन्द्रपुत्रि सत्यव्रतेऽनघे ।
लक्षबिल्ववर्तिविधिस्तवाऽग्रे कथितो मया ॥
यं कृत्वा भक्तिभावेन नारी वा पुरुषोऽपि वा ।
दारिद्र्यतमसः सद्यो मुच्यते नात्र संशयः ॥
पुत्रपौत्रप्रपौत्रैश्च सुखं सम्प्राप्य भूतले ।
अन्ते दिव्यविमानेन लभते ज्वलितं पदम् ॥
नैषधाधिपतेर्भार्या भर्तृदर्शनलालसा ।
कृत्वा व्रतमिदं प्राप राज्यं भर्तृसुतान्वितम् ॥

इत्यादि ।

अथ प्रयोगविधिः—व्रती यथोक्तविधिना लक्षसंख्याका बिल्ववर्ती रुद्रवर्तीर्वा निर्माय यथाशक्ति सौवर्णीमुमामहेश्वरप्रतिमां रजतवृषभस्थितां निर्माय गोघृतं वर्तिस्थापनाय सौवर्णराजतताम्रमृन्मयान्यतमं पात्रं सम्पाद्य व्रतग्रहणदिने प्रातरा-

वश्यककृत्यान्ते नद्यादौ स्नानं विधाय कौशेयादि परिधाय गृहमागत्य नित्यकृत्यान्ते विष्णुः ३ अद्येहेत्यादि अमुकी देवी ( समर्तृका ) जन्मतः प्रभृति कायवाङ्मनःसञ्चितदोषनिरसनद्वारा सकलसौभाग्यसम्पत्समृद्धिपूर्वकश्रीउमामहेश्वरप्रीतये माघीपौर्णमासीमारभ्य वैशाखीपर्यन्तं त्रैमासिकम् आषाढीमारभ्य श्रावणीपर्यन्तमाश्वयुजीमारभ्य कार्तिकीपर्यन्तमैकमासिकं वा बिल्वलक्षवर्तिव्रतं करिष्ये इति प्रतिज्ञाय जलपूर्णताम्रपात्रं करयोः कृत्वा—

लक्षवर्तिव्रतं देव करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादान्महेश्वर ॥

इति जलं भूमौ प्रक्षिपेत् । ततो दीपं प्रज्वलय्य प्रतिष्ठाप्य सम्पूज्य प्रतिमाया अग्न्युत्तारणं विधाय सुरचितपूजास्थले रुद्रपीठे निधाय स्वस्तिवाचनगणेशपूजनार्घस्थापनान्ते विष्णुः ३ अद्येहेत्यादि अमुकी देव्यहं कृतसङ्कल्पासिद्धये बिल्वलक्षवर्तिव्रताङ्गत्वेन सुवर्णप्रतिमायां श्रीउमामहेश्वरयोः षोडशोपचारपूजनपूर्वकममुकसंख्याकवर्तिभिरार्तिक्यं करिष्ये । प्रतिमायां प्राणप्रतिष्ठाद्यावाहनादि नीराजनान्तं सम्पूज्य प्रदक्षिणादिपूजाशेषं समापयेत् । मध्याह्नस्नानपूजने विधाय हविष्याशनैकभक्ताद्यनुष्ठाय सायं पुनः पञ्चोपचारपूजां विधाय उमामहेश्वरौ ध्यात्वा भूशय्याब्रह्मचर्यादिनियममाचरेत् । एवं प्रत्यहं विधाय अन्ते पूर्णिमायामुद्यापनं कुर्यात् ।

तत्प्रयोगः—पौर्णमास्यां प्रातरावश्यकान्ते पञ्चगव्यप्राशनपूर्वकं नद्यादौ स्नात्वा गृहमागत्य शुचौ पूजाप्रदेशे रुचिरं मण्डपं निर्माय तन्मध्ये लिङ्गतोभद्रं तदीशाने वेदिकां कृत्वा वस्त्रेणाच्छाद्य रक्ततण्डुलैरष्टदलं कमलं पीतकर्णिकं विलिख्य तदुपरि ताम्रं मृन्मयं नवमव्रणं

सुपूजितं कलशं मुखाच्छादनसहितं संस्थाप्य तत्समीपे यथाशक्ति निर्मितं रजतदीपपात्रं कार्पासगर्भगतसुवर्णवर्तिकायुतं घृतपूर्णं निधाय षोडशोपचारादिसामग्रीं सम्पाद्य शुभासन उपविश्य दीपं प्रज्वलय्य स्वस्तिवाचनपूर्वकं गणेशपूजनं कुर्यात् । तद्यथा- विष्णुः ३ अद्येहेत्यादि अमुकी देवी अहं करिष्यमाणलक्षबिल्ववर्तिव्रतोद्यापनकर्माणि निर्विघ्नतया कार्यसिद्धये श्रीभगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये इति प्रतिज्ञाय दक्षिणादानान्तं पूजनं विधाय पुनरर्घस्थापनान्तं कृत्वा प्रधानसङ्कल्पं कुर्यात्--विष्णुः ३ अद्येहेत्यादि अमुकी देवी ( सभर्तृका ) अहं कृतस्य बिल्वलक्षवर्तिव्रतस्य साङ्गफलप्राप्तये विशेषत उमामहेश्वरप्रीतये उद्यापनं करिष्ये । तत्र सकलमङ्गलाभिवृद्धये गणपतिसहितगौर्यादिषोडशमातृपूजनं करिष्ये इति प्रतिज्ञाय मातृपूजनं विधाय पुण्याहं वाचयित्वा आचार्यब्रह्मणोर्दशर्त्विजां च वरणं कुर्यात्—विष्णुः ३ अद्येहेत्यादि अमुकदेवी ( सभर्तृका ) अहमाचार्यब्रह्मणोर्दशर्त्विजां च वरणं करिष्य इति प्रतिज्ञाय आचार्यं संपूज्य एभिर्गन्धाक्षतपूगीफलद्रव्यवासोभिरस्मिन्नुद्यापनकर्माणि आचार्यकर्म कर्तुमाचार्यत्वेन त्वां वृणे । एवमेव ब्रह्मण ऋत्विजां च वरणं कृत्वा मण्डपसमीपमागत्य मण्डपं प्रतिष्ठाप्य द्वारपूजां कृत्वा कलशस्थापनविधिना कलशं संस्थाप्य तदुपरि सवृषभामुमामहेश्वरप्रतिमां निधाय लिङ्गतोभद्रे मण्डलदेवता आवाह्य प्रतिष्ठाप्य विष्णुः ३ अद्येहेत्याद्यमुकदेवी अहमस्मिन्नुद्यापनकर्मणि सपरिवारयोरुमामहेश्वरयोः षोडशोपचारैः पूजनं करिष्य इति प्रतिज्ञाय ध्यानावाहनादि नीराजनान्तं शिवरात्रिव्रतपूजोक्तप्रकारेण सम्पूज्य लक्षवर्तिकाशेषवर्तिकाभिश्च नीराज्य प्रदक्षिणादि प्रार्थनान्तं समाप्य मध्याह्नसायाह्नयोः पुनः स्नानपूजादि विधायोपोषणजागरणस-

त्कथाभी रात्रिं यापयित्वा प्रभाते स्नानादिनित्यकृत्यान्ते देवं पुनः सर्वोपचारैः पूजयेत्।

तत आचार्यादयो गृहे नद्यादौ वा यवतिलदर्भजलैः ॐ नमः शम्भवाय० इति मन्त्रेण दशसहस्रसंख्यमष्टोत्तरसहस्रसंख्यं वा तर्पणं देवतीर्थेन कुर्युः।

तत आचार्यो मण्डपपश्चिमभागे स्थण्डिलं निर्माय तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य तदीशाने कलशे नवग्रहानावाह्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कृत्वा समिद्धोमान्तं विदध्यात्। यजमाना द्रव्यत्यागं कुर्यात्--विष्णुः ३ अद्येहेत्यादि अमुकी अहं बिल्वलक्षवर्तिव्रतोद्यापनहोमकर्मणा यक्ष्ये। तत्राघारावाज्यभागावाज्येन प्रधानमष्टोत्तरसहस्रसंख्याकाहुतिभिस्तिलाज्यचरुबिल्वद्रव्येण नवग्रहान् लोकपालान् विनायकादीन् ब्रह्मादिमण्डलदेवताश्चाज्येनैकैकाहुत्या भूराद्याश्चाज्येन स्विष्टकृतं तिलाज्यचरुबिल्वद्रव्येणाहं यक्ष्ये। एतद्धोमद्रव्यं मया परित्यक्तं यथादैवतमस्तु। प्रधाने मन्त्राः-त्र्यम्बकमिति, नमः शंभवायेति रुद्रसूक्तं वा मूलमन्त्रो वा। द्रव्यप्रमाणं तु त्रिधाकृतं बिल्वफलम्। ततो भूरादिहोमं पूर्णपात्रदानान्तं पूर्णाहुत्यन्तं च विधाय होमसाङ्गतां संकल्प्य विभज्य होमदशांशेन सार्धशतद्वयसंख्यया नमः शंभवाय. इत्यनेन रुद्रगायत्र्या वा स्वशिरसि मार्जनं कुर्यात्। पुनः सपरिवारं देवमुत्तराङ्गत्वेन सम्पूज्य—

यद्भक्त्या देवदेवेश मया व्रतमिदं कृतम्।
न्यूनं वाऽथ क्रियाहीनं परिपूर्णं तदस्तु मे॥

करचरणकृतं वा० इत्यादिना प्रार्थयेत्। न्यूनातिरिक्तानीत्यादिना च। दीपदानसङ्कल्पः-सुवर्णवर्तिकोपेतरौप्यदीपं प्रज्वलय्य प्रतिष्ठाप्य संपूज्य तेन देवं नीराज्य अद्येहेत्यादि लक्षवर्तिव्रतसम्पूर्तिहेतुं सुवर्णवर्त्युपेतामिमं रौप्यदीपं श्रीउमामहेश्वरप्रीतये

आचार्याय दास्ये इति संकल्प्य आचार्याय संपूज्य दद्यात् । एवं बिल्वलक्षवार्तिव्रतसम्पत्तिकारणीभूतं ससुवर्णमाज्यपूरितमिदं कांस्यपात्रं च श्रीउमामहेश्वरप्रीतये आचार्याय दास्ये । दानवाक्यम्–

कांस्यपात्रमिदं देव गोघृतेन समन्वितम् ।
सुवर्णसहितं दद्यामतः शान्तिं प्रयच्छ मे ॥
महादेव जगन्नाथ भक्तानुग्रहकारक ।
त्वत्प्रसादादहं याचे शीघ्रं कामप्रदो भव ॥ इति ।

विसर्जनं–मन्त्रहीनं० यान्तु देवगणा० इति । प्रतिमादानम्–अद्येहेत्यादि बिल्वलक्षवार्तिव्रतोद्यापनकर्मणः साद्गुण्यार्थं साङ्गफलप्राप्तये श्रीउमामहेश्वरप्रीतये सुपूजितामिमां सौवर्णीं सवृषां सकुम्भां मण्डपोपस्करयुतां श्रीउमामहेश्वरप्रतिमामाचार्याय दास्य इति प्रतिज्ञाय—

शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो ।
तव रूपप्रदानेन मम सन्तु मनोरथाः ॥

इति पठित्वा दद्यात् । गोशय्यादिकं च यथाविधि दद्यात् । अन्यानृत्विजो यथाशक्ति वस्त्रालंकारदक्षिणाभिः संपूज्य भूयसीं संकल्प्य विभज्य दत्त्वा कर्मेश्वरार्पणं कृत्वा सपत्नीकानाचार्यादीन् संभोज्य तदनुज्ञया शिष्टैरिष्टैर्बन्धुभिः सह स्वयमपि भुञ्जीत ।

**इति बिल्वलक्षवार्तिव्रतोद्यापनप्रयोगः ।**

**अथ रुद्रलक्षवर्तिव्रतविधिः** भविष्यपुराणेऽभिहितः । अत्र बिल्ववर्तिव्रतवदेव सर्वोऽपि प्रकारो ज्ञातव्यः । संकल्पवाक्येषु रुद्रवार्तिपदप्रक्षेपः कर्तव्यः । केवलं वर्तिनिर्माणमेकादशतन्तुभिः कार्यम् ।

**अथ तुलसीलक्षपूजाव्रतविधिर्भविष्योत्तरे–**

कार्तिके मासि कुर्वन्ति माघे वा मधुसूदने ।
दिने दिने सहस्रं तु ह्यर्पयेत्तुलसीच्छदान् ॥

एवं मासत्रयं कुर्यात् तत उद्यापनं चरेत् ।
वैशाखे माघ ऊर्जे वा कुर्यादुद्यापनं क्रमात् ॥
आचार्यं वरयेदादौ वेदवेदाङ्गपारगम् ।
दान्तं शान्तं तथा संज्ञं नित्यं ब्राह्मणवर्चसम् ॥
विधिज्ञं तत्त्ववेत्तारं शुचिमन्तं तपस्विनम् ।
स्वगृह्योक्तेन मार्गेण परेद्युः स्वस्तिवाचनम् ॥
सौवर्णीं प्रतिमां विष्णोः शङ्खचक्रगदायुताम् ।
तुलसीवृक्षकं चैव कुर्याद्धेमविनिर्मितम् ॥
हेमादिनिर्मितं कुम्भं पूर्णपात्रसमन्वितम् ।
पुण्योदकैः पञ्चरत्नैः कुशदूर्वाभिपूरितम् ॥
तस्योपरि न्यसेद्विष्णुं लक्ष्म्या च तुलसीसमम् ।
पूजां पुरुषसूक्तेन कुर्याद् ब्रह्मादिदेवताः ॥
उपचारैः षोडशभिः पूजयेच्च तथा हरिम् ।
रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः ॥
ततः प्रातः समुत्थाय होमं कुर्याद्विधानतः ।
वैष्णवेन तु मन्त्रेण तिलाज्येन विशेषतः ॥
पायसेन घृताक्तेन ह्यष्टोत्तरसहस्रकम् ।
आचार्याय सवत्सां गां दक्षिणावस्त्रसंयुताम् ॥
ब्राह्मणान् भोजयेत्पश्चात् सहस्रं वाऽथ शक्तितः ।
शतं वाऽष्टाविंशतिं च भोजयेद्ब्राह्मणान् बुधः ॥
तेभ्यश्च दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् । इति ।

**अथ प्रयोगः**—तत्र नित्यकृत्यान्ते मासपक्षाद्युल्लिख्य मम समस्तपापक्षयार्थं श्रीमहाविष्णुप्रीत्यर्थमियता कालेन प्रतिदिनमियत्या संख्यया तुलसीलक्षपूजां करिष्ये ।

ततो जलपूर्णताम्रपात्रं करयोः कृत्वा—

तुलसीलक्षपूजां च करिष्येऽहं महाफलाम् ।

निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाद्रमापते ॥
इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
तत्समं सिद्धिमायातु प्रसादात्तव केशव ॥

इति पठित्वा जलं भूमौ क्षिपेत् ।

ततस्तुलसीपत्राण्याहरेत् । तत्र विधिः–शुद्धदेशोद्भवामदूषितामात्मरोपितामथवा ब्राह्मणगृहस्थितां गोष्ठादिपूज्यदेशसमुद्भवां तुलसीमभिगम्य नमस्कुर्यात्--

देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः ।
नमो नमस्ते तुलसि पापं हर हरिप्रिये ॥
तुलस्यमृतजन्माऽसि सदा त्वं केशवप्रिये ।
केशवार्थं चिनोमि त्वां वरदा भव शोभने ॥

इति सम्प्रार्थ्य तुलसीदलान्याहरेत् । ततः शुचि शुभपूजामण्डपं विष्णुपीठान्तं निर्माय पूजासामग्रीं सम्पाद्य मध्याह्नस्नानान्तं विधाय पूजनं कुर्यात् । शुचिः स्वासने उदङ्मुख उपविश्य आचम्य कर्माङ्गदीपं प्रज्वलय्य प्रतिष्ठाप्य सम्पूज्य ॐ सुमुखश्चेत्यादि सामान्यवत् विशेषार्घस्थापनान्तं कृत्वा स्वस्तिवाचनपूर्वकं गणेशपूजनं कुर्यात् । तत्र सङ्कल्पः—ॐ विष्णुः३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणलक्षतुलसीपूजाव्रतकर्मणि निर्विघ्नतया कार्यसिद्ध्ये श्रीभगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये इति प्रतिज्ञाय दक्षिणादानान्तं पूजनं विधाय पुनरर्घस्थापनं कृत्वा पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं तुलसीलक्षपूजाव्रताङ्गत्वेन सपरिवारस्य श्रीमहाविष्णोस्तुलस्याश्च पुरुषसूक्तेन षोडशोपचारैः पूजनं करिष्ये । इति प्रतिज्ञाय पुरुषसूक्तेन ध्यानावाहनादि नीराजनान्तं पूर्ववत् पूजयेत् । पुष्पपूजान्ते गृहीतनियमानुसारेण तावन्ति तुलसीदलानि विष्णुसहस्रनामादिभिः समर्पयेत् । एवं पूजनं विधाय

हविष्याशनैकभक्तादिना दिनमतिवाह्य सायं पुनः पञ्चोपचार-पूजनं विधाय भूशयनब्रह्मचर्यादिना रात्रिं निनयेत्। एवं स-ङ्कल्पानुरोधेन व्रतसमाप्तिपर्यन्तमाह्निककृत्यं विधाय व्रतान्ते उद्या-पनं कुर्यादिति।

तत्प्रयोगो यथा—व्रतकर्ता व्रतोद्यापनदिने प्रातरा-वश्यकान्ते नद्यादौ स्नानं विधाय गृहेशान्यां सुभूषिते पूजास्थाने यथाविधि मण्डपं तत्र सर्वतोभद्रं विरच्य तस्मिन् कलशं संस्थाप्य सर्वां सामग्रीं यथास्थानमाधाय कर्माङ्गदीपं प्रज्वलय्य प्रतिष्ठाप्य संपूज्य स्वस्तिवाचनपुरस्सरं गणेशपूजनं कुर्यात्। तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाण-लक्षतुलसीपूजाव्रतोद्यापनकर्मणि निर्विघ्नतासिद्ध्यर्थं श्रीमद्भग-वतो गणेशस्य प्रीतये पूर्वाङ्गत्वेन षोडशोपचारैः श्रीगणपति-पूजनं करिष्ये।

ततः प्रधानसंकल्पः—ॐ विष्णुः ३ अद्येहेत्या-दि अमुकोऽहं विष्णुसायुज्यकामः श्रीविष्णुप्रीतये लक्षतुल-सीपूजाव्रतस्यैतावत्कालपर्यन्तमाचरितस्य साङ्गतासिद्ध्ये तत्स-म्पूर्णफलप्राप्तये चोद्यापनं करिष्ये। तत्र सकलमङ्गलाभिवृद्ध्ये गणपतिसहितगौर्यादिषोडशमातॄणां पूजनमाभ्युदयिकपुण्याहवा-चनादि करिष्ये इति प्रतिज्ञाय मातृपूजनाभ्युदयिकपुण्याहवाच-नादि विधाय आचार्यब्रह्मणोर्वरणं कृत्वा मण्डपं प्रतिष्ठाप्य कलशस्थापनविधिना कलशं संस्थाप्य तदुपरि सौवर्णीं श्रीवि-ष्णुप्रतिमां तत्समीपे सौवर्णं तुलसीवृक्षमग्न्युत्तारणपूर्वकं संस्था-प्य पुरुषसूक्तेन ध्यानावाहनादिषोडशोपचारपूजां कुर्यात्।

तत्र संकल्पः-ॐ विष्णुः ३ अद्येहेत्याद्यमुकोऽहं लक्षतुलसीपू-जाव्रतोद्यापनकर्मणि यथोक्तफलावाप्तये श्रीमहाविष्णुप्रीतये पुरुष-सूक्तेन षोडशोपचारैः श्रीमहाविष्णोः तुलस्याश्च पूजनं करिष्ये

इति । एवं सर्वं पूजनविधिं समाप्य पुराणश्रवणादिभिः जागरणेन तां रात्रिमतिवाह्य द्वितीयदिने कृतनित्यक्रियः पूर्वोक्तविधानेन देवं पुनः पूजयेत् ।

तत आचार्यः अग्निस्थापनादि तत्पूजनान्तं कर्म कृत्वा यजमानेन द्रव्यत्यागसंकल्पं कारयेत् । अद्येहेत्यादि अमुकोऽहं लक्षतुलसीपूजाव्रतोद्यापनहोमकर्मणा यक्ष्ये । तत्राघाराज्यभागदेवता आज्येन, श्रीविष्णुं तिलाज्येन घृताक्तपायसद्रव्येण च 'इदं विष्णुः' इति मन्त्रेण अष्टोत्तरसहस्रसंख्यया, ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकया आहुत्या आज्येन नाममन्त्रेण, अग्निं स्विष्टकृतं चाज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सत् यथादैवतमस्तु न मम । ततो ब्रह्मणाऽन्वारब्धः पूर्ववत् सर्वं होमं विधाय संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कृत्वाऽग्निपूजनादि त्र्यायुषकरणान्ते यजमानो होमसाङ्गतां संकल्प्य दत्त्वा गोदानविधिना सवत्सां गां प्रतिमादानविधिना प्रतिमां च आचार्याय दत्त्वा भूयसीं दक्षिणां संकल्प्य विभज्य दद्यात् । ततः सहस्रं शतमष्टाविंशतिं वा ब्राह्मणान् यथाशक्ति भोजयेदिति ।

अथ माघस्नानविधिः—

तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्यं च माघस्नाने महत् फलम् ॥
उत्तमं तु सनक्षत्रं लुप्ततारं च मध्यमम् ।
सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ॥
माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।

बालवृद्धयुवानश्च नरनारीनपुंसकाः ॥
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ।
सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप ॥
उष्णोदकेन वा स्नानमशक्ये सति कुर्वते ।
वृद्धेषु सर्वगात्रेषु उष्णोदं न विशिष्यते ॥
तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ।
षडब्दं फलदं तद्धि मकरस्थे दिवाकरे ॥

वाप्यादौ द्वादशाब्दफलं तडागे तद्द्विगुणं नद्यां तच्चतुर्गुणम् । महानद्यां शतगुणम्, महानदीसंगमे तच्चतुर्गुणम्, गंगायां सहस्रगुणम्, गंगायमुनासंगमे तच्छतगुणमिति ।

तत्र चोत्थाय नियमं गृह्णीयाद् विधिपूर्वकम् ।
माघमासमिमं पूर्णं स्नास्येऽहं देव माधव ॥
तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि ॥ इति ।

प्रत्यहं मन्त्रश्च पाद्मे—

दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ।
प्रातःस्नानं करोम्यद्य माघे पापविनाशनम् ॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन वै देव यथोक्तफलदो भव ॥
इमौ मन्त्रौ समुच्चार्य स्नायान्मौनसमन्वितः ।

प्रत्यहं सूर्याय अर्घ्यः इति ।

**अथ माघस्नानप्रयोगः ।** स्नानं चिकीर्षुर्यथाचारं पौषशुक्लैकादश्यां पौर्णमास्यां वा अरुणोदये तिलदर्भाक्षतगन्धादियुतस्तीर्थादौ गत्वा प्रातःस्नानं प्रातःसंध्यां च विधाय पवित्रपाणिः शुक्लाम्बरधरमिति विष्णुं स्मृत्वा ॐ विष्णुः ३ अद्येह अमुकोऽहं सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीमाधवप्रीतये अद्यप्रभृति माघशुक्लद्वादशीपर्यन्तं पौर्णमासी-

पर्यन्तं वा हविष्याशनेन प्रातर्मध्याह्नस्नानमर्घ्यदानपूर्वकं माघ-स्नानं करिष्ये ।

व्रतस्वीकारः—

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव माधव ॥

इति जलमुत्सृज्य स्नानं कृत्वा—

सवित्रे प्रसवित्रे च परं धाम जले मम ।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥

इति गन्धपुष्पाक्षतैर्युतमर्घ्यं दत्त्वा—

ॐ दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ।
प्रातःस्नानं करोम्यद्य माघे पापविनाशनम् ॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन मे देव यथोक्तफलदो भव ॥

इति स्नात्वा देवर्षितर्पणं विदध्यात् । ततोऽर्घ्यं संस्थाप्य कार्तिकस्नानविध्युक्तप्रकारेण माधवं पूजयेत् । तत्र ध्याने विशेषः—

चक्रशङ्खौ पद्मगदे दक्षिणोर्ध्वकरक्रमात् ।
धारयन् माधवो देवो ध्यातव्योऽभीष्टदायकः ॥ इति ।

एवं प्रत्यहं मासपर्यन्तं विधायान्ते उद्यापनं कुर्यात् ।

माघस्नानोद्यापनप्रयोगश्च सर्वोऽपि कार्तिकस्नानोद्यापन-प्रयोगवद् बोध्यः । राधादामोदरस्थाने माधवस्योल्लेखः कार्य इति ।

अथ शिवरात्रिव्रतोद्यापनम् । तद्विधिः स्कन्दपुराणे—

यदा संजायते वित्तं चित्तं श्रद्धासमन्वितम् ।
स एव व्रतकालः स्याद्यतोऽनत्यं हि जीवितम् ॥
चतुर्दशाब्दं कर्त्तव्यं शिवरात्रिव्रतं शुभम् ।

एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम् ॥
सम्पाद्य सर्वसम्भारान् मण्डपं तत्र कारयेत् ।
वस्त्रैः पुष्पैः समाच्छन्नं पट्टवस्त्रैश्च शोभितम् ॥
तन्मध्ये लेखयेद्दिव्यं लिङ्गतोभद्रमण्डलम् ।
अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत् ॥
शोभोपशोभासंयुक्तं दीपैः सर्वत्र सोज्ज्वलम् ।
आचार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिम् ॥
शिवरूपाश्च ते विप्राः पूज्याश्चन्दनपुष्पकैः ।
अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् ॥
रुद्रनाम्ना नमोऽन्तेन ब्राह्मणानपि पूजयेत् ।
तण्डुलैश्च प्रकर्तव्यः कैलासो द्रोणसम्मितैः ॥
अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत् ।
सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम् ॥
कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम् ।
सौवर्णेऽप्यथवा रौप्ये वृषभे संस्थितं शुभे ॥
रत्नालङ्करणैर्हैमैरलङ्कृत्य प्रपूजयेत् ।
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् ।
उमामहेश्वरीं मूर्तिं पूजयेद् वृषभे स्थिताम् ॥
सोमं च सगणं चैव पूजयित्वा महेश्वरम् ।
पुराणस्तोत्रपाठैश्च रात्रिशेषं नयेद् बुधः ॥
ततः प्रभातसमये कृत्वा स्नानादिकाः क्रियाः ।
पुनः पूजां प्रकुर्वीत ततो होमं समाचरेत् ॥
तिलव्रीहियवैश्चैव पायसान्नेन भक्तितः ।
त्र्यम्बकमिति मन्त्रेण नमः शम्भवायेति च ॥
गौरीर्मिमायमन्त्रेण शतमष्टोत्तरद्वयम् ।

होमं कुर्याच्च मतिमान् बिल्वपत्रैस्तु नामभिः ॥
अजैकपादहिर्बुध्न्यो भवः शर्व उमापतिः ।
रुद्रः पशुपतिः शम्भुर्वरदः शिव ईश्वरः ॥
महादेवो हरो भीमो नामान्येवं चतुर्दश ।
एतैर्होमः प्रकर्तव्यः कुम्भदानं च पूजनम् ॥
भोज्यं च देयं विप्रेभ्यो देवं चैव क्षमापयेत् ।
पूर्णाहुतिं ततो हुत्वा कर्मशेषं समापयेत् ॥
प्रतिमां कुम्भसहितामाचार्याय निवेदयेत् ।
शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो ॥
तव रूपप्रदानेन मम सन्तु मनोरथाः ।
आचार्यं पूजयेद् भक्त्या वस्त्रालङ्कारभूषणैः ॥
सवत्सां गां ततो दद्यात् व्रतसम्पूर्तिहेतवे ।
अन्येभ्योऽपि यथाशक्ति ब्राह्मणेभ्यो हि दक्षिणाम् ॥
चतुर्दश प्रदातव्या विप्रेभ्यो जलपूरिताः ।
कुम्भा यज्ञोपवीतानि वस्त्राणि च पृथक् पृथक् ॥
सुसूक्ष्माणि च वस्त्राणि शय्या सोपस्करा तथा ।
चतुर्दश च गा दद्यादेकां वा शक्तितोऽपि वा ॥
अथवा दक्षिणामेव प्रदद्याद् विप्रतुष्टये ।
व्रतमेतत् कृतं यन्मे पूर्णं वाऽपूर्णमेव च ॥
सर्वं सम्पूर्णतां यातु प्रसादात् भवतां मम ।
इति सम्प्रार्थ्य तान् विप्रान् प्रणम्य च पुनः पुनः ॥
ततश्च स्वजनैः सार्द्धं स्वयं भुञ्जीत सुव्रती ॥ इति ।

अथ शिवरात्रिव्रतोद्यापनप्रयोगः । तत्रोद्यापनकर्ता चतुर्दशसंवत्सरं शिवरात्रिव्रतं संपाद्य त्रयोदश्यां कृतैकभक्तादि-नियमः चतुर्दश्यां तदन्ते चतुर्दशे वर्षे प्रातर्नित्यकृत्यान्ते स्वस्तिवाचनपूर्वकं गणेशं पूजयेत् । तत्र संकल्पः—ॐ विष्णुः ३

अद्येह अमुकोऽहं शिवरात्रिव्रतोद्यापनपूर्वाङ्गत्वेन निर्विघ्नता-सिद्धये श्रीमतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये। ततः प्रधानसंकल्पः—ॐ विष्णुः ३ अद्येह अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये एतावत्कालपर्यन्तमाचारितस्य शिवरात्रिव्रतस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च शिवरात्रिव्रतोद्यापनं करिष्ये। तत्र सर्वमङ्गलाभिवृद्धये मातृकापूजनाभ्युदयिकश्राद्धपुण्याहवाचनकलशस्थापनग्रहावाहनपूजनानि करिष्ये इति संकल्प्य मातृकापूजनादि पुण्याहवाचनान्तं कर्म समाप्य आचार्यब्रह्मणोर्वरणं कृत्वा घटप्रतिग्रहार्थं चतुर्दश ब्राह्मणान् वृणुयात्।

तद्यथा—ॐ विष्णुः ३ अद्येह अमुकोऽहं करिष्यमाणशिवरात्रिव्रतोद्यापनकर्मणि व्रतसम्पत्तिहेतुचतुर्दशघटप्रतिग्रहार्थमृत्विक्कर्म कर्तुं च अजैकपादादिस्थानीयानां चतुर्दशब्राह्मणानां पूजनपूर्वकं वरणं करिष्ये। तत आसने उपविष्टं प्रथमं ब्राह्मणमर्घ्यादिभिः सम्पूज्य वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासोऽलंकरणैः अजैकपात्स्थाने भो ब्रह्मन् त्वां वृणे। एवमग्रेऽपि। एभिः० अहिर्बुध्न्यस्थाने भो०। एभिः० भवस्थाने भो०। एभिः शर्वस्थाने भो०। एभिः० उमापतिस्थाने भो०। एभिः रुद्रस्थाने भो०। एभिः० पशुपतिस्थाने भो०। एभिः० शम्भुस्थाने भो०। एभिः० वरदस्थाने भो०। एभिः० शिवस्थाने भो०। एभिः० ईश्वरस्थाने भो०। एभिः० महादेवस्थाने भो०। एभिः० हरस्थाने भो०। एभिः० भीमस्थाने भो०। इत्येवं प्रत्येकं वृत्वा नमस्कुर्यात्।

ततो मध्याह्नस्नानादिकं सर्वं यथावद् विधाय कदलीस्तम्भपुष्पमालावस्त्रवितानपञ्चवर्णरङ्गादिभिः निर्मितमण्डपसमीपे पूजासामग्रीं यथाविधि सम्पाद्य प्रदोषासन्नकाले स्नात्वा शुचि-

भूत्वा समाहितचेता मण्डपसमीपे स्वासने उपविश्य दीपं प्रज्व-लय्य पवित्रपाणिराचान्तो भस्मरुद्राक्षधारणादिकं विधाय द्रोणसंमिततण्डुलनिर्मितकैलासे लिङ्गतोभद्रं विलिख्य तदुपरि कलशं संस्थाप्य मण्डपं प्रतिष्ठाप्य द्वारपूजादिकं कृत्वा शिवरात्रिपूजाप्रकारेण कलशोपरि वृषभारूढामुमामहेश्वरप्रतिमां सोमप्रमथादिगणसहितां प्रतिष्ठाप्य पूजयेत् ।

ततो गन्धाक्षतपुष्पबिल्वपत्रैर्विशेषपूजनं कुर्यात्—ॐ अजैकपदे नमः, ॐ अहिर्बुध्न्याय० ॐ भवाय० ॐ शर्वाय० ॐ उमापतये० ॐ रुद्राय० ॐ पशुपतये० ॐ शंभवे० ॐ वरदाय० ॐ शिवाय० ॐ ईश्वराय ॐ महादेवाय० ॐ हराय० ॐ भीमाय० । ततो विशेषार्घ्यदानान्तं संपूज्य रात्रिं पूजनकथाश्रवणमङ्गलस्तुतिपाठादिभिर्जागरणेन निनीय प्रातः नित्यकृत्यान्ते देवं पुनः सम्पूजयेत् ।

तत आचार्यो मण्डपपश्चिमभागे स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निस्थापनं कुर्यात् । ततो यजमानः द्रव्यत्यागसंकल्पं कुर्यात् । ॐ विष्णुः ३ अद्येह अमुकोऽहं शिवरात्रिव्रतोद्यापनहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, उमामहेश्वरौ तिलव्रीहियवाज्यचरुद्रव्येण अष्टोत्तरशतद्वयसंख्यया, अजैकपादादिचतुर्दशदेवता बिल्वपत्राज्यद्रव्येण प्रत्येकमष्टसंख्यया, नवग्रहान् तिलयवाज्येन अष्टाष्टसंख्याकाहुतिभिः, अग्निं स्विष्टकृतं च हुतशेषेण, ब्रह्मादिमण्डलदेवतास्तत्पक्षे प्रत्येकमेकैकयाऽऽहुत्या आज्येन, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐ तत्सत् यथादैवतमस्तु न मम । ततः ॐ स्य-

म्बकमिति ॐ नमः शम्भवायेति मन्त्राभ्यां प्रधानहोमं विधाय बिल्वपत्राज्यद्रव्येण ॐ अजैकपदे नमः इत्यादिचतुर्दशमन्त्र-होमं च विधाय आज्येन भूराद्याहुतीर्दत्वा पूर्णाहुतिं च हुत्वा होमसाङ्गतान्तं कर्मशेषं समाप्य उत्तराङ्गत्वेन देवं सम्पूज्य अ-जैकपादादिचतुर्दशनामाभिः प्रणम्य क्षमाप्य विसर्जयेत् । पापो-ऽहमिति सम्प्रार्थ्य कुम्भाद्युपस्करसहितां प्रतिमामाचार्याय दद्यात् । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुको-ऽहं कृतस्य शिवरात्रिव्रतोद्यापनकर्मणः साङ्गफलप्राप्तये साद्गु-ण्यार्थं चेमां सुपूजितां वृषभोपेतां सौवर्णीमुमामहेश्वरप्रतिमां कु-म्भाद्युपस्करसहितां श्रीउमामहेश्वरप्रीतये आचार्याय दास्ये । ॐ तत्सत् । आचार्यं सम्पूज्य—

ॐ शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो ।
तव रूपप्रदानेन मम सन्तु मनोरथाः ॥

इति मन्त्रेण दद्यात् । ततः शय्यादानं गोदानं च यथावद् विधाय दत्त्वा घटदानं कुर्यात् । तत्र जलपूर्णान् वस्त्रच्छन्नान् दध्य-क्षतचन्दनयज्ञोपवीतपुष्पमालाभिः सुभूषितान् तिलसुवर्णफलप-क्वान्नयुतान् चतुर्दशघटान् उत्तरवृद्ध्या स्थापितान् ॐ हिरण्यग-र्भेति प्रतिष्ठाप्य सम्पूज्य संकल्पं कुर्यात् । ॐ विष्णुः ३ अद्ये-हेत्यादि अमुकोऽहं शिवरात्रिव्रतोद्यापनकर्मणः साद्गुण्यार्थं सा-ङ्गतासिद्ध्ये च सुपूजितानिमान कुम्भान् अजैकपादादिचतुर्दश-ब्राह्मणेभ्यो दास्ये । ॐ तत्सत् । इति उत्तरवृद्ध्योपविष्टानजैक-पादादीन् संपूज्य क्रमशो दद्यात् । ततो भूयसीं संकल्प्य ति-लपात्राच्छिद्रवाचनघृतच्छायाभिषेकतिलकरक्षाबन्धनान्तं कर्म-शेषं समाप्य आचार्यादीन् ब्राह्मणान् संभोज्य दक्षिणाभिस्तो-षयित्वा प्रार्थयेत्—

व्रतमेतत् कृतं यन्मे पूर्णं वाऽपूर्णमेव च ।

सर्वं सम्पूर्णतां यातु प्रसादाद् भवतां मम ॥ इति ।

ततः स्वजनैः सार्द्धं स्वयं भुञ्जीत ।

**अथ प्रदोषव्रतविधिः स्कन्दपुराणे—**

पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा ।
घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् ॥
शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः ।
कृतसन्ध्याजपविधिः शिवपूजां समारभेत् ॥ इति ।

**अथ प्रयोगः**-तत्र व्रतकर्ता पूर्वदिने रात्रौ ब्रह्मचर्यादि-नियमान्वितो व्रतदिने प्रातर्नित्यकृत्यं विधाय व्रतं संकल्पयेत् । साक्षतपुष्पजलपूर्णं ताम्रपात्रं करे कृत्वा ॐ विष्णुः ३ अद्येह अमुकोहममुककामनासिद्धिकामः श्रीशिवप्रीतये पक्षप्रदोष-व्रतं करिष्ये ।

तव प्रसादासिद्ध्यर्थं प्रतिपक्षत्रयोदशीम् ।
प्रदोषे त्वां समभ्यर्च्य नक्तं भोक्ष्यामि शंकर ॥

इति मन्त्रेण जलं समुत्सृजेत् । ततो मध्याह्ने तिलामल-केन स्नात्वा मध्याह्नकृत्यं च विधाय श्रीशिवपूजास्थानं नवो-दकगोमयमृद्भिरुपलिप्य तत्र रम्यं धौतवस्त्रादिभिर्वृतं वितानाद्यैरलंकृतं फलपुष्पनवाङ्कुरैर्विचित्रितं मण्डपं निर्माय तत्र भूमौ वेद्यां वर्णपञ्चकसंयुतपद्मदलं विलिख्य रङ्गवल्ल्यादिभिः भूषयित्वा सम्यक्संपादिताशेषसंभारः अस्तमयाद् घटीत्रयात्पूर्वं सम्यक् स्नातः शुक्लाम्बरधरो मौनी नियमान्वितः कृतसायंसंध्याजपविधिः प्रक्षालितपादो मण्डपसमीपमागत्य स्वासने उपविश्य दीपं प्रज्वलय्य सुमुखश्चेति गणेशाय पुष्पाञ्जलिं समर्प्य अर्घ्यं संस्थाप्य गङ्गे चेति जलेनापूर्य गन्धादि तूष्णीं निक्षिप्य सूर्यायार्घ्यं दत्त्वा गन्धादिभिः संपूज्य भूतोत्सादनं कृत्वा दक्षिणे गणपतये नमः वामे गुरुभ्यो नमः मध्ये श्रीसाम्बसदाशिवाय

नमः इति नत्वा विशेषार्घ्यं संस्थाप्य तत्र वरुणाय नमः इति वरुणमावाह्य गन्धादिभिः संपूज्य तेन जलेन पुण्डरीकाक्षाय नमः इति आत्मानं पूजासामग्रीं च संप्रोक्ष्य प्राणानायम्य पूजासंकल्पं कुर्यात्-ॐ विष्णुः ३ अद्येह अमुकोऽहं अमुककामनासिद्धये विशेषतः श्रीसाम्बसदाशिवप्रीतये प्रदोषव्रताङ्गत्वेन अस्मिन् लिङ्गे षोडशोपचारैः श्रीसाम्बसदाशिवस्य पूजनं करिष्ये।

ध्यानम्—

कैलासशिखरासीनं देवदेवं जगद्गुरुम्।
कर्पूरस्फटिकाभासमुमया सह चिन्तये॥

आवाहनम्—ॐ सहस्रशीर्षा०—

आगच्छानन्त देवेश तेजोराशे जगत्पते।
क्रियमाणामिमां पूजां गृहाण सुरसत्तम॥

आसनं—ॐ पुरुष एवेदं०—

रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम्।
आसनं च मया दत्तं गृहाण परमेश्वर॥

पाद्यं—ॐ एतावानस्य०—

पुष्पोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम्।
पादप्रक्षालनार्थाय दत्तं मे प्रतिगृह्यताम्॥

अर्घ्यं—ॐ त्रिपादूर्ध्वं०—

नमस्ते देवदेवेश नमस्ते शिवशंकर।
नमस्ते पार्वतीकान्त गृहाणार्घ्यं नमोऽस्तु ते॥

आचमनीयं—ॐ ततो विराड०—

कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम्।
आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः॥

स्नानं—ॐ तस्माद्यज्ञात् सर्वहुतः संभृतं०—

गंगादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतम्।

तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥

पञ्चामृतस्नानं—

पयो दधि घृतं चैव मधु शर्करया युतम् ।
पञ्चामृतं मया नीतं स्नानार्थं प्रतिगृह्यताम् ॥

गन्धोदकस्नानं० श्रीसाम्ब० शुद्धोदकस्नानं० । आचमनीयं—ॐ आपोहिष्ठा०—

गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।
स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे ॥

वस्त्रं—ॐ तस्माद्यज्ञात्सर्वहुत ऋचः०—

सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥

वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतं—ॐ तस्मादश्वा०—

सदाशिव नमस्तेऽस्तु त्राहि मां भवसागरात् ।
ब्रह्मसूत्रं सोत्तरीयं गृहाण शिवशंकर ॥

आचमनीयं० । गन्धः—ॐ तं यज्ञं०—

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥

अक्षताः—

अक्षताः शोभनाः शुक्लाः कुङ्कुमाक्ताः सुशोभनाः ।
मया निवेदिता भक्त्या गृह्यतां परमेश्वर ॥

पुष्पाणि—ॐ यत्पुरुषं०—

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽऽनीतानि पुष्पाणि पूजार्थं स्वीकुरु प्रभो ॥

बिल्वपत्रं—

त्रिदलं त्रिगुणाकारं त्रिनेत्रस्य सदा प्रियम् ।
बिल्वपत्रं प्रयच्छामि त्र्यम्बकाय नमोऽस्तु ते ॥

अङ्गपूजा—विश्वपतये नमः पादौ पूजयामि । शिवाय० जानुनी० । शूलपाणये० गुल्फौ० । शंभवे० कटिं० । स्वयंभुवे० गुह्यं० । महादेवाय० नाभिं० । विश्वकर्त्रे० उदरं० । सर्वतोमुखाय० पार्श्वौ० । स्थाणवे० स्तनौ० । नीलकण्ठाय० कण्ठं० । श्रीकण्ठाय० मुखं० । शशिभूषणाय० मुकुटं० । देवाधिदेवाय० सर्वाङ्गं० ।

अथ परिवारपूजा-गणपतये नमः स्कन्दाय० उमायै० चण्डेश्वराय० नन्दिने० वृषभाय० बाणरावणादिशांभवेभ्यो० इन्द्रादिदशदिक्पालेभ्यो० विनायकादिपञ्चलोकपालेभ्यो० वास्तोष्पतये० क्षेत्राधिपतये० वीरभद्राय० अष्टभैरवेभ्यो० अणिमाद्यष्टभूतिभ्यो० वामादिशक्तिभ्यो० पिनाकशूलाद्यायुधेभ्यो० साङ्गाय सायुधाय सशक्तिकाय सपरिवाराय सवाहनाय श्रीसाम्बसदाशिवाय नमः ।

धूपः ॐ ब्राह्मणोऽस्य०—

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

दीपः—ॐ चन्द्रमा मनसो०—

सुप्रकाशो महान् दीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

नैवेद्यम्—ॐ नाभ्या आसी०—

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।
भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

क्षणं ध्यात्वा यथाशक्ति जपं विधाय गुह्यातीति समर्पयेत् । नैवेद्यान्तमाचमनीयं० । करोद्वर्तनार्थे गन्धं० । नैवेद्यमुद्वास्य चण्डेश्वराय नमः इति किञ्चित् दद्यात् । फलम्—ॐ याः फलिनी०

इदं फलं० । ताम्बूलं—

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

भूषणार्थे द्रव्यम्-ॐ हिरण्यगर्भ० । आरार्तिकम्-ॐ अन्तस्तेजो०

चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥

प्रदक्षिणाः-ॐ यत्पुरुषेण० यानि कानि च० । नमस्काराः-ॐ सप्तास्यासन्०

पार्वतीपतये तुभ्यं महादेवाय शम्भवे ।
गिरीशाय महेशाय त्र्यम्बकाय नमो नमः ॥
नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥

मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञ० । दक्षिणासंकल्पः—ॐ विष्णुः ३ अद्येह अमुकोऽहम् अमुकाभीष्टसिद्धये विशेषतः श्रीपरमेश्वरप्रीतये प्रदोषव्रताङ्गत्वेन कृतायाः शिवपूजायाः साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणाय दास्ये इति संकल्प्य ब्राह्मणं संपूज्य दक्षिणां दत्त्वा आशिषो गृह्णीयात् । विसर्जनम्—आवाहनं० मन्त्रहीनं० ।

कैलासं गच्छ भगवन् पाहि मां वृषभध्वज ।
मम दौर्भाग्यनाशाय पुनरागमनाय च ॥

ततो ब्राह्मणान् संभोज्य स्वयं भुञ्जीत ।

अथ प्रदोषव्रतोद्यापनविधिः स्कान्दे--

अब्दमेकं व्रतं कृत्वा तत उद्यापनं चरेत् ।
तत्रोमासहितं रुद्रं सुवर्णेन च कारयेत् ॥
रौप्येण वृषभं कृत्वा कलशोपरि पूजयेत् ।

तिथ्यादीनि तु संकल्प्य पुण्यवाचनपूर्वकम् ॥
ब्रह्माद्यावाहनं कृत्वा लिङ्गतोभद्रमण्डले।
स्वशाखोक्तेन विधिना हुनेद् घृततिलौदनम् ॥
पृथक् शिवशिवामन्त्रैरष्टोत्तरशतद्वयम् ॥ इति।

**अथ प्रदोषव्रतोद्यापनप्रयोगः--**

उद्यापनकर्ता अब्दान्ते शुक्लत्रयोदश्यां प्रातर्नित्यकृत्यं विधाय चतुर्द्वारं मण्डपं निर्माय तन्मध्ये पञ्चवर्णैर्लिङ्गतोभद्रं लिखित्वा तदुपरि श्वेतवस्त्रयुगान्विततामूमयं कलशं संस्थाप्य रजतवृषभसंस्थितौ सुवर्णनिर्मितौ श्रीउमामहेश्वरौ संस्थाप्य आसने उपविश्य दीपं प्रज्वलय्य आचम्य स्वस्तिवाचनं पठित्वा गणेशपूजनं कुर्यात्। तत्र संकल्पः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणप्रदोषव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्धये श्रीभगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये। इति संकल्प्य यथाविधि गणेशं संपूज्य सामान्यार्घ्यादि विशेषार्घ्यस्थापनान्तं कृत्वा प्रधानसंकल्पं कुर्यात्— ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं श्रीसाम्बसदाशिवप्रीतये अमुककामनया वा अब्दपर्यन्तमाचरितस्य प्रदोषव्रतस्य साद्गुण्यार्थं साङ्गफलप्राप्तये उद्यापनं करिष्ये। तत्पूर्वाङ्गत्वेनेत्यादि आचार्यब्रह्मवरणान्तम् अनुतिष्ठेत्। ततस्त्रयोदशघटप्रतिग्रहार्थं तथैव रीत्या त्रयोदश ब्राह्मणान् वृणुयात्। अथाचार्यः लिङ्गतोभद्रमण्डलदेवतास्थापनपूजने कृत्वा कलशं संस्थापयेत्। ततो यजमानः कलशोपरि रजतवृषभस्थितौ सुवर्णनिर्मितप्रतिमायामुमामहेश्वरौ शिवरात्रिव्रतपूजाविधानेन पूजयेत्। तत्र प्रार्थनायां विशेषः—

भवाय भवनाथाय महादेवाय शूलिने।
उग्राय चोग्रनाथाय शर्वाय शशिमौलिने ॥

रुद्राय नीलकण्ठाय शिवाय भयहारिणे ।
दशभुजाय त्रिनेत्राय पञ्चवक्त्राय शूलिने ॥
सुश्वेतवृषभारूढसुश्वेताभरणाय वै ।
उमासहिताय नमः परिवारावृताय च ॥
त्राहि मां कृपया देव शरणं त्वं महेश्वर ।
सर्वाभीष्टप्रदो नित्यं भवपापप्रणाशन ॥ इति ।

ततः प्रदोषे पुनः पूजां धूपार्तिक्यं च विधाय कथाश्रवण ध्यानजपगीतनृत्यादिभी रात्रिं निनयेत् ।

द्वितीयदिने चतुर्दश्यां प्रातर्नित्यकृत्यं विधाय देवं विशेषप्रार्थनान्तं संपूजयेत् । अथाचार्यो अग्निस्थापनादि तत्पूजान्तं कर्म कृत्वा यजमानद्वारा द्रव्यत्यागं कारयेत् । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं प्रदोषव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन उमामहेश्वरौ आज्यतिलौदनेन "अम्बे अम्बिके०" "नमः शम्भवाय०" इति मन्त्राभ्यां प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः लिङ्गतोभद्रमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्या नाममन्त्रेण आज्येन अग्निं स्विष्टकृतं चाज्यतिलौदनशेषेण, अग्निं वायुमित्यादि प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्सत् यथादैवतमस्तु न मम । ततो ब्रह्मणाऽन्वारब्ध आचार्यो मनसा प्रजापतिं ध्यात्वा आघाराज्यभागादि पूर्णाहुत्यन्तं कर्मानुष्ठाय श्रीउमामहेश्वरौ उत्तराङ्गत्वेन संपूज्य होमसाङ्गतां संकल्पयेत्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कृतैतत्प्रदोषव्रतोद्यापनकर्माङ्गहोमकर्मणः साङ्गतासिद्ध्यर्थमिदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा आचार्यब्रह्मभ्यां यथांशेन विभज्य दातुं समुत्सृजे । ॐ तत्सन्न मम । इति आचार्यब्रह्माणौ पूजयित्वा दद्यात् । ततः त्रयोदश घटान् जलपूर्णान् वस्त्रमालाचन्दनाक्षतादिभिः

सुपूजितान् ससुवर्णान् सुवस्त्राच्छादितवंशपात्रस्थपक्वान्नफलनानाभक्ष्यसमन्वितान् त्रयोदशब्राह्मणेभ्यो दद्यात् । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमस्मिन् प्रदोषव्रतोद्यापनकर्मणि न्यूनतापरिपूर्तये श्रीउमामहेश्वरप्रीतये इमान् जलपूर्णान् सुपूजितान् ससुवर्णान् सुवस्त्राच्छादितवंशपात्रस्थपक्वान्नफलनानाभक्ष्यसमन्वितान् त्रयोदश घटान् ब्राह्मणेभ्यो दास्ये ॐ तत्सन्न मम इति । उत्तमान् त्रयोदश ब्राह्मणान् उत्तरबुद्ध्या संपूज्य दद्यात् ।

गृहाण देवरूपेण मया दत्तमिमं घटम् ।
न्यूनं यच्च क्रियाहीनं परिपूर्णं तदस्तु मे ॥

इति प्रत्येकं दाने पठेत् । ततो गोदानं शय्यादानं च विधाय आचार्याय प्रतिपाद्य प्रतिमादानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं यथोक्तफलावाप्तये वर्षावधि कृतस्य प्रदोषव्रतस्य साद्गुण्यार्थं साङ्गतासिद्धये च व्रतोद्यापनकर्मणि सुपूजितामिमां सौवर्णीं श्रीउमामहेश्वरप्रतिमामुमामहेश्वरप्रीत्यर्थमाचार्याय दास्ये । ॐ तत्सन्न मम । आचार्याय संपूज्य दद्यात्—

त्राहि मां कृपया देव शरणं त्वं ममेश्वर ।
दानेनानेन मे देव सर्वाभीष्टप्रदो भव ॥ इति ।

आचार्यश्च "कोऽदात्" इत्यादि पठित्वा प्रतिगृह्णीयात् । ततो घृतच्छायादानं तिलपात्रदानं च विधाय भूयसीं दक्षिणां विभज्य दत्त्वा त्रयोदश ब्राह्मणान् आचार्यादींश्च यथाशक्ति संभोज्य इष्टैः सह स्वयं भुञ्जीत ।

इति प्रदोषव्रतोद्यापनप्रयोगः ।

अथ रविवारव्रतविधिः सौरधर्मे—

अष्टपत्रं लिखेत्पद्मं विमले ताम्रभाजने ।
पूर्वपत्रे लिखेत्सूर्यमाग्नेय्यां तु रविं न्यसेत् ॥
दक्षिणस्यां विवस्वन्तं नैर्ऋत्यां तु भगं न्यसेत् ।

वारुण्यां वरुणं विद्याद्वायव्यां मित्रमेव च ॥
आदित्यमुत्तरे पत्रे ईशान्यां विष्णुमेव च ।
मध्ये तु भास्करं न्यस्य क्रमेणैवं समर्चयेत् ॥ इति ।

तथा रविवारव्रतोद्यापनविधिर्भविष्ये--

एवं व्रतं द्वादशाब्दं कृत्वा उद्यापनं चरेत् ।
ततो गुरुगृहं गत्वा गृह्णीयाच्चरणाम्बुजे ॥
उद्यापनं करिष्येऽहमागच्छ मम वेश्मनि ।
त्वदाज्ञया गुरो मेऽद्य सर्वं सिध्यतु कर्म तत् ॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
माषकेण सुवर्णेन प्रतिमां कारयेद् रवेः ॥
पीठं रौप्यमयं कार्यं सर्वोपस्करसंयुतम् ।
गोमयेनानुलिप्तायां भूमौ मण्डलमालिखेत् ॥
रक्तचन्दनरेखाभिः कुङ्कुमेन विशेषतः ।
तन्मध्ये कारयेत्पद्मं द्वादशारं सकर्णिकम् ॥
रक्ततण्डुलपत्राढ्यं सिन्दूरपरिपूरितम् ।
जपाकुसुमशोभाढ्यं पीतकर्णिकमादरात् ॥
तन्मध्ये स्थापयेत्कुम्भं पञ्चरत्नसमन्वितम् ।
अव्रणं च नवं चैव प्रवालाङ्कुरशोभितम् ॥
तस्योपरि न्यसेत्पात्रं ताम्रं तण्डुलपूरितम् ।
तत्रापि द्वादशदलं कमलं परिपूरयेत् ॥
सौवर्णं भास्करं तत्र पीठे रजतनिर्मिते ।
संज्ञया सहितं देवं पद्महस्तं सुनिर्मितम् ॥
रक्तवस्त्रयुगोपेतं पात्रोपरि निवेशयेत् ।
पञ्चामृतेन स्नपनमग्न्युत्तारणपूर्वकम् ॥
प्रतिष्ठां च ततः कृत्वा पूजां देवस्य कारयेत् ।
चन्दनैः कुसुमैरन्यैर्विविधैः कालसंभवैः ॥

अखण्डपट्टवस्त्रैश्च कमण्डलुमुपानहौ ।
शय्यादिकं यथाशक्ति स्थापयेद्देवसन्निधौ ॥
संज्ञादेव्या वस्त्रयुगं कौसुम्भं तु महीपते ।
प्रतिपत्रं तु संपूज्यः सूर्यो द्वादशनामभिः ॥
मित्रो विष्णुवरुणौ सूर्यो भानुर्वै तपनस्तथा ।
इन्द्रो रविर्गभस्तिश्च शमनो दशमः स्मृतः ॥
हिरण्यरेता दिनकृत् पूज्या एते प्रयत्नतः ।
मध्ये सहस्रकिरणः सम्पूज्यः संज्ञया सह ॥
पूगीफलैर्धूपदीपैर्नैवेद्यैर्वस्त्रसंयुतैः ।
नालिकेरेण चैवार्घ्यं दद्याद्देवाय भक्तितः ॥
मन्त्रेणानेन राजेन्द्र व्रतस्य परिपूर्तये ।
नमः सहस्र..........सहितो रवे ॥
आरार्तिकं ततः कुर्यान्नमस्कारप्रदक्षिणाः ।
पुष्पाञ्जलिं ततो दत्त्वा जागरं कारयेन्निशि ॥
ततः प्रभाते विमले नित्यकर्म विधाय च ।
यजमानः सपत्नीक ऋत्विग्भिः सह कर्मवित् ॥
साज्येन पायसेनैव तिलाज्येनाथवा पुनः ।
आकृष्णेनेति मन्त्रेण सहस्रं द्विशताधिकम् ॥
आर्का वाऽप्यथ पालाश्यः समिधो होमकर्मणि ।
होमं समाप्य विधिवत्पूर्णाहुत्यन्तमादरात् ॥
संपूज्य च पुनर्देवं क्षमाप्य च विसृज्य च ।
आचार्यं पूजयित्वा तु वस्त्रैराभरणैः शुभैः ॥
तस्मै तां प्रतिमां कुम्भं सहिरण्यं च दापयेत् ।
सौवर्णीं प्रतिमां दद्मि व्रतसंपूर्तिहेतवे ॥
प्रीयतां भगवान्देवो मम संसारतारकः ।
कपिलां च तथा शय्यां दत्त्वा शक्त्यनुसारतः ॥

विप्रान्द्वादश संपूज्य गन्धपुष्पाक्षतादिभिः ।
तेभ्यस्तु कलशान्दद्याद्वासःस्रग्गन्धभूषितान् ॥
ससुवर्णान्द्वादशैव पक्वान्नफलसंयुतान् ।
लवणं कांस्यपात्रस्थं ससुवर्णं च दापयेत् ॥
ब्राह्मणान्भोजयेद्भक्त्या मिष्टान्नैर्द्वादश प्रभो ।
दम्पत्योर्भोजनं देयं परमान्नसमन्वितम् ॥
ततस्तु दक्षिणा देया समभ्यर्च्य स्रगादिभिः ।
उपहारादि तत्सर्वं गुरवे प्रतिपादयेत् ॥
गुरुं तत्रैव संतोष्य ब्राह्मणांश्च विसर्जयेत् ।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं तु यत्कृतम् ॥
तत्सर्वं पूर्णतां यातु भूमिदेवप्रसादतः ।
अनुव्रज्य गुरुं विप्रान्भोजनं तु समाचरेत् ॥
वृद्धैश्च बन्धुभिः सार्धं नत्वा देवं दिवाकरम् ।
एवं यः कुरुते मर्त्यो वित्तशाठ्यविवर्जितः ॥
सूर्यव्रतं महाराज तस्य पुण्यमनन्तकम् ॥ इति ।

**अथ रविवारव्रतप्रयोगः**—तत्र व्रतकर्ता शनिदिने हविष्याशनब्रह्मचर्यादिनियमवान् रवौ मुहूर्तावशिष्टायां रात्रावुत्थाय अरुणोदये नद्यादौ स्नात्वा संध्यातर्पणसूर्यार्घ्यदानानि विधाय गृहानागत्य गोमयोपलिप्ते देशे स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेति गणेशाय पुष्पाञ्जलिं

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने ॥

इति सूर्याय च पुष्पाञ्जलिं समर्प्य व्रतस्वीकारं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम समस्तरोगनिरसनद्वारा आयुष्यादिसकलकामनासिद्ध्ये श्रीभास्करदेवप्रीतये रविवारव्रतं करिष्ये । जलपूर्णं ताम्रपात्रं करयोः कृत्वा—

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु भास्करस्य प्रसादतः ॥

इति देवाग्रे भूमौ जलमुत्सृजेत् । ततः सामान्यार्घ्यस्थापनादिविशेषार्घ्यस्थापनान्तं विधाय पूजासङ्कल्पं कुर्यात्–ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम समस्तरोगनिरसनद्वारा आयुष्यादिसकलकामनासिद्धये श्रीभास्करदेवप्रीतये रविवारव्रताङ्गत्वेन यन्त्रलिखितस्य सपरिवारस्य श्रीभास्करदेवस्य यथामिलितोपचारैः पूजनं करिष्ये । "एतन्ते०" "मनोजूतिः०" इत्याद्यन्ते ॐ भूर्भुवःस्वः श्रीभास्करदेव साङ्ग सपरिवार इहागच्छ इह तिष्ठ इति रक्तचन्दनेन लिखितताम्रपात्रस्थमूर्तिमण्डलं स्थापयेत् ।

ध्यानम्—

तेजोरूपं सहस्रांशुं मत्ताश्वरथवाहनम् ।
द्विभुजं वरदं पद्मलाञ्छनं सर्वकामदम् ॥
जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥

ॐ नमो भगवते आदित्याय । आवाहनम्--

आगच्छ भगवन्सूर्य मण्डलेऽस्मिन् स्थिरो भव ।
यावत्पूजा समाप्येत तावत्त्वं सन्निधौ भव ॥

ॐ नमो० । आसनम्--

हेमासनं महादिव्यं नानारत्नविभूषितम् ।
मद्दत्तं गृह्यतां देव दिवाकर नमोऽस्तु ते ॥

ॐ नमो० । पाद्यम्--

गङ्गाजलं समानीतं परमं पावनं महत् ।
पाद्यं गृहाण देवेश धामरूप नमोऽस्तु ते ॥

ॐ नमो० । अर्घ्यम्--

भो भो सूर्य महद्भूत ब्रह्मविष्णुशिवात्मक ।

अर्घ्यं भक्त्या मया दत्तं गृहाण परमेश्वर ॥

ॐ नमो० । आचमनीयम्--

गङ्गादितीर्थजं तोयं जातिपुष्पैः सुवासितम् ।
ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् ॥

ॐ नमो० । मलापकर्षस्नानम्—

जान्हवीजलमत्यन्तं पवित्रकरणं परम् ।
स्नानार्थं तु मयाऽऽनीतं स्नानं कुरु जगत्पते ॥

ॐ नमो० । पञ्चामृतस्नानम्—

पयोदधिघृतैश्चैव शर्करामधुसंयुतैः ।
कृतं मया च स्नपनं भास्करः प्रीयतां मम ॥

ॐ नमो० । शुद्धोदकगन्धोदकस्नानम्--

गङ्गा गोदावरी चैव यमुना च सरस्वती ।
नर्मदा सिन्धुकावेरी ताभ्यः स्नानार्थमाहृतम् ॥
तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥

ॐ नमो० । मूलेन स्नानाङ्गमाचमनीयम् । वस्त्रम्—

रक्तवस्त्रयुगं देव सूक्ष्मतन्तुविनिर्मितम् ।
शुद्धं चैव मया दत्तं गृहाण परमेश्वर ॥

ॐ नमो० । मूलेन वस्त्राङ्गमाचमनीयम् । यज्ञोपवीतम्--

नमः कमलहस्ताय विश्वरूपाय ते नमः ।
उपवीतं मया दत्तं तद् गृहाण दिवाकर ॥

ॐ नमो० । मूलेन यज्ञोपवीताङ्गमाचमनीयम् । गन्धः—

कुङ्कुमागुरुकस्तूरीसुगन्धैश्चन्दनादिभिः ।
रक्तचन्दनसंयुक्तं गन्धं गृह्ण प्रभाकर ॥

ॐ नमो० । अक्षताः—

रक्तचन्दनसंमिश्रा अक्षताश्च सुशोभनाः ।
मया दत्तास्तान गृहाण वरदो भव भास्कर ॥

ॐ नमो०। पुष्पाणि—

जपाकदम्बकुसुमरक्तोत्पलयुतानि च।
गृहाण देव पुष्पाणि सर्वकामप्रदो भव॥

ॐ नमो०। अथ गन्धाक्षतपुष्पैः पूर्वादिदलेषु सूर्यादीन् पृथङ्नामभिः पूजयेत्—

ॐ सूर्याय नमः १। ॐ रवय० २। ॐ विवस्वते० ३। ॐ भगाय० ४। ॐ वरुणाय० ५। ॐ मित्राय० ६। ॐ आदित्याय० ७। ॐ विष्णवे० ८। मध्ये-ॐ भास्कराय० ९। ॐ अरुणमाठरपिङ्गलदण्डादिसर्वपरिवारदेवताभ्यो० १०। सर्वावरणसहिताय ॐ नमो भगवते आदित्याय० ११।

अथाङ्गपूजा—आर्द्राक्षतान्प्रगृह्य ॐ मित्राय नमः पादौ पूजयामि। ॐ रवये० जङ्घे०। ॐ सूर्याय० जानुनी०। ॐ खगाय० ऊरू०। ॐ पूष्णे० गुह्यं०। ॐ हिरण्यगर्भाय० कटिं०। ॐ मरीचये० नाभिं०। ॐ आदित्याय० जठरं०। ॐ सवित्रे० हृदयं०। ॐ अर्काय० स्तनौ०। ॐ भास्कराय० कण्ठं०। ॐ अर्यम्णे० स्कन्धौ०। ॐ प्रभाकराय० हस्तौ०। ॐ अहस्कराय० मुखं०। ॐ ब्रध्ने० नासिकां०। ॐ जगदेकचक्षुषे० नेत्रे०। ॐ सवित्रे० कर्णौ०। ॐ त्रिगुणात्मधारिणे० ललाटं०। ॐ विरिञ्चिनारायणशंकरात्मने० शिरः०। ॐ तिमिरनाशिने० सर्वाङ्गं०। धूपः—

दशाङ्गगुग्गुलोद्भूतः कालागुरुसमन्वितः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

ॐ नमो०। दीपः—

कार्पासवर्तिसंयुक्तं गोघृतेन समन्वितम्।

दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥

ॐ नमो० । नैवेद्यम्--

पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् ।
नैवेद्यं च मया दत्तं गृहाण सुरसत्तम ॥

ॐ नमो० । मध्येपानीयम् ।

क्षणं ध्यात्वा जपं विधाय समर्प्य नैवेद्यमुद्रास्य आचमनीयम्--

कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ॥

ॐ नमो० । करोद्वर्तनार्थे गन्धः--

मलयाचलसंभूतं कर्पूरेण समन्वितम् ।
करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥

ॐ नमो० । फलानि--

फलान्यमृतकल्पानि स्थापितानि पुरस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि ज्जन्मनि ॥

ॐ नमो० । ताम्बूलं--

एलालवङ्गकर्पूरखादिरैश्च सपूगकैः ।
नागवल्लीदलैर्युक्तं ताम्बूलं प्रतिगृह्यताम् ॥

ॐ नमो० । दक्षिणा--

दक्षिणा काञ्चनी देव स्थापिता पुरतस्तव ।
गृहाण सुमुखो भूत्वा प्रभाकर नमोऽस्तु ते ॥

ॐ नमो० । नीराजनम्--

पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम् ।
नीराजनं गृहाणेदं सर्वसौख्यकरो भव ॥

ॐ नमो० । विशेषार्घ्यः--

रक्तगन्धाक्षतैर्युक्तं फलपुष्पाम्बुसंयुतम् ।

जानुभ्यामवनीं गत्वा सूर्यायार्घ्यं निवेदयेत् ॥

तत्र मन्त्रः--

नमः सहस्रकिरण सर्वव्याधिविनाशन ।
गृहाणार्घ्यं मया दत्तं संज्ञया सहितो रवे ॥

ॐ नमो० इति त्रिर्दद्यात् । प्रदक्षिणाः—यानि कानिच० ॐ नमो । नमस्कारः—

नमः पङ्कजहस्ताय नमः पङ्कजमालिने ।
नमः पङ्कजनेत्राय भास्कराय नमो नमः ॥

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने ॥

भानो भास्कर मार्तण्ड चण्डरश्मे दिवाकर ।
आरोग्यमायुर्विजयं विद्यां देहि नमोऽस्तु ते ॥
नमः सर्वहितार्थाय जगदाधारहेतवे ।
साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥

ॐ नमो० । अथ वायनदानम्-रक्तवस्त्रयुगहिरण्यसहितं तण्डुलपूरितपात्रं "हिरण्यगर्भ०" इति संप्रोक्ष्य सम्पूज्य ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं रविवासरव्रताङ्गत्वेन कृतायाः श्रीभास्करपूजायाः साद्गुण्यार्थं साङ्गफलप्राप्तये श्रीभास्करदेवप्रीतये इदं वायनं ब्राह्मणाय दास्ये । ब्राह्मणं संपूज्य दद्यात्—

तण्डुलैः पूरितं पात्रं हिरण्येन समन्वितम् ।
रक्तवस्त्रयुगं चैव ब्राह्मणाय निवेदये ॥

ततः प्रार्थना—

यस्योदये स्याज्जगतः प्रबोधो
यः कर्मसाक्षी भुवनस्य गोप्ता ।
कुष्ठादिकव्याधिविनाशको यः

स भास्करो मे दुरितं निहन्यात् ॥

ॐ नमो० । आवाहनं न जानामि० मन्त्रहीनं० ॐ अच्युताय नमः ॐ विष्णवे नमः कायेन वाचा० इत्यादि कर्मेश्वरार्पणं कृत्वा ब्राह्मणं संभोज्य लवणदुग्धोष्णोदकादिवर्ज्यवर्जितं हविष्यमेकवारं दिवैवाश्नीयात् ।

इति रविवारव्रतपूजाप्रयोगः ।

अथ रविवारव्रतोद्यापनप्रयोगः—तत्र यजमानः द्वादशाब्दं पूर्वोक्तरविवासरव्रतमनुष्ठाय शुभे दिने सति संभवे पौषार्कवारे प्रातरुत्थाय सुस्नातः कृतनित्यक्रियो गुरुगृहं गत्वा गुरुं चरणकमले संगृह्य प्रार्थयेत्—

उद्यापनं करिष्येऽहमागच्छ मम वेश्मनि ।
त्वदाज्ञया गुरो मेऽद्य सर्वं सिध्यतु कर्म तत् ॥ इति ।

ततो गुरुमग्रतः कृत्वा स्वगृहमानीय स्वासने उपवेश्य स्वयं प्रक्षालितपाणिपादः स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य गुरोराज्ञां गृहीत्वा स्वस्तिवाचनपूर्वकं गणेशपूजनं कुर्यात् । तत्र विशेषार्घ्यस्थापनान्ते पूजासंकल्पः-ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणरविवासरव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्ध्ये श्रीमद्भगवतो गणेशस्य पूजनं करिष्ये ।

इति संकल्प्य ध्यानावाहनादिपूजां विधाय पुनरर्घ्यं संस्थाप्य प्रधानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्याद्यमुकोऽहं द्वादशवर्षपर्यन्तमनुष्ठितस्य रविवासरव्रतस्य संपूर्णतासिद्ध्ये यथोक्तफलावाप्तये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेनेत्यादि आचार्यब्रह्मवरणान्तं पूर्ववद्विधाय मित्रादिद्वादशब्राह्मणान् वृणुयात् ।

तत्र उत्तमान् द्वादश ब्राह्मणान् उत्तरदृढ्या आसनेषूपवेश्य वरणसामग्रीं संपाद्य संकल्पं कुर्यात् ॐ विष्णुः ३ अमुकोऽहमस्मिन् रविवासरव्रतोद्यापनकर्मणि व्रतसंपत्तिहेतुद्वादशकलशप्रति-

ग्रहार्थमृत्विक्त्वेन च मित्रादिस्थानीयान् द्वादश ब्राह्मणान वृणे। ततो गन्धाक्षतपुष्पमालाभिः तान्संपूज्य वरणक्रमेण एकैकं वृणुयात्। वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पफलद्रव्ययज्ञोपवीतवासोभिरस्मिन् रविवासरव्रतोद्यापनकर्मणि मित्ररूपं त्वामहं वृणे। वृतोऽस्मीति प्रत्युक्तिः। एवमग्रेऽपि विष्णुरूपम् अरुणरूपम् सूर्यरूपम् भानुरूपम् तपनरूपम् इन्द्ररूपम् रविरूपम् गभस्तिरूपम् शमनरूपम् हिरण्यरेतोरूपम् दिनकररूपम्।

ततः सर्वेभ्यो 'नमोऽस्त्वनन्ताय०' इति नमस्कुर्यात्। तत आचार्यो मण्डपवेद्यां रक्ततण्डुलैर्द्वादशदलं कमलं निर्माय सिन्दूरादिभिः परिपूर्य तन्मध्ये अव्रणं नवं कलशं संस्थाप्य तदुपरि तण्डुलपूर्णपात्रं निधाय तत्रापि रक्ताक्षतैर्द्वादशदलं विलिख्य अग्न्युत्तारणपूर्वकं प्रतिमां कुम्भोपरि द्वादशदलकर्णिकायां रौप्ये पीठे संस्थापयेत्। तत्संनिधौ अखण्डपट्टवस्त्रद्वयं संज्ञादेव्यै कौसुम्भं वस्त्रद्वयं कमण्डलुम् उपानहयुगलम् छत्रचामरवितानकिरीटकुण्डलादीनि यथाशक्ति संपादितानि शय्यां सुपूजितान् वस्त्रवेष्टितान् पक्वान्नफलसुवर्णादिदक्षिणासमेतान्गन्धोदकपूरितान् द्वादश कलशांश्च संस्थापयेत्।

ततो यजमानः सामान्यवत् विशेषार्घ्यस्थापनान्ते पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं रविवासरव्रतसंपूर्णतासिद्ध्यर्थं क्रियमाणव्रतोद्यापनाङ्गत्वेन कमलद्वादशदलेषु मित्रविष्णुवरुणसूर्यभानुतपनइन्द्ररविगभस्तिशमनहिरण्यरेतोदिनकृतां मध्ये सुवर्णप्रतिमायां संज्ञासहितस्य सहस्रकिरणस्य यथामिलितोपचारैः पूजनं करिष्ये इति संकल्प्य "एतन्ते०" "मनोजूतिः०" इति मन्त्रपाठान्ते ॐ भूर्भुवःस्वः मित्र इहागच्छ इह तिष्ठेति स्थापयेत्। ततः विष्णो अरुण सूर्य भानो तपन इन्द्र रवे गभस्ते शमन हिरण्यरेतः दिनकृत् मध्ये संज्ञासहित

सहस्रकिरण इति स्थापयेत्। ततो ध्यानावाहनादि पुष्प-समर्पणान्तं विधाय गन्धाक्षतपुष्पैः द्वादशदलेषु मध्ये च पृथङ्नामभिः पूजयेत्- ॐ मित्राय नमः। ॐ विष्णवे०। ॐ अरुणाय०। ॐ सूर्याय०। ॐ भानवे०। ॐ तपनाय०। ॐ इन्द्राय०। ॐ रवये०। ॐ गभस्तये०। ॐ शमनाय०। ॐ हिरण्यरेतसे०। ॐ दिनकृते०। ॐ संज्ञासहिताय सहस्रकिरणाय०।

अथाङ्गपूजा- ॐ सूर्याय नमः पादौ पूजयामि। अरुणाय० जङ्घे०। माधवाय० जानुनी०। धात्रे० ऊरू०। हरये० कटिं०। भर्गाय० गुह्यं०। सुवर्णरेतसे० नाभिं०। अत्रये० जठरं०। दिवाकराय० हृदयं०। तपनाय० कण्ठं०। भानवे० स्कन्धौ०। हंसाय० हस्तौ०। मित्राय० मुखं०। रवये० नासिकां०। खगाय० नेत्रे०। पूष्णे० कर्णौ०। हिरण्यगर्भाय० ललाटं०। आदित्याय० शिरः०। भास्कराय० सर्वाङ्गं०।

अथ मण्डलपूजा—पूर्वेशान्योर्मध्ये-ॐ दीप्तायै नमः। पूर्वाग्नेय्योर्मध्ये-सूक्ष्मायै०। अग्नियमयोरन्तराले-यमायै०। यमनिर्ऋत्योरन्तराले-भद्रायै०। रक्षोवरुणयोर्मध्ये-विभूत्यै०। वरुणपवनयोर्मध्ये-विमलायै०। वायुसोमयोर्मध्ये-अमोघायै०। सोमेशयोर्मध्ये-विद्युतायै०। पद्ममध्ये-सर्वतोमुख्यै०।

पूर्वादिद्वादशदलान्तरेषु क्रमेण- ॐ सूर्याय नमः। दिवाकराय० विवस्वते० यमाय० भगाय० मार्तण्डाय० वरुणाय० महेन्द्राय० रवये० आदित्याय० शान्ताय० पूष्णे०। ॐ आदित्यदुर्गेभ्यो नमः। कर्णिकायां-भास्कराय०। बीजकोशे-सूर्याय०। मध्ये-सोमाय०। आग्नेये-भौमाय०। दक्षिणे-बुधाय०। ईशाने०-बृहस्पतये०। उत्तरे-शुक्रा-

य०। पूर्वे-शनैश्चराय०। पश्चिमे-राहवे०। नैर्ऋत्ये-केतवे०। ततः पूर्वादिक्रमेण इन्द्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० कुबेराय० ईशानाय० ब्रह्मणे० अनन्ताय०। प्रकोष्ठे कोष्ठवीथीषु दशदिक्षु च—द्वादशराशिभ्यो० अष्टाविंशतिनक्षत्रेभ्यो० सप्तविंशतियोगेभ्यो० कलाभ्यो० दिव्यकलाभ्यो० मुहूर्तकरणेभ्यो० तिथिभ्यो० पक्षेभ्यो० मासेभ्यो० ऋतुभ्यो० अयनाभ्यां० संवत्सरेभ्यो० युगेभ्यो० मन्वन्तरेभ्यो०। ॐ संज्ञासहितसहस्रकिरणाय नमः। ततो धूपादि क्षमापनान्तं पूर्ववद्विधाय तां रात्रिं गीतनृत्यपुरस्सरं जागरणेन निनयेत्।

ततो द्वितीयदिने प्रातर्नित्यकृत्यान्ते देवं पुनः संपूजयेत्। अथाचार्यः स्थण्डिले अग्निस्थापनादि तत्पूजान्तं कर्म कुर्यात्। ततो यजमानः द्रव्यत्यागसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं रविवासरव्रतोद्यापनाङ्गहोमकर्मणा यक्ष्ये। तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन सहस्रकिरणं समित्पायसाज्येन समित्तिलाज्येन वा द्वादशशतसंख्याकाहुतिभिः "आकृष्णेन०" इति मन्त्रेण अग्निं स्विष्टकृतमित्यादि प्रजापतिं चाज्येन यक्ष्ये। एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम्। ॐ तत्सत् यथादैवतमस्तु न मम। ततो ब्रह्मणाऽन्वारब्ध आचार्यः देवताभिध्यानवत्सर्वं होमं विदध्यात्। यजमानो ब्रह्मणे पूर्णपात्रं दद्यात्। ततो देवमुत्तराङ्गत्वेन संपूज्य पूर्णाहुतिं हुत्वा होमसाङ्गतां च दत्त्वा प्रार्थयेत्—

व्रतोद्यापनकं देव यद्भक्त्या तु मया कृतम्।
न्यूनं वाऽथ क्रियाहीनं परिपूर्णं तदस्तु मे॥

इति संप्रार्थ्य मूलेन पुष्पाञ्जलिं समर्प्य, न्यूनातिरिक्तानि० मन्त्रहीनं० यान्तु देवगणाः० इति विसर्जयेत्।

अथ प्रतिमादानसंकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमस्मिन् रविवासरव्रतोद्यापनाख्यकर्मणि सुपूजितामिमां सौवर्णीमादित्यप्रतिमां कुम्भाद्युपस्करसहितां व्रतोद्यापनसंपूर्तिहेतवे श्रीआदित्यदेवप्रीतये आचार्याय दास्ये इत्याचार्यं संपूज्य दद्यात्—

सौवर्णीं प्रतिमां दद्मि व्रतसंपूर्तिहेतवे ।
प्रीयतां भगवान्देवो मम संसारतारकः ॥
रवे प्रसीद देवेश सर्वलोकेश्वर प्रभो ।
तव रूपप्रदानेन मम सन्तु मनोरथाः ॥ इति ।

अथ द्वादशकलशदानसंकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं फलपक्वान्नसुवर्णादिदक्षिणासमेतान् वस्त्रपरिवेष्टितान् सुपूजितान् गन्धोदकपूरितान् व्रतसंपूर्तिहेतूनिमान् द्वादशकलशान् मित्रादिरूपेभ्यो ब्राह्मणेभ्यो दातुमुत्सृजे । इति तान्संपूज्य वरणक्रमेण दद्यात् ।

अथ लवणपात्रदानम्—कांस्यपात्रस्थं ससुवर्णं लवणं संप्रोक्ष्य संपूज्य एतद्व्रतं लवणवर्जनरूपव्रतस्य साङ्गतायै श्रीआदित्यदेवप्रीतये कांस्यपात्रस्थं ससुवर्णमिदं लवणं ब्राह्मणाय दास्ये इति ब्राह्मणं संपूज्य दद्यात् ।

ततः कपिलादानं शय्यादानं च विधाय भूयसीं दक्षिणां मिष्टान्नेन परमान्नेन द्वादशब्राह्मणभोजनं द्विजदाम्पत्यभोजनं च सङ्कल्प्य भूयसीं विभज्य दत्त्वा अभिषेकतिलकरक्षाबन्धनादि विधाय आशिषः प्रतिगृह्य कर्मेश्वरार्पणं कृत्वा ब्राह्मणान् संभोज्य अनुव्रज्य प्रार्थयेत्—

मन्त्रहीनं क्रियाहीनं भक्तिहीनं तु यत्कृतम् ।
तत्सर्वं पूर्णतां यातु भूमिदेवप्रसादतः ॥ इति ।

ततस्तदनुज्ञया इष्टजनबन्धुभिः सह भुञ्जीत ।

इति रविवासरव्रतोद्यापनप्रयोगः ।

अथ सोमवारव्रतविधिः स्कान्दे—

शिवपूजा सदा लोके हेतुः स्वर्गापवर्गयोः ।
सोमवारे विशेषेण प्रदोषादिगुणान्विते ॥
श्रावणे चैव वैशाखे ऊर्जे वा मार्गशीर्षके ।
प्रथमे सोमवारे तद् गृह्णीयाद् व्रतमुत्तमम् ॥
केवलं चापि ये कुर्युः सोमवारे शिवार्चनम् ।
न तेषां विद्यते किञ्चिदिहामुत्र च दुर्लभम् ॥
उपोषितः शुचिर्भूत्वा सोमवारे जितेन्द्रियः ।
वैदिकैर्लौकिकैर्मन्त्रैर्विधिवत्पूजयेच्छिवम् ॥
ब्रह्मचारी गृहस्थो वा कन्या वाऽपि सभर्तृका ।
विधवा वाऽपि संपूज्य लभते वरमीप्सितम् ॥ इति ।

तथा सोमवारव्रतोद्यापनविधिः स्कान्दे—

उद्यापनविधिं चैव कथयामि तवाग्रतः ।
यदा संजायते चित्तं भक्तिश्रद्धासमन्वितम् ॥
स एव व्रतकालः स्याद्यतोऽनित्यं हि जीवितम् ।
चलं चित्तं चलं वित्तं चलं जीवितमेव च ॥
एवं ज्ञात्वा प्रयत्नेन व्रतस्योद्यापनं चरेत् ।
चतुर्दशाब्दं कर्तव्यं द्वादशाब्दमथापि वा ॥
श्रावणे कार्तिके माघे वैशाखे मार्गशीर्षके ।
सुस्नातश्च शुचिर्भूत्वा शुक्लाम्बरधरो नरः ॥
कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः ।
संपाद्य सर्वसंभारान् मण्डपं तत्र कारयेत् ॥
वस्त्रैः पुष्पैः समाच्छन्नं पट्टवस्त्रैश्च शोभितम् ।
तन्मध्ये लेखयेद्दिव्यं लिङ्गतोभद्रमण्डलम् ॥
अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत् ।
शोभोपशोभासहितं दीपैः सर्वत उज्ज्वलम् ॥

अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत् ।
सौवर्णं राजतं ताम्रं मृन्मयं वाऽपि कारयेत् ॥
कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम् ।
उमामहेश्वरीं मूर्तिं पूजयेद् वृषभे स्थिताम् ॥
उमामहेश्वरौ हैमौ यथाशक्त्या प्रकल्पितौ ।
राजतं वृषभं चैव यथाशक्त्युपकल्पितम् ॥
वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् ।
आचार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिम् ॥
घटप्रतिग्रहार्थं वै त्रयोदश च ब्राह्मणान् ।
शिवरूपाश्च ते विप्राः पूज्याश्चन्दनपुष्पकैः ॥
अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् ।
रुद्रनाम्ना नमोऽन्तेन ब्राह्मणानपि पूजयेत् ॥
शय्यां तूलीं तथाऽऽदर्शं छत्रचामरपादुकाः ।
देवस्याग्रे संप्रकल्प्य रात्रौ जागरणं चरेत् ॥
प्रभाते नित्यकृत्यान्ते पुनर्देवं समर्चयेत् ।
स्वगृह्योक्तेन विधिना कृत्वाऽग्निस्थापनं ततः ॥
तत्र होमं च मन्त्रेण त्र्यम्बकेण च कारयेत् ।
गौरीर्मिमायमन्त्रेण शतमष्टोत्तरद्वयम् ॥
पलाशानां समिद्भिश्च यवव्रीहितिलाज्यकैः ।
पूर्णाहुतिं ततो दद्यात्कृत्वा स्विष्टकृदादिकम् ॥
होमान्ते च गुरुं पूज्य सपत्नीकं समाहितः ।
प्रतिमां कुम्भसहितामाचार्याय निवेदयेत् ॥
शम्भो प्रसीद··········मनोरथाः ।
यद्भक्त्या··········तदस्तु मे ॥
ब्राह्मणान् पूजयेत्पश्चात्त्रयोदश सुशोभनान् ।
वस्त्रालंकाररत्नाढ्या तेभ्यो देया च दक्षिणा ॥

त्रयोदश घटा देया वंशपात्रसमन्विताः ।
पक्वान्नफलसंयुक्ता नानाभक्ष्यसमन्विताः ॥
सोपस्कारा ततः शय्या देया शक्त्युपकल्पिता ।
धेनुः श्वेताऽथ कपिला सुशीला च पयस्विनी ॥
दक्षिणासहिता देया शिवो मे प्रीयतामिति ।
धेनुर्वै.............................................सदाशिवः ॥
भूयसीं दक्षिणां दद्यात् ब्राह्मणान् भोजयेत्ततः ।
त्रयोदश सहाचार्यानन्यांश्चैव यथोचितम् ॥
भुञ्जीत सह धर्मात्मा शिष्टैरिष्टैश्च बन्धुभिः ॥ इति ।

**अथ सोमवारव्रतपूजाप्रयोगः**—तत्र व्रती सोमवारे प्रातर्नित्यकृत्यं विधाय व्रतग्रहणं कुर्यात् । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि मम सकुटुम्बस्य क्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्ध्यर्थं श्रीउमामहेश्वरप्रीतये सोमवारव्रतं करिष्ये इति संकल्प्य जलपूर्णताम्रपात्रं करयोः कृत्वा 'इदं व्रतम्' इति पठित्वा देवाग्रे भूमौ जलं प्रक्षि(१)पेत् । ततः प्रदोषपूर्वकाले स्नातः शिवालयस्थापितलिङ्गे गृहे बाणपार्थिवलिङ्गादौ वा पूजां कुर्यात् । तत्र स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेत्यादिना गणेशाय 'ॐ नमः शम्भवाय' इत्यादि 'शिवाय च' इत्यन्तं मन्त्रं पठित्वा शिवाय च पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यादिविशेषार्घ्यस्थापनान्ते पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम सकुटुम्बस्य ( सकुटुम्बाया वा ) क्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्धये श्रीउमामहेश्वरप्रीतये सोमवारव्रताङ्गत्वेन उमामहेश्वरपूजनं यथामिलितोपचारैः करिष्ये । पीठे वामायै नमः इत्यादिना पीठपूजां विधाय पार्थि·

(१) प्रथमसोमवारे नवीनव्रतग्रहणे त्वित्यादि(पृ.१३२,टि.) पूर्ववत् । यावज्जीवं इत्यस्य स्थाने चतुर्दशाब्दं द्वादशाब्दं श्रावणादिमासं वा इत्यूहः कार्यः ।

वलिङ्गपक्षे "एतन्ते" "मनोजूतिः" इति मन्त्रपाठान्ते ॐ भूर्भुवः स्वः भो उमामहेश्वरौ इहागच्छतम् इह तिष्ठतम् इति प्रतिष्ठाप्य प्राणप्रतिष्ठां च विधाय ध्यायेत्–ध्यायेन्नित्यं० कर्पूरगौरम्० ॐ महाकालाय शूलिने शम्भवे सोमाय नमः इति मन्त्रेण आवाहनादि पुष्पाबिल्वपत्रान्तं समर्प्य पूर्वादिक्रमेण परिवारदेवताः पूजयेत् । ॐ विष्णवे नमः। ब्रह्मणे० स्कन्दाय० महाकालाय० शूलिने० उमायै० महेश्वराय० चण्डाय० ।

ततोऽङ्गपूजा–ॐ भवहारिणे नमः पादौ पूजयामि । शूलपाणये० गुल्फौ० । शंकराय० जङ्घे० । शिवाय० जानुनी० । शंभवे० कटिं० । स्वयंभुवे० गुह्यं० । महादेवाय० नाभिं० । विश्वकर्त्रे० उदरं० । सर्वतोमुखाय० पार्श्वे० । स्थाणवे० स्तनौ० । नीलकण्ठाय० कण्ठं० । श्रीकण्ठाय० मुखं० । त्रिनेत्राय० नेत्रे० । शशिभूषणाय० मुकुटं० । देवाधिदेवाय० सर्वाङ्गं० । ततः पूर्वोक्तेनैव मन्त्रेण धूपादि नीराजनान्तं संपूज्य यानि कानि च० इति प्रदक्षिणाष्टकं कृत्वा नमस्कारान्कुर्यात्—

दशभुजाय त्रिनेत्राय पञ्चवक्त्राय शूलिने ।
सुश्वेतवृषमारूढसुश्वेताभरणाय वै ॥
उमासहिताय नमस्त्राहि मां कृपया विभो ।
देव त्वं शरणं नाथ देवदेव महेश्वर ॥

नन्दिकेश्वराय नमः इति नन्दिकेश्वरं संपूज्य मन्त्रपुष्पाञ्जलिं प्रार्थनां क्षमापनं च विधाय देवं विसृज्य दक्षिणासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं यथोक्तफलावाप्तये सोमवारव्रताङ्गत्वेन कृतायाः श्रीउमामहेश्वरपूजायाः साद्‌गुण्यार्थमिमां दक्षिणां ब्राह्मणाय दास्ये । ब्राह्मणं संपूज्य दक्षिणां दत्त्वा आशिषः प्रतिगृह्य कर्मेश्वरार्पणं कुर्यात् ।

**इति सोमवारव्रतपूजाप्रयोगः।**

**अथ सोमवारव्रतोद्यापनप्रयोगः**—तत्रोद्यापनकर्ता चतुर्दशाब्दं द्वादशाब्दं श्रावणादिमासपर्यन्तं वा व्रतमनुष्ठाय चन्द्रताराद्यनुकूले सोमवारे प्रातर्नित्यकृत्यं माध्याह्निकं च विधाय प्रदोषे पूजामण्डपे स्वासने उपविश्य दीपप्रज्वालनादि गणेशपूजनान्तं कुर्यात् । तत्र संकल्पः ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ( अमुक्यहं वा ) करिष्यमाणसोमवारव्रतोद्यापनकर्मणि निर्विघ्नतासिद्ध्यर्थे श्रीभगवतो गणेशस्य पूजनं करिष्ये इति । ततः प्रधानसंकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ( अमुक्यहं वा ) उद्यापनकल्पोक्तफलावाप्तये एतावत्कालपर्यन्तमनुष्ठितस्य सोमवारव्रतस्य साद्गुण्यार्थं श्रीउमामहेश्वरप्रीतये उद्यापनं करिष्ये । तत्पूर्वाङ्गत्वेनेत्यादि लिङ्गतोभद्रमण्डलदेवतास्थापनपूजनान्तं तदभावपक्षे च केवलतण्डुलराश्यन्तमेव वा विधाय तदुपरि कलशं संस्थाप्य तत्र पूर्णपात्रं निधाय तस्मिन् अग्न्युत्तारणसंस्कृतां सौवर्णीं प्रतिमां राजतवृषभयुक्तां वस्त्रद्वयेन संवेष्ट्य सोमवारव्रतपूजाप्रयोगोक्तप्रकारेण पूजयेत् ।

तत्र संकल्पे विशेषः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ( अमुक्यहं वा ) सोमवारव्रतोद्यापनकर्मणि यथोक्तफलावाप्तये श्रीउमामहेश्वरप्रीतये स्वर्णप्रतिमायां यथामिलितोपचारैः श्रीउमामहेश्वरपूजनं करिष्ये । एवमेव आचार्यब्रह्मवरणान्तेऽपि त्रयोदशब्राह्मणवरणमिति विशेषः । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ( अमुक्यहं वा ) व्रतसम्पूर्तिहेतुघटदानप्रतिग्रहार्थे रुद्ररूपाणां त्रयोदशब्राह्मणानां वरणं करिष्ये । ततः उत्तरवृद्ध्या आसनेषु उपवेश्य प्रत्येकं गन्धाक्षतपुष्पमालाभिः 'ॐ रुद्राय नमः' इति मन्त्रेण सम्पूज्य एभिर्गन्धाक्षतपुष्पमालाफलद्रव्यवासोभिरस्मिन् सोमवारव्रतो-

द्यापनकर्मणि घटप्रतिग्रहार्थं भो ब्रह्मन् रुद्ररूपं त्वामहं वृणे। वृतोऽस्मीति प्रत्युक्तिः। एवं सर्वान् वृत्वा नमोऽस्त्वनन्ताय० इति सम्पूज्य प्रार्थयेत्—

अस्य यज्ञस्य निष्पत्त्यै भवन्तोऽभ्यर्थिता मया।
सुप्रसन्नैश्च कर्तव्यं कर्मेदं विधिपूर्वकम् ॥ इति।

एवं सर्वपूजनविधिं समाप्य छत्रचामरशय्यादिकं समर्प्य रात्रिं कथाश्रवणगीतवाद्यमङ्गलस्तवपाठादिना जागरणेन निनयेत्। ततो द्वितीयदिने नित्यकृत्यान्ते देवं पुनः सम्पूजयेत्। तत आचार्योऽग्निस्थापनादि तत्पूजनान्तं कर्म कृत्वा यजमानेन द्रव्यत्यागसंकल्पं कारयेत्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं ( अमुकयहं वा ) सोमवारव्रतोद्यापनहोमकर्मणा यक्ष्ये। तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन उमामहेश्वरौ अष्टशतसंख्याकाहुतिभिर्यवव्रीहितिलाज्यद्रव्येण समिद्भिश्च 'ॐ त्र्यम्बकं०' इति 'ॐ गौरीर्मिमाय०' इति च मन्त्रेण ब्रह्मादिमण्डलदेवतापक्षे ब्रह्मादिमण्डलदेवताः प्रत्येकमेकैकयाऽऽहुत्या आज्येन अग्निं वायुं……प्रजापतिं चाज्येन यक्ष्ये। एतद्धोमद्रव्यं……न मम। ततो ब्रह्मणाऽन्वारब्ध आचार्यो यथाऽभिध्यानं सर्वं होमं विधाय संस्रवप्राशनादि पूर्णाहुत्यन्तं कर्म कृत्वा अग्निपूजनादि त्र्यायुषकरणान्तमनुतिष्ठेत्। ततो यजमानः होमसाङ्गतां संकल्प्य दत्त्वा उत्तराङ्गत्वेन देवं सम्पूज्य प्रार्थयेत्—

यद् भक्त्या देवदेवेश मया व्रतमिदं कृतम्।
न्यूनं वाऽथ क्रियाहीनं परिपूर्णं तदस्तु मे ॥

ततः 'यान्तु देवगणाः०' इति देवं विसृज्य प्रतिमादानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अमुकोऽहं (अमुकयहं वा) कृतैतत्सोमवारव्रतोद्यापनकर्मणः साद्गुण्यार्थं साङ्गफलप्राप्तये श्रीउमामहेश्वरप्रीतये सुपूजितामिमां रौप्यवृषभस्थितां सौवर्णीमुमामहेश्वर-

ब्राह्म्यै नमः

वज्राय नमः

इन्द्राय नमः

माहेश्वर्यै नमः — शक्त्यै नमः — कृशानवे नमः

महालक्ष्म्यै नमः — त्रिशूलाय नमः — ईशानाय नमः

वक्राय नमः

३ ऋणहर्ता

भुमिपुत्रः २

२१ सर्वकर्म फलप्रदः

४ धनप्रदः

अघहर्ता २०

१९ वृष्टिकर्ता

१ मङ्गलः

स्थिरासनः ५

६ महाकायः

सर्वरोगापहारकः १८

१७ यमः

१२ कुजः

सर्वकर्मविरोधकः ७

८ लोहितः

भुमिनन्दनः १५

१६ अङ्गारकः

१४ भूतिदः

भौमः १३

११ धरात्मजः

सामगानां कृपाकरः १०

९ लोहिताक्षः

चामुण्डायै नमः — गदायै नमः — सोमाय नमः

यमाय नमः — दण्डाय नमः — कौमार्यै नमः

अराय नमः — निर्ऋतये नमः — खड्गाय नमः — वैष्णव्यै नमः

मकराय नमः — अङ्कुशाय नमः — इन्द्राण्यै नमः

वरुणाय नमः

पाशाय नमः

वाराह्यै नमः

प्रतिमां कुम्भाद्युपस्करसहितामाचार्याय दास्ये । सपत्नीकमाचार्यं संपूज्य—

शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो ।
तव रूपप्रदानेन मम सन्तु मनोरथाः ॥

इति दद्यात् । मण्डपादिकं च निवेदयेत् । ततस्त्रयोदशघटदानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अमुकोहं (अमुकयहं वा) व्रतसंपूर्तिकारणीभूतान् नानाविधफलपक्वान्नपूरितवंशपात्रसहितान् वस्त्रसुवर्णोपेतान् सुपूजितानिमान् त्रयोदश घटान् रुद्ररूपेभ्यो ब्राह्मणेभ्यो दातुमुत्सृजे । ॐ तत्सन्न मम । उत्तरवृद्ध्या वृतान् ब्राह्मणान् संपूज्य दद्यात् । ततः शय्यादानं विधाय गोदानं दद्यात्—

धेनुर्वै जगतां माता नित्यं विष्णुपदे स्थिता ।
सवत्सा च मया दत्ता प्रीयतां मे सदाशिवः ॥ इति ।

ततस्तिलपात्रघृतच्छाया अच्छिद्रवाचनभूयसीदक्षिणादानानि विधाय कर्मेश्वरार्पणं कृत्वा अभिषेकतिलकरक्षाबन्धनान्ते आशिषः प्रतिगृह्य आचार्यादीनन्यांश्च ब्राह्मणान् संभोज्य दक्षिणां दत्त्वा तदनुज्ञया स्वयमपि भुञ्जीत ।

इति सोमवारव्रतोद्यापनप्रयोगः ।

## अथ भौमवारव्रतविधिः—

लिखित्वा फलके यन्त्रं रक्तचन्दनदारुणि ।
एकविंशतिसंख्याकैः कोष्ठैः कृत्वा त्रिकोणकम् ॥
तस्मिन्नावाहयेद् भौमं सुब्रह्मण्यं धरासुतम् ।
ततश्च पूजयेद्देवं पूज्यं वृद्धिकरं परम् ॥
भौमं भक्तप्रियं शान्तं नाममन्त्रैश्च पूजयेत् । इति ।

यन्त्रोद्धारश्च संग्रहे—

त्रिकोणं पूर्वमुद्धृत्य पञ्चधा विभजेत्ततः ।

तृतीयरेखां चिह्नाभ्यां लाञ्छयेत् समभागतः ॥
आद्यरेखाग्रयुगलं तृतीयाचिह्नयोर्न्यसेत् ।
द्वितीयाग्रे समाकृष्य तृतीयाचिह्नयोर्न्यसेत् ॥
पुनः रेखां तृतीयां तु द्विधा भज्यात्समांशकम् ।
तुर्यां चिह्नद्वयेनाथ त्रिभिश्चिह्नैस्तु पञ्चमीम् ॥
तृतीयाग्रे प्रकुर्वीत पञ्चम्या मध्यचिह्निते ।
तुर्याग्रे योजयेत्सम्यक् पञ्चम्याश्चिह्नयोर्द्वयोः ॥
चिह्नैस्तु पञ्चभिर्दद्यात् सूत्रयुग्मं विचक्षणः ।
एवमेकाऽधिका सम्यक् कोणानां विंशतिर्भवेत् ॥
तृतीयातुर्ययोर्मध्ये स्थितचिह्नगृहेऽर्चयेत् ।
देवं तदग्रतो मन्त्री त्रिकोणे दक्षिणक्रमात् ॥
मङ्गलाद्यान्तरे पूर्वान्नमोऽन्तानेकविंशतिः ।
एकविंशतिकोष्ठेषु नाममन्त्रान् समालिखेत् ॥
ततः पूजा प्रकर्तव्या पुत्रसम्पत्तिहेतवे । इति ।

अथ भौमवारव्रतोद्यापनविधिः पद्मपुराणे—

विधेयो मण्डपः सम्यगष्टहस्तप्रमाणतः ।
स्थण्डिलं मध्यतः कार्यमेकहस्तप्रमाणतः ॥
मण्डलं तु प्रकर्तव्यं मामकं रक्ततण्डुलैः ।
पूर्वोक्तानि च नामानि मण्डले पूजयेत्ततः ॥
एकविंशतिकोष्ठेषु चतुर्दीपान्वितेषु च ।
एकविंशतिकुम्भांश्च स्थापयित्वा मदग्रतः ॥
सौवर्णीं प्रतिमां तत्र स्थापयेत्कलशोपरि ।
रक्तवस्त्रेण संवेष्ट्य पूजयेत्कुसुमैः शुभैः ॥
अङ्गपूजा प्रकर्तव्या नामभिर्मम सर्वदा ।
मङ्गलाय च पादौ तु भूमिपुत्रेति गुह्यकम् ॥
ऋणहर्त्रेति नाभिं च हृदये च धनप्रदम् ।

स्थिरासनं चासने च महाकायं च वक्षसि ॥
बाह्वोः प्रपूजयेन्नित्यं सर्वकर्मावरोधकम् ।
लोहितं हस्तयोश्चैव लोहिताक्षं तु कण्ठके ॥
आस्ये संपूजयेन्मां च सामगानां कृपाकरम् ।
धरात्मजं नासिकायां कुजं च नयनद्वये ॥
भौमं ललाटे संपूज्य भूतिदाय भ्रुवोस्तथा ।
भूमिनन्दननामानं मूर्ध्नि संपूजयेत्तथा ॥
अङ्गारकं शिखायां तु यमं तु कवचे सदा ।
पूजयेदस्त्रदेशे तु सर्वरोगापहारकम् ॥
आकाशे वृष्टिकर्तारमपहर्ता ह्यधस्तथा ।
सर्वाङ्गे च प्रपूज्योऽस्मि सर्वकर्मफलप्रदः ॥
अग्निर्मूर्धेति मन्त्रेण होमं खादिरसंभवैः ।
अष्टोत्तरशतं हुत्वा दिक्पालांश्च हुनेत्ततः ॥
अनृणा इति मन्त्रेण मङ्गलाद्यैश्च नामभिः ।
गव्येनाज्येन जुहुयादष्टोत्तरशताहुतीः ॥
खादिरस्य समिद्भिस्तु रक्तचन्दनसर्पिषा ।
सहस्रं जुहुयान्मन्त्रो हविष्यान्तं पुरो जपेत् ॥

हविष्यान्तं सूक्तम् ।

ततः स्विष्टकृदं दद्यात् समिद्धे हव्यवाहने ।
दूर्वाभिः पञ्चशाखाभिरभिषेकं तु कारयेत् ॥
होमान्ते दक्षिणां दद्यादारक्तं वस्त्रयुग्मकम् ।
आचार्यं पूजयेत्पश्चाद्दद्याद्धेनुं सवत्सकाम् ॥
सोपस्करां प्रतिकृतिं गुरवे च निवेदयेत् ।
पूज्यैकविंशतिं विप्रान् दद्यात्कुम्भान् सवस्त्रकान् ॥
अच्छिद्रं वाचयेत्तेभ्यः सर्वे ब्रूयुर्व्रतं शुभम् ।
संपूज्य ब्राह्मणान् भक्त्या संभोज्य च सुभोजनैः ॥

दीनान्धकृपणेभ्यश्च दत्त्वा भोज्यं च दक्षिणाम् ।
इष्टबन्धुजनैः सार्द्धं स्वयं भुञ्जीत वाग्यतः ॥ इति ।

**अथ भौमवारव्रतपूजाप्रयोगः**—तत्र व्रतकर्ता भौमवासरे मूहूर्तावशिष्टायां रात्रावुत्थाय आवश्यकान्ते शुचिर्गुरवादिस्मरणपूर्वकं मङ्गलाचरणं पठेत्—

कनकमयशरीरस्तेजसा दुर्निरीक्ष्यो
हुतवहसमकान्तिर्मालवे यस्य जन्म ।
अवनितनय एष श्रूयते भारते यः
सृजतु मम विभूतिं मङ्गलः सुप्रभाते ॥ इति ।

ततोऽरुणोदयवेलायामपामार्गेण दन्तधावनं विधाय तिलामलकचूर्णेन नद्यादौ स्नात्वा धौतमारक्तवस्त्रं रक्तोत्तरीयं च परिधाय व्रतस्वीकारसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सपत्नीकः ऋणव्याधिनाशार्थं पुत्रधनप्राप्तये च भौमव्रतं करिष्ये । जलपूर्णं ताम्रपात्रं करयोः कृत्वा—

अद्य देवेश ते भक्त्या करिष्ये व्रतमुत्तमम् ।
ऋणव्याधिविनाशाय धनसन्तानहेतवे ॥

इति जलं देवाग्रे(१)निक्षिपेत् । ततो रक्तगोर्गोमयेन रक्तचन्दनसंपृक्तेन शुद्धदेशे भूमिं विलिप्य तत्र पूर्वोक्तं यन्त्रं संस्थाप्य रक्तवर्तिकोपेतं दीपं प्रज्वलय्य स्वासने उपविश्य आचम्य सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिं समर्प्य सामान्यार्घ्यस्थापनादि रक्तगन्धाक्षतपुष्पदूर्वासम्पन्नविशेषार्घ्यस्थापनान्तं विधाय पूजासंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम ऐहिकामुष्मिकऋणापाकरणपूर्वकधनपुत्रावाप्तये भौमवारव्रताङ्गत्वेन लिखितयन्त्रपीठे यथामिलितोपचारैः पूजनं क-

(१) प्रथमभौमवारे नवीनव्रतग्रहणे त्वित्यादि (पृ.१३२, टि.) पूर्ववत् । 'यावज्जीवं' इत्यस्य स्थाने 'एकविंशतिभौमवारं' इत्यूहः कार्यः ।

रिष्ये। तत्पूर्वाङ्गत्वेन कवचन्यासादिकं च करिष्ये।

अस्य श्रीमङ्गलकवचमन्त्रस्य भार्गवऋषिर्दैवीगायत्री-च्छन्दः, ऋणहर्ता धनप्रदो भूमिपुत्रोऽङ्गारको देवता, ममाभी-ष्टसिद्धये जपे विनियोगः। ॐ भार्गवऋषये नमः शिरसि। दैवीगायत्रीछन्दसे नमो मुखे। मङ्गलदेवतायै नमो हृदये। ॐ ह्रीं श्रीं क्लौं मङ्गलाय नमः इति मूलमन्त्रेण प्राणायामत्रयं कृत्वा जपेत्।

ॐ शिखायां मङ्गलः पातु भूमिपुत्रस्तु मूर्धनि।
ललाटे ऋणहर्ता च चक्षुषोश्च धनप्रदः॥
स्थिरासनः श्रवणयोर्महाकायस्तु नासयोः।
आस्यदन्तोष्ठजिह्वासु सर्वकर्मावरोधकः॥
हनौ मे लोहितः पातु कण्ठे लोहितलोचनः।
स्कन्धयोरुभयो रक्षेत् सामगानां कृपाकरः॥
धरात्मजो भुजौ पातु कुजो रक्षेत्करद्वयम्।
भौमो मे हृदयं पातु भूतिदस्तु तथोदरे॥
भूनन्दनस्तु स्तनयोः कटिमङ्गारकोऽवतु।
नाभिस्थानं सदारक्षेत्तथैव यमसंज्ञकः॥
वस्तिमेढ्रौ तथा रक्षेत्सर्वरोगापहारकः।
पातूर्वोर्वृष्टिकर्ता च त्वपहर्ता च जानुनी॥
पादाङ्गुष्ठौ च पादौ च सर्वकर्मफलप्रदः।
पातु मे पूर्वतः शूलं गदा रक्षतु दक्षिणे॥
पश्चिमे च धनू रक्षेदुत्तरे च शरस्तथा।
ऊर्ध्वं षडाननः पायादधस्तात्पृथिवी तथा॥
एवं तु कवचं कृत्वा ततः पूजां समाचरेत्। इति।

तत्रादौ रक्ताक्षतैः पीठपूजां कुर्यात्--

रक्तप्रभायै नमः। रक्ताक्ष्यै०। सुरक्तचरणायै०। अति-

रक्तसुगन्धायै० रक्तवसनायै० । रक्तदंष्ट्रायै० । रक्ताभरणायै० । रक्ताङ्गायै० ।

इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० । ब्रह्मणे० । अनन्ताय० ।

वज्राय० । शक्तये० । दण्डाय० । खड्गाय० । पाशाय० । अङ्कुशाय० । गदायै० । त्रिशूलाय० । कमण्डलवे० । चक्राय० ।

आदित्याय० । सोमाय० । भौमाय० । बुधाय० । गुरवे० । शुक्राय० । शनैश्चराय० । राहवे० । केतवे० ।

अश्विन्याद्यष्टाविंशतिनक्षत्रेभ्यः० । प्रतिपदादिषोडशतिथिभ्यः० । मेषादिद्वादशराशिभ्यः० ।

एकविंशतित्रिकोणमण्डलस्य चतुर्दिक्षु—पृथिव्यै० । स्कन्दाय० । गणेशाय० । दुर्गायै० ।

एकविंशतित्रिकोणेषु—मङ्गलाय० । भूमिपुत्रा० । ऋणहर्त्रे० । धनप्रदाय० । स्थिरासनाय० । महाकायाय० । सर्वकर्मावरोधकाय० । लोहिताय० । लोहिताक्षाय० । सामगानां कृपाकराय० । धरात्मजाय० । कुजाय० । भौमाय० । भूतिदाय० । भूमिनन्दनाय० । अङ्गारकाय० । यमाय० । सर्वरोगापहारकाय० । वृष्टिकर्त्रे० । अपहर्त्रे० । सर्वकर्मफलप्रदाय० । त्रिकोणमध्येषु मङ्गलाय सायुधाय सपरिवाराय सवाहनाय नमः । अथ प्रतिष्ठा—"एतन्ते०" "मनोजूतिः०" इत्यन्ते ॐ भूर्भुवःस्वः सपरिवार भौमदेव इहागच्छ इह तिष्ठ सुप्रतिष्ठितो वरदो भव । अथ ध्यानम्

बालार्कारुणविग्रहं परिलसद्बन्धूकवस्त्रावृतं
स्वाहाशक्तियुतं सुरक्तनयनं युक्तं चतुर्भिर्भुजैः ।
शक्तिं शूलमथो गदां च विमलां निस्त्रिंशमाबिभ्रतं
भक्तानुग्रहकारिणं धरणिजं ध्यायेत्स्वहृत्पङ्कजे ॥

ॐ ह्रीं श्रीं म्लौं मङ्गलाय नमः ॐ अङ्गारकाय विद्महे

शक्तिहस्ताय धीमहि । तन्नो भौमः प्रचोदयात् ।

आवाहनम्—

भूमिपुत्रं महाबाहुं सर्वेषां च वरप्रदम् ।
सर्वदुःखहरं देवं भौममावाहयाम्यहम् ॥

आसनम्—

सुवर्णक-पटन्यस्तं नानारत्नविभूषितम् ।
आसनं च मया दत्तं गृहाण ऋणमोचन ॥

पाद्यम्—

स्वर्गङ्गोदकमेतत्तु सुवर्णकलशाहृतम् ।
पाद्यार्थं च मयाऽऽनीतं धनदातर्नमोऽस्तु ते ॥

अर्घ्यम्—

मन्दाकिनीजलं चैव नानागन्धसमन्वितम् ।
अर्घ्यं गृहाण देवेश मङ्गलाय नमोऽस्तु ते ॥

मूलेनाचमनं मधुपर्कं च दद्यात् । ततः पञ्चामृतस्नानम्—

गव्यमाज्यं दधि सर्पिः शर्करा पञ्चमं मधु ।
एकत्र नीतं विज्ञेयं दिव्यं पञ्चामृतं महत् ॥

शुद्धोदकस्नानम्—

गङ्गाजलं समानीतं नानागन्धसमन्वितम् ।
स्नानार्थं धरणीसूनो त्वं गृहाण नमोऽस्तु ते ॥

मूलेन स्नानाङ्गमाचमनीयम् । वस्त्रम्—

दिव्यं क्षौममयं देव वरदो भव भूमिज ।
रक्तवस्त्रं गृहाणेदं भौम स्कन्दसमप्रभ ॥

वस्त्राङ्गमाचमनम् । यज्ञोपवीतम्—

ब्रह्मविष्णुमहेशाननिर्मितं ब्रह्मसूत्रकम् ।
उपवीतं सोत्तरीयं गृहाण धरणीसुत ॥

यज्ञोपवीताङ्गमाचमनम् । भूषणम्—

रत्नैरनेकैः खचितं भूषणं कनकोज्ज्वलम् ।
स्वभावसुन्दरेशान मत्प्रीत्या प्रतिगृह्यताम् ॥

गन्धः—

श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
अनुलेपनकं देव रक्तचन्दनसंयुतम् ॥
गृह्यतां धरणीसूनो वरदो भव मे प्रभो ।

अक्षताः—

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः ।
मया निवेदिता भक्त्या गृहाण धरणीसुत ॥

पुष्पाणि-

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
गृहाण धरणीसूनो मत्प्रीत्या त्वं नमोऽस्तु ते ॥

धूपः—

वनस्पत्युद्भवो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

एकविंशतिदीपाः—

शश्वत्कर्पूरसुरभीकृतवर्तिसुसंस्कृतान् ।
दीपान् गृहाण मे भौम एकविंशतिसंख्यकान ॥

नैवेद्यम्—

नैवेद्यं गृह्यतां देव गुडौदनसमन्वितम् ।
नानाभक्ष्यसमायुक्तं संशुद्धं धरणीधर ॥

मूलमन्त्रेण मध्येपानीयम् । क्षणं ध्यात्वा यथाशक्ति मूलमन्त्रं प्रजप्य नैवेद्यमुद्रास्य मूलेन पुनराचमनीयम् । करोद्वर्तनार्थे चन्दनम् । फलम्-इदं फलं० । ताम्बूलम्—

लवङ्गचूर्णखदिरपूगैलादिविमिश्रितान् ।
ताम्बूलान् सफलान देव गृहाण धरणीसुत ॥

एकविंशतिनमस्कारान् प्रदक्षिणां च समर्प्य रक्तगन्धाक्षतपुष्पफलसंयुतमर्घ्यं गृहीत्वा—

भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिने ।
धनार्थी त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते ॥

भूमिपुत्र महाकाय भक्तानां भूतिवर्धन।
गृहाणार्घ्यं मया दत्तं मम स्वस्तिकरो भव॥
प्रसीद देवदेवेश विघ्नहन्तर्धरात्मज।
गृहाणार्घ्यं मया दत्तं भूमिपुत्र नमोऽस्तु ते॥

इति दद्यात्। नीराजनम्—अन्तस्तेजः०। पुष्पाञ्जलिः—राजाधिराजाय०। प्रार्थना—

कुमार भूतिदं देवं धनदं च ऋणापहम्।
व्रजामि शरणं भौमं सर्वसिद्धिप्रदायकम्॥
अङ्गारक महीपुत्र भगवन्भक्तवत्सल।
नमस्तेऽस्तु ममाशेषमृणमाशु विमोचय॥
धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम्।
कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम्॥
ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः।
भयरोगमनस्तापा नश्यन्तु मम सर्वदा॥
भूमिपुत्र दयासिन्धो दुःखशोकविनाशन।
सुखं देहि धनं देहि त्वामहं शरणं गतः॥

अथ वायनदानम्—तिलगुडमिश्रितान् एकविंशतिमोदकान्गुडगोधूमविनिर्मितान् वा फलताम्बूलदक्षिणोपेतान् दद्यात्—

क्षीराज्याज्यगुडैर्युक्तं मोदकं तिलपिष्टजम्।
सताम्बूलफलद्रव्यं गृहाण ऋणमोचन॥
मङ्गलाय नमस्तुभ्यं सर्वमङ्गलकारक।
वायनेन च सन्तुष्टस्त्वं मे कामान् प्रपूरय॥ इति।

ततः 'आवाहनं न जानामि०' 'मन्त्रहीनं०' इति च पठित्वा देवं विसृज्य कर्मेश्वरार्पणं कुर्यात्।

इति भौमवारव्रतपूजाप्रयोगः॥

अथ भौमवारव्रतोद्यापनप्रयोगः—तत्रोद्यापनकर्ता एकविंशतिभौमवासरेषु व्रतमनुष्ठाय द्वाविंशे भौमवारे पूर्वोक्तविधिना स्नानार्घदानादिकं नद्यादौ विधाय गृहानागत्य सुलिप्तायां सुभूषितायां भूमौ अष्टहस्तप्रमाणं मण्डपं सुशोभितं सवितानं विधाय तत्र हस्तमात्रस्थण्डिले रक्ततण्डुलैरेकविंशतित्रिकोणात्मकं सनामकं मण्डलं निर्माय प्रतिमाकलशादिसामग्रीं मण्डपसमीपे निधाय प्राङ्मुख उदङ्मुखो वा स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य स्वस्तिवाचनपूर्वकं गणेशपूजनं कुर्यात्। तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं करिष्यमाणभौमवारव्रतोद्यापनकर्मणि निर्विघ्नतया कार्यसिद्ध्यै श्रीमद्भगवतो गणेशस्य यथामिलितोपचारैः पूजनं करिष्ये। इति सङ्कल्प्य यथाविधि गणेशं संपूज्य सामान्यार्घ्यादिविशेषार्घ्यस्थापनान्तं कृत्वा प्रधानसंकल्पं कुर्यात्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम ऐहिकामुष्मिकऋणापाकरणपूर्वकधनपुत्रादिसर्वकामावाप्तये कृतस्य भौमवारव्रतस्य साद्गुण्यार्थं साङ्गफलप्राप्तये च उद्यापनं करिष्ये। तत्पूर्वाङ्गत्वेनेत्यादि आचार्यब्रह्मवरणान्तमनुष्ठाय घटप्रतिग्रहार्थमेकविंशतिब्राह्मणान् वृणुयात्। तद्यथा–ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहमस्मिन् भौमवारव्रतोद्यापनकर्मणि कर्मसाद्गुण्यकरैकविंशतिघटप्रतिग्रहार्थं मङ्गलादिप्रतिरूपकैकविंशतिब्राह्मणानां पूजनपूर्वकं वरणं करिष्ये। एकविंशतिसंख्याकान् उत्तमान् ब्राह्मणान् उत्तरवृद्ध्या आसनेषूपवेश्य संपूज्य वरणसामग्रीं करयोः कृत्वा प्रथमं ब्राह्मणं वृणुयात्—एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतवासोभिः भो ब्रह्मन् मङ्गलप्रतिरूपकं त्वामहं वृणे इति। वृतोऽस्मीति प्रत्युक्तिः। एवमग्रेऽपि भूमिपुत्रप्रतिरूपकम् ऋणहर्तृप्रतिरूपकमित्यादि। ततो यजमानः कलशं

संस्थाप्य स्थण्डिलोपरि रक्ततण्डुलानिर्मिते मण्डले सुवर्णनिर्मित- प्रतिमायां श्रीभौमदेवस्य पूजनं कुर्यात्। तत्र सङ्कल्पः—ॐ विष्णुः ३ अद्येहेत्याद्यमुकोऽहं सर्वऋणापाकरणपूर्वकधनपुत्राद्यभिवृद्धये कृतस्य भौमवारव्रतस्य साङ्गफलप्राप्तये क्रियमाणेऽस्मिन् उद्यापनकर्मणि सुवर्णप्रतिमायां लिखितमण्डले च श्रीभौमदेवस्य यथामिलितोपचारैः पूजनं करिष्ये। तत्पूर्वाङ्गत्वेन कवचन्यासादिकं च करिष्ये। ततः सर्वं यथाक्रमं पूर्वोक्तविधानेन पुष्पपूजान्तं विधाय अङ्गपूजां कुर्यात्——

मङ्गलाय नमः पादौ पूजयामि। भूमिपुत्राय० गुह्यं०। ऋणहर्त्रे० नाभिं०। धनप्रदाय० हृदयं०। स्थिरासनाय० आसनं०। महाकायाय० वक्षः०। सर्वकर्मावरोधकाय० बाहू०। लोहिताय० हस्तौ०। लोहिताक्षाय० कण्ठं०। सामगानां कृपाकराय० मुखं०। धरात्मजाय० नासिकां०। कुजाय० नेत्रे०। भौमाय० ललाटं०। भूतिदाय० भ्रुवौ०। भूमिनन्दनाय० शिरः०। अङ्गारकाय० शिखां०। यमाय० कवचं०। सर्वरोगापहारकाय० अस्त्रं०। वृष्टिकर्त्रे० आकाशं०। अपहर्त्रे० अधः०। सर्वकर्मफलप्रदाय० सर्वाङ्गं०। ॐ ह्रीं श्रीं क्लौं मं मङ्गलाय नमः मम ऋणापनोदं कुरु कुरु धनं मे देहि देहि सर्वमनोरथान् साधय साधय क्लौं क्लीं ह्रीं ऐं ॐ स्वाहा। इति पुष्पाञ्जलिं समर्प्य धूपादिप्रार्थनान्तं पूर्ववद्विदध्यात्। ततश्चतुःश्लोकिमङ्गलस्तोत्रपाठं कुर्यात्—

अस्य श्रीमङ्गलस्तोत्रस्य ब्रह्मा ऋषिः, त्रिष्टुप् छन्दः, अङ्गारको देवता, अभीष्टसिद्धये पाठे विनियोगः।

अङ्गारकोऽतिबलवानधिको ग्रहाणां
स्वेदोद्भवस्त्रिनयनस्य पिनाकपाणेः।

यो रक्तचन्दनसुशीतलवारिपुष्पै-
रभ्यर्चितोऽर्थमतुलं प्रददाति सद्यः ॥ १ ॥
भौमो धरात्मज इति प्रथितः पृथिव्यां
रोगापहो दुरितशोकतमोपहन्ता ।
हर्ता ऋणस्य धनदश्च भवेन्ममासौ
संपूजितः सकलमङ्गलवासरेषु ॥ २ ॥

एकेन हस्तेन गदां बिभर्ति त्रिशूलमन्येन कुजः करेण ।
यः शक्तिमन्येन वरं दधाति चतुर्भुजो मङ्गलनामधेयः ॥ ३ ॥
ग्रहः सदा यच्छतु वाञ्छितं मे धर्मार्थकामादिसुखं प्रसूते ।
कलत्रपुष्पैर्न सदाऽवियोगं समानतां देहसुखं च नित्यम् ॥४॥इति।

ततो गीतवाद्यनृत्यस्तोत्रपाठादिना तां रात्रिं निनीय द्वितीयेऽहनि प्रभाते कृतनित्यक्रियो देवं पुनः संपूजयेत् । तत आचार्यो मण्डपाग्निभागे स्थण्डिले पञ्चभूसंस्कारपूर्वकमाग्निस्थापनं कुर्यात् । अग्नेरीशाने कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य संपूज्य ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म कृत्वा यजमानेन द्रव्यत्यागसंकल्पं कारयेत्—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं भौमवारव्रतोद्यापनहोमकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोमं चाज्येन भौमं रक्तचन्दनाज्यद्रव्येण "अग्निर्मूर्धा०"(१) इति मन्त्रेण अष्टोत्तरशतसंख्याकाहुतिभिः नवग्रहान् तिलयवाज्येन अष्टाष्टसंख्याकाहुतिभिः, अग्निं स्विष्टकृतं च हुतशेषेण मण्डलदेवताश्च तत्पक्षे प्रत्येकमेकैकयाऽऽहुत्या आज्येन अग्निं, वायुं, सूर्यम् , अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं मरुतः स्वर्कान् , वरुणं, प्रजापतिं चाज्येन यक्ष्ये । एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् । ॐ तत्स-

(१) ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपा ँ रेता ँ सि जिन्वति ॥ ( य० सं० अ० ३।१२ ) ।

त् यथादेवतमस्तु न मम । ततो ब्रह्मणाऽन्वारब्ध आचार्य आघारावाज्यभागौ च हुत्वा द्रव्यदेवताऽभिध्यानवत्सर्वं होमं विधाय होमसाङ्गतां पूर्णाहुतिं चानुष्ठाय कर्मशेषं समापयेत् ।

ततो यजमानः उत्तराङ्गत्वेन देवं संपूज्य क्षमाप्य विसर्जयेत् । ततः कुम्भाद्युपस्करसहितां प्रतिमामाचार्याय दद्यात् । तत्र संकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं कृतस्य भौमवारव्रतोद्यापनकर्मणः साङ्गतासिद्धये साद्गुण्यार्थं च सुपूजितामिमां सौवर्णीमारक्तवस्त्राद्युपस्करसहितां भौमप्रतिमामाचार्याय दास्ये इत्याचार्यं संपूज्य दद्यात् । तत एकविंशतिकुम्भदानसंकल्पः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं व्रतसम्पूर्तिहेतून् सुपूजितानिमान् एकविंशतिकुम्भान् फलपक्वान्नसुवर्णोपेतान् श्रीभौमदेवप्रीतये पूर्ववृतमङ्गलादिब्राह्मणेभ्यो दास्ये । इति ब्राह्मणान्संपूज्य उत्तरवृध्या यथाक्रमं दद्यात् । ततो गोदानं विधाय भूयसीं दक्षिणां दत्त्वा ब्राह्मणभोजनं संकल्प्य एकविंशतिब्राह्मणान् आचार्यादींश्च संभोज्य तदनुज्ञया स्वयमपीष्टबन्धुभिः सह भुञ्जीत इति ।

इति भौमवारव्रतोद्यापनप्रयोगः।

वस्वष्टनिधिचन्द्रेऽब्दे माघे शुक्ले गुरोर्दिने ।
पञ्चम्यां पूर्तिमगमद्वर्षकृत्यप्रदीपकः ॥ १ ॥

श्रीरस्तु



# महामहोपाध्याय पण्डित नित्यानन्दपन्त पर्वतीय विरचिताः कर्मकाण्डग्रन्थाः ।

१. संस्कारदीपकः—

(१) गणेशपूजादिग्रहयागान्त—पूर्वाङ्गनिरूपणात्मकः प्रथमो भागः ।

(२) विवाहगर्भाधानादिकेशान्तान्तसंस्कारनिरूपणात्मको द्वितीयो भागः ।

(३) तुलादानादि—मूलशान्त्यादिनिरूपणात्मकः तृतीयो भागः ।

संपूर्णग्रन्थस्य भागत्रयात्मकस्य मूल्यम् ६।)

२. कातीयेष्टिदीपकः। (दर्शपौर्णमासपद्धतिः) मूल्यम् १)

३. अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितप्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः । मूल्यम् १॥)

४. वर्षकृत्यदीपकः सामान्यविशेषकालनिर्णयसहितवार्षिकसकलव्रतपूजातदुद्यापननिरूपणात्मकः । मूल्यम् ३॥)

प्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।